3.02



# लघुकाशिका

(पाणिनीयाष्टकस्य काशिकावृत्तेः सरलसंस्करणम्)

## प्रथमो भागः

(भाषाऽनुवादसहितः प्रथमोऽध्यायः)


रचयिता

**डॉ० जयदत्त उप्रेती**

[व्याकरण-दर्शनाचार्यः, एम०ए०, (लब्धस्वर्णपदकः), डी० फिल्०]

उपाचार्यः, संस्कृतविभागाध्यक्षश्च,

कुमाऊँ विश्वविद्यालय परिसरः, अल्मोड़ा,

(उ० प्र०) २६३६०१






**ईस्टर्न बुक लिंकर्स**

**दिल्ली : : (भारत)**



# लघुकाशिका

(पाणिनीयाष्टकस्य काशिकावृत्तेः सरलसंस्करणम्)

## प्रथमो भागः

(भाषाऽनुवादसहितः प्रथमोऽध्यायः)


रचयिता

**डॉ० जयदत्त उप्रेती**

[व्याकरण-दर्शनाचार्यः, एम०ए०, (लब्धस्वर्णपदकः), डी० फिल्०]

उपाचार्यः, संस्कृतविभागाध्यक्षश्च,

कुमाऊँ विश्वविद्यालय परिसरः, अल्मोड़ा,

(उ० प्र०) २६३६०१






**ईस्टर्न बुक लिंकर्स**

दिल्ली : : (भारत)

प्रकाशक:

**ईस्टर्न बुक लिंकर्स**

५८२५, न्यू चन्द्रावल, जवाहर नगर,

दिल्ली-११०००७.

भाद्रपदी पूर्णिमा, १४ सं० २०५० वि०

१९९३ ई०

द्वितीयावृत्ति:

मूल्यम् ४५) रु०



मुद्रक:

**आर० आर० प्रिंटर्स**

X-३७, गली नं० २, ब्रह्मपुरी, दिल्ली-११००५३

# समर्पणम्

साहित्याचार्य-काव्यतीर्थ-एम०ए० इत्युपाधिभाजां
पूज्यपादानां गुरुवर्य्याणां श्रीमतां वीरेन्द्र
शास्त्रि [अग्निहोत्रि] महाभागानां
क र क म ले षु
येषां
कृपा-प्रसादादेवान्ते-
वासितां प्राप्याहमादौ देव-
वाणीमध्येतुं प्रवृत्तोऽभवमग्रे च
तत्राऽध्ययनाध्यापनादिक्षमतां प्राप्नुवम् ।

तत्रैव महर्षिपाणिनिनिबद्धसूत्रक्रमानुसारम् (पाणिनीयाष्टकक्रमेणेति यावत्) अध्येतारश्छात्रास्तु स्वल्पप्रयासेनैव व्याकरणमर्मज्ञा जायन्ते। तेषां मेधावृद्धिस्तथा भारतीयसमाजशास्त्रावगतिश्च भवति-इत्यादि बहुविषयज्ञानेन सहैव स्वयं सूत्रवृत्तिनिर्माणप्रतिभाप्रकर्षश्चोपलभ्यते। इत्याद्यपि तत्रैव विवृत विद्यते। तथाहि—

"पाणिनेः पद्धतिर्माङ्गली सम्मता वृद्धिरादैजहो ! वृद्धिरादौ मता।
तद्दिशा पाठको वृद्धिमासेवते शश्वमेवार्षबुद्धिः सुधीर्जायते ॥ १ ॥
समाजशास्त्रावगतिसंवेदितस्तथेतिहासादिनयादि बुध्यते।
न केवलेयं पद्धसिद्धिसंहिता द्विजत्वसम्पादनसञ्चिकाद्भुता ॥ २ ॥

इत्येवं मया बहुत्र स्वग्रन्थेषु नव्यव्याकरणाध्ययने दोषाः, प्राचीनव्याकरणाध्ययने गुणाः प्रदर्शिताः सन्ति। ते तु तत एव ज्ञेयाः। सर्वप्रथमं प्रक्रियाग्रन्थनिर्माता बौद्ध महापण्डितो धर्मकीर्तिस्तु पदे पदे पाणिनिमुनिमनुसरति; सूत्रवृत्तिनिर्माणे सूत्रक्रममुपदिशति। स हि पाणिनीयाऽष्टकघोषणानन्तरमेव स्वीयं रूपावतारग्रन्थं पठितुं पाठयितुञ्चानुजानाति। नास्ति तस्याष्टाध्यायी-घोषणनिषेधे तात्पर्यम्। प्रत्युत सोऽष्टकघोषणनिदानमेव रूपावतारमर्मज्ञत्वं निर्दिशति। इयं दोषबहुलाऽवैज्ञानिकी च नव्यव्याकरणाध्यापनपद्धतिर्विनाऽष्टकघोषणं सूत्रवृत्तिघोषणपूर्विका तु अग्रे समागत्य नव्यव्याकरणाध्यापकपण्डितप्रमादात् प्रचलितेति प्रतिभाति।

अस्तु, सम्प्रति श्रीजयदत्त उप्रेतिमहोदयेनेमां पाणिनीयपद्धतिं समुद्धरता तत्र सारल्य सौविध्यञ्चानयता व्याकरणाऽध्येतॄणां छात्राणां महानुपकारः कृत इति भूयो भूयस्तस्मै साधुवादं वितीर्य्य विरमति विस्तरात् प्राचीनव्याकरणपद्धतेः सेवकोऽयम्—

श्री गोपाल शास्त्री (दर्शनकेसरी)
प्रधानाचार्य्यः, श्रीबदरीनाथ-वेदवेदाङ्ग
महाविद्यालयस्य, ज्योतिर्मठस्य

सौ० १४।४।२०२३ वै०
(२९-६-१९६६ ई०)

# भूमिका

## (प्रथम संस्करणस्था)

"श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाऽभिज्वलित आकाशदेशः शब्दः।" (महाभाष्यम्) इत्यत्र शब्दस्य यत्स्वरूपं व्याख्यातं भाष्यकारेण भगवता पतञ्जलिना तस्य माहात्म्यमेवमुक्तमाचार्य्येण भर्तृहरिणा—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥" (वाक्यपदीयम्) इति। एते शब्दा एव लौकिकैः केनचिन्नियम-विशेषेण वाक्ये प्रयुज्यमाना भाषापदभाजो भवन्तीत्यतिरोहितं मनीषिणाम्। संस्कृतभाषा विश्वस्य भाषासु स्वीयमद्वितीयं स्थानं बिभर्ति। यद्यप्यनेक-कारणैस्तादृशः प्रचारोऽस्या अद्यत्वे न विद्यते यादृश इदानीन्तनानां हिन्दी-आंग्लप्रभृतिभाषाणामस्ति, तथापीयं सर्वथा सर्वदा च समर्थैव तिष्ठति; कदा-चिदपि संसाराल्लयं न गच्छति। काऽप्यपूर्वताऽस्यां विद्यते। अहो ! बहूनि रत्नानि खल्वस्यां सन्ति येभ्यः समाजः सदैव स्पृहयति। अद्भुतानि सुभाषित-रत्नानि, विविधा विद्याः, (यास्वाध्यात्मिकी मूर्धन्यतमाऽस्ति) सुख समृद्धि-शालिनः समाजस्य, मनुष्याणामैहिकामुष्मिकक्षेमाऽभ्युदयस्य चोत्तमोपाया यादृशा अत्र विहिता विद्यन्ते तादृशाः क्वापि न दृश्यन्ते। अतो 'यदिहास्ति तदन्यत्र, यन्नेहास्ति न तत् क्वचिद्' इत्युक्तिः संस्कृतभाषासाहित्यविषये सुतरां सङ्गच्छते। अतो वै आत्मनः परस्य वा कल्याणमीप्सुभिरवश्यमेषा पठनीया सम्भाषणीया च।

परस्सहस्त्रवर्षप्राक्तनीयं भाषा भारतीयैः पण्डितैः केनोपायेनाद्यपर्यन्तं यथातथ्यतः सुरक्षिता ? तदेतत् को जानाति ? प्रधानोपायस्त्वत्राध्ययनाध्या-पनसम्प्रदायाऽनवच्छेद एव। संस्कृतमध्येतुं गतेषु द्वित्रेषु सहस्त्राब्देषु पाणिनी-याष्टाध्यायी (व्याकरणशास्त्रग्रन्थः) यथाऽऽश्रयं लब्धवती जनौघे न तथाऽन्यः कश्चिद् ग्रन्थः। न चेन्महर्षिः पाणिनिरष्टाध्यायीं तदानीं प्राणेष्यत् नतरां खलु संस्कृतमद्य यावज्जीवितुं प्राभविष्यत्। अतोऽत्र कथने नास्ति कोऽपि सन्देहः पक्षपातो वा यत् संस्कृत भाषायाः (वैदिकलौकिकोभयविधायाः) संरक्षणाय महत्तमः प्रयासस्तत्र भगवतः पाणिनेराचार्य्यस्यैव। एवं स्थिते सर्वे वयं कारुणिकेन तेन मुनिना अनुगृहीताः स्मः।

(लघुकाशिका —प्रथम भाग (प्रथम संस्करण) के सम्बन्ध में काशीपण्डित-सभाध्यक्ष म० म० श्रीगोपालशास्त्री 'दर्शनकेसरी' जी की सम्मति)

# शुभाशंसा

श्रीजयदत्त उप्रेतिना प्राचीनव्याकरण-दर्शनाचार्य्येण अल्मोड़ानिवासिना वर्त्तमानकाले श्रीबदरीनाथ-वेद-वेदाङ्ग-महाविद्यालये प्रधानव्याकरणाध्यापकेन सरलतया लिखिता लघुकाशिकाऽद्य मया साद्यन्तमवलोकिता। पुस्तकमिदं पूर्वमध्यमापरीक्षार्थिनां छात्राणां कृते लिखितमस्ति यतो हि तत्र परीक्षायां प्रथमावृत्तिमात्रो ग्रन्थभागो निर्धारितोऽस्ति। तावान् भागश्छात्राणां कृते सुदुर्लभ आसीदद्य तु सोऽभावो ग्रन्थेनानेन दूरीकृतोऽभूत्।

ग्रन्थस्यास्य वैशिष्ट्यं तु स्वयं ग्रन्थकृता भूमिकायां निबद्धमस्ति। तत्र विषये मे नास्ति बहुवक्तव्यस्यप्रयोजनम्। अहन्तु ग्रन्थस्यास्य सारल्यमपूर्वं सूत्रानुवृत्तिप्रकारं समासादिनिर्देशं सूत्रवृत्तिनिर्माणेन सहोदाहरणप्रयोगसाधनप्रक्रियां च विलोक्य चमत्कृतोऽस्मि, यल्लघुकाशिकेति ग्रन्थनामसमन्वयता ग्रन्थकृता महानुपकारः सम्पादितः प्राचीनव्याकरणाध्यायिनां परीक्षार्थिनाम्।

ग्रन्थमिममधीत्य छात्रा व्याकरणरहस्यज्ञाः स्युरिति स्फुटं प्रतीयते। सम्प्रति पाणिनीयव्याकरणस्याध्ययनं लघुकौमुदीसिद्धान्तकौमुदीमार्गेण यद् भवति तद्धि व्याकरणाध्ययने बहुकाठिन्यमासज्जयति, यतो हि सूत्रेण सह सूत्रवृत्तिघोषणं तत्रावश्यकम्। नव्यव्याकरणाध्येतारश्छात्राः क्रमसूत्राध्ययनं कर्त्तुं न पारयन्ति। तत्र सूत्रक्रमं विहाय लक्ष्यप्राधान्यं विन्यस्य ते ग्रन्था विनिर्मिताः सन्ति। मया हि बहुशः पाणिनीयप्रशस्तिप्रभृतिपुस्तकेषु साम्प्रतिकनव्यव्याकरणाध्ययनाध्यापनदोषः प्रदर्शितो विद्यते। तथाहि मनागिहापि निर्दिश्यते—

"निष्क्रमा पाठरीतिः कथञ्चालिता, बालबुद्धि 'हंलन्त्यम्' पुरोप्राहिता।
वृत्तिघोषः स्मृतिं नाशयत्यादितः, कूपमण्डूकतामर्पयत्यन्ततः॥ १॥
काठिन्यवृद्धिः क्रमसूत्रलोपान्मेधाविनाशोऽपि च वृत्तिघोषात्।
हा! निष्क्रमा रीतिभूतपूर्वा महर्षिशिक्षोत्तमसत्पदूर्वा"॥ २॥ इत्यादि।

तत्रैव महर्षिपाणिनिनिबद्धसूत्रक्रमानुसारम् (पाणिनीयाष्टकक्रमेणेति यावत्) अध्येतारश्छात्रास्तु स्वल्पप्रयासेनैव व्याकरणमर्मज्ञा जायन्ते। तेषां मेधावृद्धिस्तथा भारतीयसमाजशास्त्रावगतिश्च भवति-इत्यादि बहुविषयज्ञानेन सहैव स्वयं सूत्रवृत्तिनिर्माणप्रतिभाप्रकर्षश्चोपलभ्यते। इत्याद्यपि तत्रैव विवृतं विद्यते। तथाहि—

**"पाणिनेः पद्धतिर्माङ्गली सम्मता वृद्धिरादैजहो ! वृद्धिरादौ मता।**
**तद्दिशा पाठको वृद्धिमासेवते शब्रमेवार्षबुद्धिः सुधीर्जायते॥ १॥**
**समाजशास्त्रावगतिर्भवेदितस्तथेतिहासादिनयादि बुध्यते।**
**न केवलेयं पद्धसिद्धिसंहिता द्विजत्वसम्पादनसञ्चिकाद्भुता॥ २॥**

इत्येवं मया बहुत्र स्वग्रन्थेषु नव्यव्याकरणाध्ययने दोषाः, प्राचीन-व्याकरणाध्ययने गुणाः प्रदर्शिताः सन्ति। ते तु तत एव ज्ञेयाः। सर्वप्रथमं प्रक्रियाग्रन्थनिर्माता बौद्ध महापण्डितो धर्मकीर्तिस्तु पदे पदे पाणिनिमुनिमनु-सरति; सूत्रवृत्तिनिर्माणे सूत्रक्रममुपदिशति। स हि पाणिनीयाष्टकघोषणान-न्तरमेव स्वीयं रूपावतारग्रन्थं पठितुं पाठयितुञ्चानुजानाति। नास्ति तस्या-ष्टाध्यायी-घोषणनिषेधे तात्पर्यम्। प्रत्युत सोऽष्टकघोषणनिदानमेव रूपावता-रमर्मज्ञत्वं निर्दिशति। इयं दोषबहुलाऽवैज्ञानिकी च नव्यव्याकरणाध्यापन-पद्धतिर्विनाऽष्टकघोषणं सूत्रवृत्तिघोषणपूर्विका तु अग्रे समागत्य नव्यव्याकरणा-ध्यापकपण्डितप्रमादात् प्रचलितेति प्रतिभाति।

अस्तु, सम्प्रति श्रीजयदत्त उप्रेतिमहोदयेनेमां पाणिनीयपद्धतिं समुद्ध-रता तत्र सारल्य सौविध्यञ्चानयता व्याकरणाऽध्येतॄणां छात्राणां महानुपकारः कृत इति भूयो भूयस्तस्मै साधुवादं वितीर्य्य विरमति विस्तरात् प्राचीन-व्याकरणपद्धतेः सेवकोऽयम्—

**श्री गोपाल शास्त्री (दर्शनकेसरी)**

सौ० १४।४।२०२३ वै०
(२९-९-१९६६ ई०)

प्रधानाचार्य्यः, श्रीबदरीनाथ-वेदवेदाङ्ग
महाविद्यालयस्य, ज्योतिर्मठस्य

# भूमिका

## (प्रथम संस्करणस्था)

"श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाऽभिज्वलित आकाशदेशः शब्दः।" (महाभाष्यम्) इत्यत्र शब्दस्य यत्स्वरूपं व्याख्यातं भाष्यकारेण भगवता पतञ्जलिना तस्य माहात्म्यमेवमुक्तमाचार्य्येण भर्तृहरिणा—

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥" (वाक्यपदीयम्) इति। एते शब्दा एव लौकिकैः केनचिन्नियमविशेषेण वाक्ये प्रयुज्यमाना भाषापदभाजो भवन्तीत्यतिरोहितं मनीषिणाम्। संस्कृतभाषा विश्वस्य भाषासु स्वीयमद्वितीयं स्थानं बिभर्ति। यद्यप्यनेककारणैस्तादृशः प्रचारोऽस्या अद्यत्वे न विद्यते यादृश इदानीन्तनानां हिन्दी-आंग्लप्रभृतिभाषाणामस्ति, तथापीयं सर्वथा सर्वदा च समर्थैव तिष्ठति; कदाचिदपि संसाराल्लयं न गच्छति। काऽप्यपूर्वताऽस्यां विद्यते। अहो! बहूनि रत्नानि खल्वस्यां सन्ति येभ्यः समाजः सदैव स्पृहयति। अद्भुतानि सुभाषितरत्नानि, विविधा विद्याः, (यास्वाध्यात्मिकी मूर्धन्यतमाऽस्ति) सुख समृद्धिशालिनः समाजस्य, मनुष्याणामैहिकामुष्मिकक्षेमाऽभ्युदयस्य चोत्तमोपाया यादृशा अत्र विहिता विद्यन्ते तादृशाः क्वापि न दृश्यन्ते। अतो 'यदिहास्ति तदन्यत्र, यन्नेहास्ति न तत् क्वचिद्' इत्युक्तिः संस्कृतभाषासाहित्यविषये सुतरां सङ्गच्छते। अतो वै आत्मनः परस्य वा कल्याणमीप्सुभिरवश्यमेषा पठनीया सम्भाषणीया च।

परस्सहस्रवर्षप्राक्तनीयं भाषा भारतीयैः पण्डितैः केनोपायेनाद्यपर्यन्तं यथातथ्यतः सुरक्षिता? तदेतत् को जानाति? प्रधानोपायस्त्वत्राध्ययनाध्यापनसम्प्रदायाऽनवच्छेद एव। संस्कृतमध्येतुं गतेषु द्वित्रेषु सहस्राब्देषु पाणिनीयाष्टाध्यायी (व्याकरणशास्त्रग्रन्थः) यथाऽऽश्रयं लब्धवती जनौघे न तथाऽन्यः कश्चिद् ग्रन्थः। न चेन्महर्षिः पाणिनिरष्टाध्यायीं तदानीं प्राणेष्यत् नतरां खलु संस्कृतमद्य यावज्जीवितुं प्राभविष्यत्। अतोऽत्र कथने नास्ति कोऽपि सन्देहः पक्षपातो वा यत् संस्कृतभाषायाः (वैदिकलौकिकोभयविधायाः) संरक्षणाय महत्तमः प्रयासस्तत्र भगवतः पाणिनेराचार्य्यस्यैव। एवं स्थिते सर्वे वयं कारुणिकेन तेन मुनिना अनुगृहीताः स्मः।

तस्याचार्य्यस्य पञ्चधाभिन्नेष्वष्टाध्यायीधातूणादिगणलिंगानुशासन-पाठेषु नैकैराचार्य्यैस्तदर्वागभूतैर्भाष्यवृत्यादिरूपेण व्याख्याग्रन्था विरचिताः। तेषु तत्र भवान् पतञ्जलिर्मुनिर्महाभाष्यस्य, कात्यायनो मुनिश्च वार्त्तिकानां प्रणेतारौ मूर्धन्यौ बभूवतः। तदनु कुणिरवोभूतिप्रभृतिभिराचार्य्यैरष्टाध्यायी-वृत्तयः प्रणीताः। किन्तु ताः करालेन कालेनाऽकालेऽकरुणं कवलिता इत्यतो नाममात्रमेतेषां स्मर्यंते। ततश्च वाक्यपदीयमहाभाष्यटीकादिग्रन्थकृद्भर्तृहरि-राचार्य्यः, काशिकावृत्तिकृतौ जयादित्यवामना वाचार्य्यौ च प्राचीनाः वयाकरणाः। एतैः सर्वैः पाणिनिपद्धत्या व्याकरणाध्ययनस्य प्रचारः कृतः।

अत उत्तरं व्याकरणे प्रक्रियाग्रन्थानामाविर्भावोऽभूत्। तत्र धर्मकीर्तेः रूपावतारः, रामचन्द्रस्य प्रक्रियाकौमुदी भट्टोजिदीक्षितस्य सिद्धान्तकौमुदी च निदर्शनानि। एतैर्नवीनैराचार्य्यैर्व्याकरणशास्त्रस्याध्ययनपरम्परा परिवर्तिता। व्याकरणं सरलतरमभूत्वा दुरूहं क्लिष्टतरञ्चाभवत्। पाठस्य यः क्रमोऽष्टा-ध्याय्यामासीत् स तेषां ग्रन्थानामाविर्भावात् शनैः शनैः रसातलं प्राप्नोत्। सिद्धान्तकौमुद्या अतिशयेन प्रचारादष्टाध्यायी लुप्तेवाभूत्। तत्र मुख्यं कारण-मेतदासीत् कौमुद्यां तत्तत् प्रयोगसिद्धये समाश्रितसूत्राणामुपरि या वृत्तयो लिखितास्तासु सूत्रान्तरेभ्योऽनुवर्तमानानां पदानामधिकारानुवृत्तिप्रदर्शनं नैव कृतम्। तस्य कालान्तरेऽयं परिणामोऽभूद्यदनपेक्ष्याऽष्टाध्यायीति कृत्वाऽध्येता-रस्यां त्यक्तवन्तः। ततश्चेदमनिष्टं फलमभूद् यत् सूत्रघोषणेन सह सूत्रार्थ-घोषणमप्यनिवार्यं जातम्। एवं चतुर्गुणः श्रमश्चतुर्गुणश्च समयस्तत्रापेक्ष्यो भवतीत्यनुभवसिद्धं तदध्यायिनाम्। हा हन्त! क्वाल्पमात्रालाघवं (प्रयत्नाल्प-त्वेन ज्ञानाधियम्) पुत्रोत्सवतुल्यं मन्यन्तेस्म प्राचीनावैयाकरणाः, क्वन्वेतत् प्रयत्नाधिक्यं ज्ञानाल्पत्वं च सञ्जातम्। एतस्य कुप्रभावः समग्रसंस्कृताध्यय-नोपर्यापतितः। रटनस्य महाकष्टमनुभूय केचन मध्ये एवाध्ययनाद् विरमन्ति, केचन व्याकरणं त्यक्त्वा विषयान्तरमनुप्रविशन्ति, अन्ये तु दूरत एव संस्कृतं नमस्कृत्य ततो निवर्तन्ते। अष्टाध्यायीपद्धत्या व्याकरणाध्ययने तु छात्राणा-मल्पः प्रयासो बहुबोधश्च भवति। तत्र सूत्राण्येव कण्ठस्थान्यपेक्ष्यन्ते। छात्राणां सूत्रार्थकरणसामर्थ्यं गुरुः पदच्छेदविभक्तिसमासाऽनुवृत्त्युदाहरणद्वारा सुगमतयोत्पादयति। एवं शीघ्रमेव ते विदितवेदितव्याः सञ्जायन्ते। अन्यान्यपि बहूनि प्रयोजनान्यनया पद्धत्या सिध्यन्ति तानि यथावसरं व्याख्यास्यन्ते।

अष्टाध्याय्यध्ययनस्येदं वैशिष्ट्यं प्रथमतोऽस्मिन् युगे प्रज्ञाचक्षुः

श्रीमत्स्वामिविरजानन्दः सरस्वती स्वीयाऽमलया कयाचित् प्रज्ञयाध्यापन-कालेऽन्तेवासिनां समक्षं प्रकटीचकार । तेषु स्वामी दयानन्दः सरस्वती गुरुवचनं युक्तियुक्तं मत्वा तत्प्रचाराय कटिबद्धो बभूव । भाषणोपदेशनपाठशालास्था-पनादिकार्य्यैः सहाष्टाध्यायीभाष्यं वेदाङ्गप्रकाशञ्च व्यरचयत् । ततस्तच्छिष्य-परम्परायां श्रीमद्ब्रह्मदत्तो जिज्ञासुर्वाराणस्यां पाणिनिमहाविद्यालयस्य उद्घाटनेन तत्राध्यापनेन, अष्टाध्यायीप्रथमावृत्तिप्रभृतिग्रन्थानां निर्माणेन च व्याकरणाध्ययनस्य प्राचीनशैलीमग्रेसारितवान् । अस्यामेव शृङ्खलायां महा-महोपाध्यायाः श्रीगोपालशास्त्रिमहाभागाः 'दर्शनकेसरी' त्युपाधिभाजः पाणिनिप्रबोध-पाणिनिप्रशस्ति-पाणिनीयनाटकादिग्रन्थानां निर्माणेनानेकवर्षैर-ष्टाध्यायीपद्धत्या वाराणस्यामिह ज्योतिर्मठे चाध्यापनेनैनत् कार्य्यमुन्नयन्ति-तराम् । अस्य ग्रन्थस्य निर्माणेऽपि तेषामेव प्रेरणाऽऽधारभूता ।

तदत्र प्राचीनव्याकरणविषये वाराणसेयसंस्कृतविश्वविद्यालयेन मध्य-मायाश्चतुर्षु खण्डेषु जयादित्यवामनकृता 'काशिका' निर्धारिताऽस्ति । तत्र प्रतिखण्ड काशिकाया द्वौ द्वावध्यायौ नियतौ स्तः । सैषा काशिकावृत्तिर्यद्यपि सूत्रार्थ सम्यग् विवृणोति उदाहरणप्रत्युदाहरणशङ्कासमाधानादिभिः, तथापी-दानीन्तनानां छात्राणां तत्र प्रवेशो नास्ति खलु सुकरः । यतो हि यस्मिन् काले सा विरचिता तस्मिन् संस्कृतस्य भूयान् प्रचार आसीदस्मिन् देशे, अद्यत्वे तु न तथा । तद्विपर्यासश्चैव दरीदृश्यते । संस्कृतं क्लिष्टा दुरूहा भाषेति प्रवा-दिनस्तदध्ययनात् पलायन्ते । अतो वै कश्चन सरलः सुगमश्च मार्गोऽन्वेष्टव्य इति कृत्वेयं लघुकाशिकानाम्नी सूत्रवृत्तिः काशिकाऽऽधारेण निर्मिताऽस्माभिरियं-स्यायं प्रथमो भागोऽध्यायद्वयात्मकश्छात्राध्यापकानामध्ययनाध्यापनसौकर्य्याय प्रस्तुतोऽस्ति । यदि पाठकालोचका लेखकस्योत्साहं वर्द्धयिष्यन्ति तर्ह्यवशिष्ट-भागा अपि शीघ्रं प्रकाशमेष्यन्तीत्याशास्यते ।

यद्यपीयं वृत्तिः प्रायेण परीक्षार्थिच्छात्राणामुपयोगाय निर्मिताऽस्ति तथापि सर्वः संस्कृतं पिपठिषुर्जनोऽस्माद् ग्रन्थाल्लाभान्वितो भवितुमर्हतीत्य-स्माकं विश्वासः । अस्यां काशिकातो यद् वैशिष्ट्यं तदिह निर्दिश्यते—

(अ) काशिकायां सूत्राणां पदच्छेदसमासानुवृत्तयः सर्वत्र न प्रदर्शिताः । परन्त्विह प्रायशः प्रतिसूत्रं पदच्छेदविभक्तिसमासानुवृत्त्यर्थोदाहरणानि विशदं लिखितानि । एतान्येव प्राधान्येनं परीक्षायां प्रष्टव्यानि भवन्ति । उदाहरणानि तु सर्वत्र काशिकाया एव गृहीतानि ।

(इ) अधिकारानुवृत्तिविषयेऽस्माभिः 'स्वरितेनाधिकारः' (अष्टाध्यायीसूत्र (१-३-११) इत्येतत्सूत्रानुसारेण कार्यं कृतम् । सूत्रस्थस्य यस्य यस्य पदस्य यत्पर्यन्तमधिकारोऽनुवृत्तिर्वा गच्छति तस्य तस्यादिस्वरोपरि स्वरितचिह्नमङ्कितं, तत्समक्षं चाऽधिकारावधिनिर्देशोऽपि सूत्रसंख्या-प्रदानेन कृतः । यथा (१) "वृद्धिरादैच्" (१-१-१)-३ । (२) "अदेङ् गुणः" (१-१-२)-३ । यत्रैकस्मात् सूत्रात् पदद्वयं पदत्रयं वोत्तरत्र सूत्रेष्वनुवर्त्तते तत्रानुवर्त्तमानानां पदानामादिवर्णोपरि स्वरितचिह्न मासज्य तत्समक्षमधिकारावधिनिर्देशोऽपि तथैव कृतः । यथा—(१) "इको गुणवृद्धी" (१-१-३)-६ । (२) "तान्येकवचनद्विवचन-बहुवचनान्येकशः" (१-४-१०२)-१०३ । यत्र पुनः सूत्रेऽधिकृतानां पदानामधिकारावधिर्भिन्नश्च तत्रावधिनिर्देशोऽपि यथाक्रमं पृथक् पृथक् कृतः । यथा—(१) "उपसर्जनं पूर्वम्" (१-२-३०)-३१, -३८ । (२) "इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ" (२-४-३२)-३४, -३४, -३३, -३३ । यत्र सन्ध्यादिनाऽस्पष्टं संदिग्धं वा स्वरितचिह्नं तत्र तद् व्याख्यानान्निश्चेतव्यम्; यथा 'इदमो०' इत्यत्रैव सूत्रे ।

(उ) उदाहरणानां सिद्धावपेक्षितानि सर्वाण्यावश्यकसूत्राणि तत्तत्कार्याणि च लिखितानि । सिद्धिदानस्येदं प्रयोजनमस्ति यत्स्वाध्यायकाले छात्राणां तत्तदुदाहरणसिद्धये सम्बन्धिसूत्रान्वेषणे काचिद्बाधाऽसौ-विध्यं वा मा भूदिति । ये त्वत्राक्षिपन्ति 'छात्राणामुपरि सिद्धिर्भार-रूपातो न साऽऽवश्यकीति' तान्प्रति ब्रूमः-समुत्तीर्णप्रथमपरीक्षा काश्छात्राः किञ्चिदधीतव्याकरणा वा पूर्वमध्यमायाः प्रथमवर्षे ग्रन्थमिमं पठिष्यन्ति । तेषां मनसि तावत् सिद्धिकरणसंस्कारः पूर्व-कक्षातः किञ्चित् तिष्ठत्येवातो नास्ति सिद्धिपठनं भाररूपमिति ।

(ऋ) यत्र महाभाष्यादिग्रन्थेभ्यो विरोधो वैशिट्यं वा क्वचिद् विद्यते तत्राधस्ताट्टिपण्यां विवरणं दत्तमस्ति ।

(लृ) यत्र सूत्रस्य पदयोः पदेषु वा सन्धिर्न दृश्यते तत्र पदच्छेदः सूत्र एव स्फुटो निगदव्याख्यातश्चेत्यतः पृथक्त्वेन न प्रदर्शितः पिष्टपेषणवद्वै-यर्थ्यापत्तेः ।

(ए) उदाहरणसिद्धये सङ्गृहीतेषु सूत्रेष्वष्टाध्यायीतः सूत्रसंख्या लिखि-ताऽस्ति येन सूत्रस्थविषयवैशिष्ट्यादिकं झटिति बुद्धिमधिरोहेत् । इयं

सूत्रसंख्याऽस्माभिः काशिकाऽऽधारेण लिखिताऽस्ति । अतः क्वचित्-संख्याभेदं दृष्ट्वाऽलक्षणत्वाऽऽशङ्का न कार्य्या । एतादृशेषु स्थलेषु सर्वदा व्याख्यानतो विशेषप्रतिपत्तिः कर्त्तव्या ।

(आ) यतो ह्ययं ग्रन्थः काशिकायाः प्रथमावृत्ति (सूत्रपदच्छेदविभक्ति-समासानुवृत्त्यर्थोदाहरणमात्रम्) लक्ष्यीकृत्य प्रवृत्तोऽस्ति, अतोऽत्र द्वितीयावृत्त्यपेक्षं प्रत्युदाहरणशङ्कासमाधानादिकं नोपन्यस्तम् । गण-पाटवार्तिकपाठश्चैवं ग्रन्थविस्तरभयान्नात्रोल्लिखितः ।

## कृतज्ञताप्रकाशनम्

अस्य ग्रन्थस्य प्रणयनेऽनेकस्थलेषु मया पातञ्जलमहाभाष्यकाशिका-वृत्तिव्यतिरिक्तं काशिकाया न्यासपदमञ्जरीटीकयोः, सिद्धान्तकौमुदीस्वामी-दयानन्दप्रणीताष्टाध्यायीभाष्य-पण्डित ब्रह्मदत्तजिज्ञासुप्रणीताष्टाध्यायीभाष्य (प्रथमावृत्ति) प्रभृतिग्रन्थानां च साहाय्यं गृहीतमतः कृतज्ञोऽस्मि तत्तद्ग्रन्थ-कृद्विदुषाम् । अथ च गुरुवर्य्यान् महामहोपाध्यायान् व्याकरणसाहित्यदर्शन-शास्त्रपारंगतान् पूज्यपादान् तत्र भवतः श्रीगोपालशास्त्रिदर्शनकेसरि महाभागान् प्रति भूयोभूयः कृतज्ञतां निवेदयामि यदेतेषामेव कृपाकटाक्षेणास्य ग्रन्थस्य रचनायां सोत्साहमहं प्रावर्तिषि । अस्य पुस्तकस्य सम्बन्धे तैर्लिखितया शुभाशंसयाऽहमनुगृहीतोऽस्मि नितराम्, यदर्थं तेधन्यवादार्हाः ।

मत्कृते त्वर्थाभावादस्य ग्रन्थस्य प्रकाशनमसम्भवमासीत् । तत्र भारत शासनस्य शिक्षामन्त्रालयो महत्या कृपयैतस्य प्रकाशनायांशिकानुदानं स्वीकृत-वान् तदाधारेणैवास्य मुद्रणमारब्धम् । अत एतत्साहाय्यस्य कृते शिक्षामन्त्रा-लयाधिकारिभ्योऽपि भूयसो धन्यवादान् वितरामि । आशासेऽपेक्षितानुदानधनं तेऽचिरेणैव प्रदायानुग्रहीष्यन्ति मामिति ।

पुस्तकमिदं वाराणस्यां 'सुप्रभातम् प्रेस' इत्याख्ये मुद्रणालये श्रीमतां रामलालशास्त्रिमहोदयानां पर्यवेक्षकत्वे मुद्रितम् । यद्यपि नैककारणैरस्य प्रका-शने विलम्बः सञ्जातस्तथापि धन्यवादार्हा एते महानुभावा यदेतेषां सौजन्येन सुप्रयासेन च प्रकाशमागत एष ग्रन्थः । यत्ने कृतेऽपि मुद्रणादिदोषा अवशिष्टा एव, तथापि प्रतिपुस्तकं तेषां मार्जनस्य प्रयत्नः करिष्यते । पुनरपि तासां त्रुटीनां कृते पाठकमहोदयान् क्षमां याचे । आशासे आगामिसंस्करणे सर्वास्त्रुट-योऽपनेष्यन्ते । एतत्तु संकोचराहित्येनोद्घुष्यते यदत्रग्रन्थेये गुणास्ते पूर्वेषां विदुषां ये तु दोषास्ते ममैवाल्पमतेः प्रमादाज्ञानविजृम्भिताः ।

यद्यनेन ग्रन्थेन छात्रादीनां स्वल्पोऽपि लाभो भवेत्तर्हि सफलमात्मनः श्रमं मंस्ये। अष्टाध्यायीक्रमेण व्याकरणाध्ययनाध्यापनपक्षपातिनां विदुषां प्रयत्नपरम्परायामयं ग्रन्थोऽपि किमप्युपयोगिस्थानमुपैष्यति, पिपठिषुभ्यश्छात्रवृन्देभ्योऽध्यापकेभ्यश्च रोचिष्यते, संस्कृतमहाविद्यालयविश्वविद्यालयेषु गुरुकुलेषु चास्य प्रचारो भविष्यतीत्याशासानो विरमति बहुवक्तव्यात्।

विदुषां वशंवद :—

गुरुवासरः
आश्विनी पूर्णिमा सं० २०२३ वि०
३० सितम्बर सन्, १९६६ ई०

जयदत्तशास्त्री (उप्रेती)
प्रा० व्याकरण-दर्शनाचार्य्यः,
श्री बदरीनाथ वेदवेदाङ्ग-महाविद्यालयः
ज्योतिर्मठः (उत्तराखण्डः)

# द्वितीयसंस्करणसम्बन्धे ग्रन्थकृद्वक्तव्यम्

अस्मत्प्रणीतलघुकाशिकायाः प्रथमो भाग इत एकविंशतिवर्षपूर्वं प्रकाशित आसीत्। सोऽधुना समाप्ति गतः। अतो द्वितीयसंस्करणस्यावश्यकताऽन्वभूयत पाठकैः। तदनुरोधमनु द्वितीयं संस्करणमिदं साम्प्रतं दिल्लीस्थ-ईस्टर्न बुकलिकर्सधिकारिभिः प्रकाश्यत इति हर्षास्पदं नः। कुमाऊँविश्वविद्यालयान्तर्गत बी०ए० कक्षासु संस्कृतविषये ग्रन्थस्यास्य कश्चिदंशो निर्धारितोऽस्ति। संस्कृतभाषायां लिखितं ग्रन्थं सौविध्येन ते छात्राऽध्येतुमवगन्तुं च न प्रभवन्तीति छात्राणां हितकामनया तत्तदंशस्य राष्ट्रभाषानुवादोऽपि विहितोऽस्माभिरस्मिन् संस्करणे। तत्रानुवादे वार्त्तिकांश उदाहरणसिद्धिप्रकारश्च ग्रन्थविस्तरभयात् परित्यक्तः। सूत्रस्थपदानां समासविग्रहस्य पुनरावृत्तिरपि अस्मादेव कारणात् परिहृताऽनुवादे। परं पदच्छेदे विभक्तिनिर्देशः, समासनाम, सूत्रार्थः, अनुवृत्तिः, उदाहरणानि च स्पष्टतयाऽस्मिन् राष्ट्रभाषानुवादे प्रदर्शितानि। क्वचिदुदाहरणसिद्धिरपि प्रसंगतया प्रदर्शिता। इतोऽधिकसाहाय्यं मूलसंस्कृतिवृत्तितोऽध्यायिनो ग्रहीतुमर्हन्ति। यदि हि अक्षरशः पदशश्चानुवादो विधीयेत तदा मूले वर्त्तमानां संस्कृतभाषायां लिखितां सूत्रवृत्ति कोऽपि न पठेत्, एवं च संस्कृतभाषाऽध्ययनप्रयोजनमेव हीयेतेति हेतोश्छात्राणां मूलवृत्त्यनुशीलनपरिश्रमोऽप्यत्र कश्चिदपेक्षितोऽस्ति। अथ च अननूदितांशतोऽपि साहाय्यमध्येतारः संस्कृतप्रेमिणो ग्रहीष्यन्तीत्याशास्यते।

लेखकरचितलघुकाशिकाया द्वितीयो भागोऽपि, आतृतीयाध्यायात् पंचमाध्यायपर्यन्तः, गतवर्षेषु 'अल्मोड़ाबुकडिपो, अल्मोड़ा' इत्यस्मात् प्रकाशकात् प्रकाशितः सन् प्राप्तुं शक्यते। तत्र सर्वः प्रत्ययाधिकारः परिपूर्णोऽस्ति, अतस्तद्ग्रन्थमपि व्याकरणं पिपठिषवः पठन्तु-इत्यस्मदनुरोधः।

पुस्तकप्रकाशनस्य भारो ईस्टर्न बुकलिकर्षाधिष्ठात्रा श्री श्यामलाल मल्होत्रा महाभागेन अंगीकृतः। न चेदसौ यत्नमकरिष्यत् नतरां पुस्तकस्येदानीं द्वितीयसंस्करणं पाठकानां पुरतः प्रस्तुतमभविष्यत्। अतस्तस्मै भूयो धन्यवादान् कृतज्ञतां च व्याहरामि। मन्ये, संस्करणमिदं छात्रोध्यापकोपयोगि सेत्स्यतीति शम्।

अल्मोड़ा, जयदत्त उप्रेती शास्त्री

भाद्रपदीपूर्णिमा, सं० २०५० वि०

२९-११-९३ ई०

## द्वितीय संस्करण के सम्बन्ध में लेखकीय वक्तव्य

लघुकाशिका का अध्यायद्वयात्मक प्रथम भाग विक्रम संवत् २०२६ में सुप्रभातम् प्रेस, वाराणसी से प्रकाशित हुआ था। उसके द्वितीय संस्करण का प्रकाशन आज २४ वर्षों के अनन्तर होते देख ग्रन्थकार को हर्षानुभूति हो रही है। इस संस्करण की यह भी विशेषता है कि प्रथम संस्करण जहाँ केवल संस्कृत में छपा था, अब यह वर्त्तमान संस्करण हिन्दी अनुवाद के साथ प्रस्तुत हो रहा है। इस ग्रन्थ के प्रथम अध्याय का कुछ अंश कुमाऊँ विश्वविद्यालय के बी० ए० कक्षा के पाठ्यक्रम में निर्धारित होने से तत्रत्य कतिपय छात्रों एवम् अध्यापकों का आग्रह था कि इसे हिन्दी अनुवाद के साथ प्रकाशित किया जाय, जिससे कि अष्टाध्यायीपद्धति से व्याकरण पढ़ने-पढ़ाने के इच्छुक लोगों को सुगमता और सरलता से यह ग्रन्थ समझ में आ सके। अतः उन्हीं के आग्रह को ध्यान में रखते हुये इस प्रथम भाग का प्रथम अध्याय (चार पाद) मात्र हिन्दी अनुवाद सहित छापा गया है। जैसा कि प्रथम संस्करण की भूमिका में हमने लिखा था, इस लघुकाशिका नामक ग्रन्थ के प्रणयन के मूल-प्रेरणा-स्रोत महामहोपाध्याय पं० गोपालशास्त्री 'दर्शनकेसरी' जी थे। उनका सदैव यह विचार था कि संस्कृत भाषा सीखने के लिए जो भी ग्रन्थ बनाये जायें वे शुद्ध सरल संस्कृत भाषा में ही होने चाहिये, किसी अनुदित अन्य भाषा में नहीं। तदनुरूप ही लेखक ने भी ग्रन्थ को मूलतः संस्कृत भाषा में ही लिखा था। वर्त्तमान संस्करण में भी यही कारण है कि ग्रन्थ का आधा भाग संस्कृत में ही है।

इस अनुवाद में विस्तृत व्याख्या न करके समासशैली को अपनाया गया है। तथापि प्रयत्न किया गया है कि सूत्रगत आवश्यक बात छूटने न पावे। ग्रन्थ कलेवर बढ़ने के भय से चाहते हुए भी हम सूत्रों की अधिक व्याख्या नहीं प्रस्तुत कर पाये हैं। इसमें यह भी हेतु है कि पढ़ाने वाले और

पढ़ने वाले दोनों को मूल वृत्ति की सहायता से शंका समाधान करने का प्रयत्न करना चाहिये, जिससे कि उनका ज्ञान-वर्धन हो सके। लघुकाशिका वस्तुतः मूल काशिका ग्रन्थ का प्रथमावृत्ति रूप अंश है, जिसमें सूत्र का पदच्छेद, विभक्ति, समास, अनुवृत्ति, सूत्रार्थ, उदाहरण और उदाहरण में सूत्र ने क्या कार्य किया बस इतना भर जानना अपेक्षित है। अतः व्याकरण का विषय अधिकाधिक व्याख्यापेक्ष होने पर भी यहाँ यही लक्ष्य में रखा गया है कि छोटी और सरल व्याख्या दी जाये, जिससे कि अध्ययनार्थी उसे सुविधा से ग्रहण कर सकें और व्याकरण को अथाह अथवा दुरूह समझ कर न उससे भयभीत हों और न पलायन करें। अनेक स्थलों में इस अनुवाद में हमने संकेत किया है कि विषयगत अधिक जानकारी संस्कृत वृत्ति से प्राप्त कर लें। इससे संस्कृत अंश को समझने और उस पर विचार करने का भी अवसर छात्रों और अध्यापकों को मिलेगा, जो कि उनके हित में ही होगा।

सूत्र या सूत्रस्थ पदों की उत्तरसूत्रों में अनुवृत्ति और अधिकार को जानने के लिये 'स्वरितेनाधिकारः' के अनुसार स्वरितचिह्न तत्तत् पदों पर लगाकर उनके समक्ष अनुवृत्ति/अधिकार की सीमा संस्कृत वृत्ति में दर्शायी गई है, उसको वहीं से हिन्दी अनुवाद की सहायता से ग्रन्थ को पढ़ने वाले विद्यार्थी ज्ञात करने का यत्न कर लें। इसी प्रकार समस्त-पदों के विग्रह को भी मूलवृत्ति से जान लें। पिष्टपेषण और ग्रन्थविस्तार-भय से यह कार्य हिन्दी में नहीं दर्शाया गया है। हाँ, सूत्र का पदच्छेद, तत्तद् विगृहीत पदों की विभक्ति, उनमें विद्यमान समास का नाम, सूत्रार्थ, उदाहरण और उदाहरणों में सूत्र की उपयोगिता की बात प्रायः सर्वत्र आ गई है, इससे पाणिनीय व्याकरण की पद्धति और शास्त्रविषयक ऊहापोह, विधिनियम, संज्ञा-परिभाषा, आदि की बहुत कुछ जानकारी छात्रों को हो जायेगी—ऐसा हमारा विश्वास है।

लघुकाशिका के प्रथमभाग का प्रथम संस्करण वार्त्तिकों से रहित था। किन्तु इस संस्करण में संस्कृत भाग में उन्हें जोड़ दिया गया है, जबकि अनुवाद भाग में विस्तारभय से सम्मिलित नहीं किया गया है। ग्रन्थ का द्वितीय भाग, जो तृतीय से पञ्चम अध्याय तक है, पूर्व ही सं० २०४५ वि० में अल्मोड़ा बुक डिपो (श्याम प्रिंटिंग प्रेस) द्वारा वार्त्तिक सहित ही प्रकाशित किया जा चुका है। अतः पूरे ग्रन्थ की विषयवस्तु में समानता की दृष्टि से, वार्त्तिकों का सन्निवेश इस द्वितीय संस्करण में किया गया है।

अन्त में, इस द्वितीय संस्करण के प्रकाशक श्री श्यामलाल मल्होत्रा जी, ईस्टर्न बुक लिंकर्स, दिल्ली का मैं साभार धन्यवाद करता हूँ, जिनके श्रम, सौजन्य और सहायता से यह संस्करण छपकर पाठकों के समक्ष पहुंच रहा है।

विदुषां वशंवदः,

'स्वस्त्ययनम्' तल्ला थपलिया, अल्मोड़ा, (उ० प्र०) २६३६०१
भाद्रपदी पूर्णिमा, सं० २०५० वि०
२९-११-९३ ई०

जयदत्त उप्रेती शास्त्री

ओ३म्

# लघुकाशिका

यस्माज्जन्मस्थितौ प्रणाशनमपि प्राप्नोति विश्वं जडं,
यस्मात् प्राणिति वर्धते ह्यपचितिं चाप्नोति प्राणी पुनः।
यस्मात् कर्मसु कौशलं कुशलिनः काङ्क्षन्ति कार्ये रताः,
तं देवं सततं नतोऽस्मि नितरां, संवित्सुशान्तिप्रदम् ।। १ ।।

पाणिनीयप्रकारेण परीक्षोत्तरणार्थिनाम् ।
प्रथमावृत्तिबोधाय कृतेयं लघुकाशिका ।। २ ।।
बालेभ्योऽसुगमां वीक्ष्य काशिकां वृत्तिमंशतः ।
सरलीक्रियते साद्य प्रीयतां परमेश्वरः ।। ३ ।।

---

"ओ३म्"

**भावानुवादः**—जिससे सम्पूर्ण जड़ जगत् उत्पत्ति, स्थिति और प्रलय को प्राप्त होता है; जिससे चेतन प्राणी भी उत्पन्न होते, बढ़ते और विनाश को प्राप्त होते हैं; और जिससे नाना प्रकार के कर्मों में प्रवृत्त हुये कुशल कार्यकर्त्ता कर्मों की सफलता की कामना किया करते हैं, उस ज्ञान और परम शान्ति को प्रदान करने वाले सुखों के दाता परमेश्वर को मैं (वृत्तिकार) निरन्तर भक्तिभाव से प्रणाम करता हूँ ।। १ ।।

पाणिनीय अष्टाध्यायी के क्रमिक अध्ययन द्वारा परीक्षाओं को उत्तीर्ण करने के इच्छुक विद्यार्थियों के लिये अष्टाध्यायी के सूत्रार्थादि रूप प्रथमावृत्ति के परिज्ञान के लिए यह 'लघुकाशिका' नामक (अष्टाध्यायीवृत्ति) पुस्तक बनाई गई है ।। २ ।।

बालकों के लिए जयादित्यवामन विरचित 'काशिका' नामक अष्टाध्यायी की सूत्रवृत्ति को अंशतः कठिन जानकर उसे इस लघुकाशिका द्वारा आज सरल किया जा रहा है, जो परमेश्वर के कृपा प्रसाद से सिद्ध होवे ।। ३ ।।

(प्रतिज्ञासूत्रम्)

**अथ शब्दानुशासनम् ॥ १ ॥**

अथशब्दोऽधिकारार्थः । शब्दानामनुशासनं शब्दानुशासनम् । कर्मणि षष्ठी । व्याकरणशास्त्रमारभ्यत इत्यर्थः ।

(अक्षरसम्मानयः)

**अ इ उ ण् ॥ २ ॥**

अ इ उ इत्येतान् वर्णान् क्रमेणोपदिश्यान्ते णकारमितं करोति पाणिनिराचार्यः प्रत्याहारार्थम् । तेन 'अण्' प्रत्याहारो गृह्यते 'उरण् रपरः' (अ० १-१-५१) इति सूत्रे ।

**ऋ लृ क् ॥ ३ ॥**

ऋ लृ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ककारमितं करोति । तेन अक्, इक्, उक्, इत्येते प्रत्याहारा गृह्यन्ते यथासंख्यम् 'अकः सवर्णे दीर्घः' (६-१-१०१) 'इको गुणवृद्धी' (१-१-३), 'उगितश्च' (४-१-६) इत्यादिसूत्रेषु ।

---

(प्रतिज्ञासूत्र)

**अथ शब्दानुशासनम्**

अथ शब्द अधिकार के लिये है । शब्दानुशासन में षष्ठीतत्पुरुष समास है और यहाँ (विग्रह में) कर्म में षष्ठी विभक्ति समझनी चाहिये । व्याकरणशास्त्र का आरम्भ किया जाता है—यह तात्पर्य है ।

(अक्षरसमाम्नाय)

**अ इ उ ण् ॥ २ ॥**

अ इ उ इन वर्णों को क्रम से उपदेश करके अन्त में णकार को पाणिनि आचार्य प्रत्याहार बनाने के लिए इत् करते हैं; जिससे 'उरण् रपरः' सूत्र में प्रयुक्त अण् प्रत्याहार की सिद्धि होती है ।

**ऋ लृ क् ॥ ३ ॥**

ऋ लृ इन दो वर्णों तथा पूर्वसूत्र पठित तीन वर्णों के क्रमिक उपदेश के बाद ककार की इत्संज्ञा करते हैं, जिससे 'अकः सवर्णे दीर्घ', 'इको गुणवृद्धी' 'उगितश्च' इत्यादि सूत्रों में अक्, इक्, उक् प्रत्याहारों का ग्रहण होता है ।

ए ओ ङ् ॥ ४ ॥

ए ओ इत्येतौ वर्णावुपदिश्यान्ते ङकारमितं करोति। तेन एङिति प्रत्याहारो गृह्यते 'एङि पररूपम्' (६-१-९४) इत्यादौ।

ऐ औ च् ॥ ५ ॥

ऐ औ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते चकारमितं करोति। तेन अच्, इच्, एच्, ऐच् इति चत्वारः प्रत्याहारा गृह्यन्ते 'अचः परस्मिन् पूर्वविधौ' (१-१-५७), 'इच एकाचोऽम्प्रत्ययवच्च' (६-३-६८), 'एचोऽयवायावः' (६-१-७८), 'वृद्धिरादैच्' (१-१-१) इत्यादिषु सूत्रेषु।

ह य व र ट् ॥ ६ ॥

ह य व र इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते टकारमितं करोति। तेन अट् प्रत्याहारो गृह्यते 'शश्छोऽटि' (८-४-६३) इति सूत्रे हादिष्वकार उच्चारणार्थः।

लण् ॥ ७ ॥

ल इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते णकारमितं करोति। तेन अण्,

---

ए ओ ङ् ॥ ४ ॥

ए ओ इन दो वर्णों का उपदेश करके अन्त में ङकार को इत् करते हैं। उससे 'एङि पररूपम्' सूत्र में एङ् प्रत्याहार का ग्रहण किया जाता है।

ऐ औ च् ॥ ५ ॥

ऐ औ इन दो वर्णों को पूर्व वर्णों के साथ उपदेश करके अन्त में चकार को इत् करते हैं। उससे अच्, इच्, एच्, ऐच्—ये चार प्रत्याहार अचः परस्मिन् पूर्वविधौ, इच एकाचोऽम् प्रत्ययवच्च, एचोऽयवायावः, वृद्धिरादैच्, इत्यादि सूत्रों में ग्रहण किए जाते हैं।

ह य व र ट् ॥ ६ ॥

ह य व र को पूर्व वर्णों के साथ उपदेश करके अन्त में टकार को इत् करते हैं। उससे 'शश्छोऽटि' सूत्र में अट् प्रत्याहार का ग्रहण होता है। ह य व र इत्यादि वर्णों में अकार का प्रयोग उच्चारण की सुविधा के लिए किया गया है।

लण् ॥ ७ ॥

ल इस एक वर्ण को पूर्व वर्णों के साथ उपदेश करके अन्त में णकार

इण्, यण्, इति त्रयः प्रत्याहारा गृह्यन्ते 'अणुदित्सवर्णस्य चाप्रत्ययः' (१-१-६८) इण्कोः (८-३-५७), इकोयणचि (६-१-७७) इत्यादिसूत्रेषु ।

ञ म ङ ण न म् ॥ ८ ॥

ञ म ङ ण न—इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते मकारमितं करोति । तेन अम्, यम्, ञम्, ङम् इति चत्वारः प्रत्याहारा गृह्यन्ते क्रमेण 'पुमः खय्यम्परे' (८-३-६), 'हलो यमां यमि लोपः' (८-४-६४), 'ङमो ह्रस्वादचि ङमुण्नित्यम्' (८-३-३२), 'ञमन्ताड्डः' (उणादिसूत्रम् १-१-१४) इत्येषु सूत्रेषु ।

झ भ ञ् ॥ ९ ॥

झ भ इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ञकारमितं करोति । तेन 'यञ्' इत्येकः प्रत्याहारो गृह्यते 'अतो दीर्घो यञि' (७-३-१०१) इति सूत्रे ।

घ ढ ध ष् ॥ १० ॥

घ ढ ध इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते षकारमितं करोति । तेन

---

को इत् करते हैं । उससे अण्, इण्, यण् इन तीन प्रत्याहारों का क्रमशः—अणुदित्सवर्णस्य चाप्रत्ययः, इण्कोः, इको यणचि इत्यादि सूत्रों में प्रयोग देखा जा सकता है ।

ञमङणनम् ॥ ८ ॥

ञ म ङ ण न इन वर्णों को पूर्व वर्णों के साथ उपदेश करके अन्त में मकार को इत् करते हैं । उससे चार प्रत्याहार क्रमशः 'पुमः खय्यम्परे', 'हलो यमां यमि लोपः', 'ङमो ह्रस्वादचि ङमुण्नित्यम्' तथा 'ञमन्ताड्डः' इन सूत्रों में ग्रहण किये गये हैं ।

झ भ ञ् ॥ ९ ॥

झ भ—इन दो वर्णों तथा पूर्व वर्णों के क्रमिक उपदेश के अन्त में ञकार को इत् करते हैं । उससे 'यञ्' प्रत्याहार बनता है, जिसका ग्रहण 'अतो दीर्घो यञि' सूत्र में किया गया है ।

घढधष् ॥ १० ॥

घ ढ ध इन वर्णों को तथा पूर्ववर्णों को क्रमशः उपदेश करके अन्त में

झष्, भष् इत्येतौ प्रत्याहारौ गृह्येते 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' (८-२-३७) इत्यत्र सूत्रे ।

जबगडदश् ॥ ११ ॥

ज ब ग ड द इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते शकारमितं करोति । तेन अश् हश्, वश्, झश्, जश्, बश् इति षट् प्रत्याहारा गृह्यन्ते 'भो भगो अघो अपूर्वस्य योऽशि' (८-३-१७), 'हशि च' (६-१-११४), 'नेड्वशि कृति' (७-२-८), 'झलां जश् झशि' (८-४-५३), 'एकाचो बशो भष्०' (८-२-३७) इत्येतेषु सूत्रेषु ।

खफछठथचटतव् ॥ १२ ॥

ख फ छ ठ थ च ट त इत्येतान् वर्णानुपदिश्यान्ते वकारमितं करोति । तेन छव् इत्येकः प्रत्याहारो गृह्यते 'नश्छव्यप्रशान्' (८-३-७) इति सूत्रे ।

कपय् ॥ १३ ॥

क प इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते यकारमितं करोति । तेन यय्, मय्, झय्, खय् इति चत्वारः प्रत्याहारा गृह्यन्ते 'अनुस्वारस्य ययि परसवर्णः'

---

षकार को इत् करते हैं। उससे झष् और भष्—इन दो प्रत्याहारों का ग्रहण 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' सूत्र में किया गया है।

जबगडदश् ॥ ११ ॥

ज ब ग ड द इन वर्णों तथा पूर्व वर्णों के क्रमिक उपदेश के अन्त में शकार को इत् करते हैं। उससे अश्, हश्, वश्, झश्, जश्, बश्—इन छः प्रत्याहारों का क्रमशः 'भो भगो अघो अपूर्वस्य योऽशि', 'हशि च', 'नेड्वशि कृति', 'झलां जश् झशि', 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इन सूत्रों में ग्रहण होता है।

खफछठथचटतव् ॥ १२ ॥

ख फ छ ठ थ च ट त—इन वर्णों को उपदेश करके अन्त में वकार को इत् करते हैं। उससे 'छव्' इस एक प्रत्याहार का ग्रहण 'नश्छव्यप्रशान्' इस सूत्र में किया जाता है।

कपय् ॥ १३ ॥

क प इन दो वर्णों को पूर्व वर्णों के क्रम में उपदेश करके अन्त में यकार को इत् करते हैं। उससे यय्, मय्, झय्, खय्—इन चार प्रत्याहारों

(८-४-५८), 'मय उञो वो वा' (८-३-३३), 'झयो होऽन्यतरस्याम्' (८-४-६२), 'पुमः खय्यम्परे' (८-३-६) इत्येषु सूत्रेषु ।

## श ष स र् ॥ १४ ॥

श ष स इत्येतान् वर्णानुपदिश्य पूर्वांश्चान्ते रेफमितं करोति । तेन यर्, झर्, खर्, चर्, शर्—इति पंच प्रत्याहारा गृह्यन्ते 'यरोऽनुनासिकेऽनुनासिको वा' (८-४-४५), 'झरो झरि सवर्णे' (८-४-६५), 'खरि च' (८-४-५५), 'अभ्यासे चर्च' (८-४-५४), 'शर्पूर्वाः खयः' (७-४-६१) इत्येतेषु सूत्रेषु ।

## ह ल् ॥ १५ ॥

ह इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते लकारमितं करोति । तेन अल्, हल्, वल्, रल्, झल्, शल् इति षट् प्रत्याहारा गृह्यन्ते 'अलोऽन्त्यात् पूर्व उपधा' (१-१-६५), 'हलोऽनन्तराः संयोगः' (१-१-७), 'लोपो व्योर्वलि' (६-१-६६) 'रलो व्युपधाद्धलादेः संश्च' (१-२-२६), 'झलो झलि' (८-२-२६), 'शल इगुपधादनिटः क्सः' (३-१-४५) इत्येषु सूत्रेषु ।

एकस्माण्णङटञवा[1] द्वाभ्यां षस्त्रिभ्य एव कणमाः स्यु ।

---

का ग्रहण क्रमशः 'अनुस्वारस्य ययि परसवर्णः', 'मय उञो वो वा', 'झयो होऽन्यतरस्याम्', 'पुमः खय्यम्परे' इन सूत्रों में होता है ।

## श ष स र् ॥ १४ ॥

श ष स—इन वर्णों को पूर्ववर्णों के सहित उपदेश करके अन्त में रेफ को इत् करते हैं । उससे यर्, झर्, खर्, चर्, शर्—ये पांच प्रत्याहार बनते हैं, जिनका क्रमशः 'येरोऽनुनासिकेऽनुनासिको वा', 'झरो झरि सवर्णे', 'खरि च', 'अभ्यासे चर्च', शर्पूर्वा खयः' इन सूत्रों में ग्रहण होता है ।

## ह ल् ॥ १५ ॥

ह—इस एक वर्ण को पूर्व वर्णों के सहित उपदेश करके अन्त में लकार को इत् करते हैं । उससे अल्, हल्, वल्, रल्, झल्, शल्—ये छः प्रत्याहार बनते है, जिनका क्रमशः 'अलोऽन्त्यात् पूर्व उपधा', 'हलोऽन्तराः संयोगः', 'लोपो व्योर्वलि', 'रलो व्युपधाद्धलादेः संश्च', 'झलो झलि', 'शर्पूर्वाः खयः',—इन सूत्रों में ग्रहण होता है ।

ण् ङ् ट् ञ् व्—इन वर्णों की इत्संज्ञकता के साथ एक-एक प्रत्याहार

---

१. काशिकायां तु 'एकस्मान् ङञणवटा' इति पाठः, सोऽत्रास्माभिः परिवर्तितः सूत्रानुपूर्वीदर्शनात् । —लेखकः ।

**झयो चयो चतुर्भ्यो रः पञ्चभ्यः शलो षड्भ्यः ॥**

**इत्येकचत्वारिंशत् प्रत्याहाराः । 'अमन्ताड्डः' इति पूर्वोक्तं प्रत्याहार-ञ्चोपयुज्य सर्व एते द्वाचत्वारिंशत् (४२) भवन्ति ।**

**इत्यक्षरसमाम्नायः**

—: ० :—

---

बनता है। जैसे आदि वर्ण अकार के साथ अन्तिम णकार के इत्संज्ञा के सन्नियोग से **अण्**, आदि वर्ण एकार और अन्त्य वर्ण ङकार के साथ **एङ्**, आदि अकार अन्त्य टकार के साथ **अट्**, आदि यकार अन्त्य ञकार के साथ **यञ्**, आदि छकार अन्त्य वकार के साथ **छव्** ।

ष्—इत् वर्ण के साथ दो वर्णों के सन्नियोग से दो प्रत्याहार बनते हैं। जैसे आदि झकार के साथ झष् और आदि भकार के साथ भष् ।

क् ण् म्—इन इत् संज्ञक वर्णों के योग से तीन-तीन प्रत्याहार बनते हैं। जैसे आदिवर्ण अकार, इकार और उकार के अन्त्य ककार के साथ योग से क्रमशः अक्, इक् और उक् प्रत्याहार बने। ऐसे ही इत्संज्ञक पर णकार के साथ आदिवर्ण अकार, इकार और यकार के योग से क्रमशः अण्, इण् और यण् प्रत्याहार बने। तथा आदि वर्ण अकार, यकार और ङकार के इत्संज्ञक मकार के साथ क्रमशः अम्, यम् तथा ङम् ये प्रत्याहार बनते हैं। अन्य प्रत्याहारों को भी निम्नांकित क्रम से समझा जा सकता है :—

चार चार वर्णों से चकारान्त, यकारान्त वाले—अच्, इच्, एच्, ऐच्। तथा यय्, मय्, झय्, खय्। रेफान्त पाँच वर्णों से—यर्, झर्, खर्, चर् शर्। और छः छः वर्णों से शकारान्त तथा लकारान्त। जैसे शकारान्त —अश्, हश्, वश्, झश्, जश्, बश्। लकारान्त—अल्, हल्, वल्, रल्, झल्, शल् ।

इस प्रकार ये ४१ प्रत्याहार हुये। इनमें औणादिक 'अमन्ताड्डः' सूत्र के 'ञम्' प्रत्याहार को जोड़ने पर ४२ प्रत्याहारों का अष्टाध्यायी में प्रयोग पाणिनि द्वारा किया गया है।

—: ० :—

# अथ प्रथमाध्यायस्य प्रथमः पादः

## वृद्धिरादैच् (१-१-१) -३

वृद्धिः । आदैच् । आच्च, ऐच्च-आदैच्[1] (समाहारद्वन्द्वसमासः) । आ ऐ औ इत्येते वर्णा वृद्धिसंज्ञका भवन्ति । सैषा संज्ञा तद्भावितानामतद्भाविताना-ञ्च । तद्भावितानां तावत् आश्वलायनः, ऐतिकायनः । अश्वला-इतिक-शब्दाभ्यां 'नडादिभ्यः फक्' (४-१-९९) इति गोत्रापत्ये फक्प्रत्ययः । 'किति च' (७-२-११८) इत्याद्यज्वृद्धिः । तदानीमेवेवं सूत्रमुपतिष्ठते । कार्यकालं हि संज्ञापरिभाषम् । तत्र स्थानसाम्याद् अकारस्य आकारः, इकारस्य च ऐकारः । आयनेयीनीयियः 'फढखछघां प्रत्ययादीनाम्' (७-१-२) इति फस्यायनादेशः ।

---

### अथ लघुकाशिकायां प्रथमाध्याये प्रथमः पादः

### वृद्धिरादैच् (१-१-१)

**पदच्छेद, विभक्ति, समास**—वृद्धिः १।१ । आदैच् १।१ । आत् और ऐच् इन दो शब्दों के योग से बने आदैच् में समाहार द्वन्द्व समास है । आत् से 'आ' तथा ऐच् से 'ऐ औ' वर्ण गृहीत होते हैं ।

**अर्थ**—आ, ऐ, औ—इन तीन वर्णों की व्याकरणशास्त्र में 'वृद्धि' यह संज्ञा (नाम) की गई है । वृद्धि विधान करके जो स्वर 'आ ऐ औ' रूप

---

1. अत्रार्थवत्त्वाद्भिमक्त्युत्पत्तौपदत्वे 'चोः कुः' इति प्राप्तं कुत्वं भसंज्ञया वार्य्यते । भसंज्ञा च 'अयस्मयादीनि छन्दसि' इत्यनेन 'छन्दस्त्वं पुनश्छन्दोवत्सूत्राणि भवन्ति' इति वचनात् । उद्देश्यमनुदिश्य न विधेयमुदीरयेदिति नियमा-दुद्देश्यबोधकादैच्छब्दस्य (संज्ञिनः) पूर्वप्रयोगः कर्त्तव्य आसीत् । किन्तु विधेयबोधकसंज्ञा-वाचकस्य वृद्धिशब्दस्य पूर्वप्रयोगः कृतः । स च मङ्गलार्थः 'माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते' (महाभाष्यम्) इत्यादि-वचन-प्रामाण्यात् । केषाञ्चिन्मतेन त्रिपदमिदं सूत्र वृद्धिः । आत् । ऐच् । इति ।

यचिभम् (१-४-१८) इति भसंज्ञा। 'यस्येति च' (६-४-१४८) इत्यलोपः। कृत्तद्धितसमासाश्च (१-२-४६) इति प्रातिपदिकसंज्ञा। ततः सौ विभक्तौ रुत्वे-विसर्गे च सिद्धं रूपम्। औपगवः, औपमन्यवः। उपगोरपत्यम्। उपमन्योरपत्य-मिति विग्रहे 'तस्यापत्यम्' (४-१-९२) इत्यणि तद्धितेष्वचामादेः (७-२१-१७) इत्युकारस्य वृद्धिः। तत्र स्थानसाम्यात् उकारस्यौकारः। ओर्गुणः (६-४-१४६) 'इति भस्यांगस्य गुणः। एचोऽयवायावः'(६-१-७८)इत्यवादेशः। अतद्भावितानां खल्वपि शालीयः, मालीयः। शाला माला शब्दाभ्यां 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' (१-१-७३) इति वृद्धसंज्ञावशाद् 'वृद्धाच्छः' (४-२-११४) इति छः प्रत्ययस्तस्य पूर्वसूत्रेण ईयादेशः। शेषं पूर्ववत्। अन्वर्थसंज्ञेयं वर्द्धनं वृद्धिरिति अ इ उ ऋ लृवर्णा वृद्धिं प्राप्य क्रमेण आ ऐ औ आर्, आल् भवन्ति।

## अदेङ् गुणः (१-१-२) -२

अदेङ्। गुणः। अच्च एङ् च अदेङ् (समाहारद्वन्द्वः) अ ए ओ इत्येते वर्णा गुणसंज्ञा भवन्ति। तरिता, चेता, स्तोता। (तृ-प्लवनसंतरणयोः), चिञ्

---

को प्राप्त होते हैं, ऐसे तद्भावितों और पहले से 'आ ऐ औ' रूप वाले अतद्भावितों—दोनों के लिये 'वृद्धि' संज्ञा विहित होती है।

**उदाहरण**—तद्भावितों के उदाहरण हैं—आश्वलायनः, ऐतिकायनः औपगवः, औपमन्यवः। यहाँ अश्वल और इतिक प्रातिपदिक शब्दों से गोत्रा-पत्य में हुये फक् प्रत्यय के फलस्वरूप आदि अच् को वृद्धि और 'फ' को आयनादेश होने पर क्रमशः आश्वलायन, ऐतिकायन रूप बने हैं। इसी प्रकार उपगु, उपमन्यु शब्दों से अपत्यार्थ में हुये अण् प्रत्यय के फलस्वरूप औपगवः, औपमन्यवः शब्द निष्पन्न हुये। अतद्भावितों के उदाहरण हैं—शालीयः, मालीयः। शाला, माला प्रातिदिकों के आदि में विद्यमान स्वर आकार के वृद्धिसंज्ञक होने से इन शब्दों की वृद्ध संज्ञा होती है और वृद्धसंज्ञावशात् हुये छः प्रत्यय और उसको ईयादेश से शाला में रहने वाला शालीयः, माला में रहने वाला मालीयः—ये शब्दरूप निष्पन्न हुये। यहाँ से तृतीय सूत्र तक वृद्धिः पद की अनुवृत्ति जाती है॥ १॥

### अदेङ् गुणः (१-१-२)

अदेङ् १।१। गुणः १।१। अत् और एङ्—इन दो शब्दों के योग से बने अदेङ् शब्द में भी समाहार द्वन्द्व समास है। अत् से 'अ' तथा एङ् से ओ का ग्रहण होता है। अ, ए, ओ—इन तीन वर्णों की गुण संज्ञा होती है। जैसे

(चयने), ष्टुञ् (स्तुतौ) इत्येभ्यो धातुभ्यस्तृन्तृच्तासिषु प्रत्ययेषु परतः 'सार्वधातुकार्धधातुकयोः' (७-३-८४) इत्यंगस्य गुणः। 'उरण् रपरः' (१-१-५१) इति रपरत्वम्। तत्र ऋकारस्य गुणे अर्, इकारस्य एकारः, उकारस्य च ओकारः प्रकृतसंज्ञासूत्रेण 'स्थानेऽन्तरतमः' (१-१-५०) इति परिभाषासूत्रेण च भवति। तद्भावितानामिमान्युदाहरणानि। पचन्ति जयन्ति, (अहं) पचे। डुपचष् (पाके), जि (जये) इत्याभ्यां धातुभ्यां झीट् प्रत्ययोः परतः शपि विकरणेऽनुबन्धलोपे झस्यान्तादेशे, इट्प्रत्ययस्य टेरेत्वे च सति 'अतो गुणे' (६-१-९७) इति पररूपैकादेशः। तदेतान्यतद्भावितोदाहरणानि। इयमप्यन्वर्था संज्ञा गुणयतीति गुणः। इ उ ऋ लृ वर्णा गुणिताः सन्तः क्रमेण ए ओ अर् अल् भवन्ति।

## इको गुणवृद्धी (१-१-३) -६-६

इकः। गुण वृद्धी। गुणश्च वृद्धिश्च गुणवृद्धी (इतरेतरद्वन्द्वः) द्वन्द्वे घि (२-२-३२) इति वृद्धेः पूर्वनिपाते प्राप्ते 'धर्मादिषूभयं पूर्वं निपततीति वार्त्तिकात् (२-२-३४) गुणशब्दस्य पूर्वनिपातः साधुः। परिभाषासूत्रमेतत् स्थानिनियमार्थम्। गुणवृद्धी स्वस्वसंज्ञया विधीयमाने इक एव स्थाने भवतः। 'गुणः स्याद्' 'वृद्धिः स्यादिति' यत्रोच्यते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते इत्यर्थः। तरति, नयति, भवति। तॄ, णीञ् (प्रापणे) भू (सत्तायाम्) इत्येभ्यः शपि

---

तरिता, चेता, स्तोता, पचन्ति, जयन्ति, पचे। इनमें प्रथम तीन शब्द तद्भावितों के उदाहरण हैं और बाद के तीन शब्द अतद्भावितों के। तृ, चि, स्तु धातुओं के ऋ, इ, उ वर्णों को तृच्-तृन्-तासि प्रत्ययों में गुणादेश से तरिता, चेता, स्तोता रूप बने। उधर पच+अन्ति, जय+अन्ति, पच+ए इन उदाहरणों में प्रत्ययों के—अ तथा ए वर्णों के—गुण संज्ञक होने से पूर्वस्वर को पररूपैकादेश होने पर पचन्ति, जयन्ति और पचे ये रूप बनते हैं। इस सूत्र से 'गुणः' पद की अनुवृत्ति तृतीय सूत्र में चलती है ॥ २ ॥

### इको गुणवृद्धी (१-१-३)

इकः ६-१। गुणवृद्धी १-२। गुणवृद्धी में इतरेतर द्वन्द्व समास है। गुण या वृद्धि का नाम लेकर जहाँ भी गुण या वृद्धि का विधान किया जाता है, वह 'इक्' के ही स्थान में हुआ करते हैं। गुण के उदाहरण है—तरति, जयति, भवति। वृद्धि के उदाहरण हैं—अकार्षीत्, अहार्षीत्, अचैषीत्, अनैषीत्, अलावीत्। यहाँ धात्वङ्ग के ऋ, ई, ऊ वर्णों को 'सार्वधातुकार्धधातु-

सार्वधातुकेऽङ्गस्य गुणो विधीयमान इक एव स्थाने भवति। अकार्षीत्, अहार्षीत् अचैषीत्, अनैषीत्, अलावीत्। 'सिचि वृद्धिः परस्मैपदेषु' (७-२-१) इति वृद्धिर्विधीयमाना डुकृञ् (करणे) हृञ् (प्रसह्यकरणे) चिञ्, णीञ्, लूञ् (छेदने) इत्येषामिक एव स्थाने भवति।

## न धातुलोप आर्धधातुके (१-१-४) -६

न। धातुलोपे। आर्धधातुके। धातोर्लोपो यस्मिन् तदिदं धातुलोपं[1] तस्मिन् (बहुव्रीहिः) आर्धधातुकनिमित्ते धातुलोपे सति प्राप्ते गुणवृद्धी न भवतः। लोलुवः, पोपुवः, मरीमृजः। पुनः पुनर्लुनातीति लोलूयते लोलुवः। पुनः पुनः पुनाति (पूञ्=पवने) पोपुवः। पुनः पुनर्मार्ष्टि (मजूष्=शुद्धौ) मरीमृजः। लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि विहिते 'यङोऽचि च' (२-४-७४) इति यङो लुकि कृते तमेवाचमार्धधातुकमाश्रित्य 'सार्वधातुकार्धधातुकयो' (७-३-८४), मृजेर्वृद्धिः (७-२-११४) इति प्रसज्यमाने गुणवृद्धी प्रकृतसूत्रेण प्रतिषिध्येते। सन्यङोः (६-१-९) इति द्विर्वचनम्। गुणो यङ्लुकोः (७-४-८२) इत्यभ्यासस्य गुणः। रीगृदुपधस्य च (७-४-९०) इति रीगागमः। अचिश्नु-धातु० इत्युवङादेशः।

---

कयोः' सूत्र से गुण तथा 'सिचिवृद्धिः परस्मैपदेषु' से वृद्धि हुई है। 'इको गुणवृद्धी' इस पूरे सूत्र की अनुवृत्ति आगे के छठे सूत्र तक जाती है॥ २॥

### न धातुलोप आर्धधातुके (१-१-४)

न (यह अव्यय है, जिसमें विभक्ति का लुक् हो जाता है।) धातु-लोपे ७।१ आर्धधातुके ७।१। धातुलोपे इस शब्द में बहुव्रीहि समास है। आर्धधातुक प्रत्यय के कारण जहाँ धातु के किसी वर्ण का लोप हुआ हो, वहाँ इक् के स्थान में गुणवृद्धि प्राप्त हो भी रही हों, तो नहीं हुआ करेंगी। जैसे, लोलुवः, पोपुवः, मरीमृजः। इन उदाहरणों में यङ् प्रत्यय का लुक् अच् परे हुआ है। अतः उसी निमित्त से प्राप्त ऊ और ऋ अंगों को गुण नहीं हुआ। यहाँ से 'न' की अनुवृत्ति अगले दो सूत्रों तक जाती है॥ ४॥

---

१. अत्रावयवार्थे षष्ठी। तेन धातोरितिपदेन धात्ववयवस्येत्यर्थो गृह्यते।

## क्ङिति च (१-१-५)

क्ङिति । च । ग्च, क्च, ङ्च=क्ङ.[1] । इच्च इच्च=इतः सरूपाणामेक-शेष एक विभक्तौ (१-२-६४) इत्येकशेषः । क्ङ इतो यस्य स क्ङित्, तस्मिन् (द्वन्द्वगर्भोबहुव्रीहिः) । चेन 'इकोगुणवृद्धी नेत्यनुकृष्यते' । क्ङिन्निमित्तके ये गुणवृद्धी इकः स्थाने प्राप्नुतस्ते न भवतः । चितः, चितवान् । स्तुतः, स्तुतवान् । भिन्नः । भिन्नवान् । मृष्टः, मृष्टवान् । चिञ्, ष्टुञ्, भिदिर-(विदारणे) मृजूष् इत्येत्येभ्यः 'निष्ठा' (३-२-१०२) इत्यादिना विहितयोः क्तक्तवतुप्रत्यययोरार्धधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' (७-३-८४), पुगन्तलघूपधस्य च' (७-३-८३), 'मृजेर्वृद्धिः' (७-२-११४) इत्येतैः प्राप्ते गुणवृद्धी कित्त्वादनेन प्रतिषिध्येते । चिनुतः, चिन्वन्ति । मृष्टः, मृजन्ति । 'सार्वधातुकमपित्' (१-२-४) इति तसादिप्रत्ययानां ङित्त्वाद् गुणवृद्धिप्रतिषेधः । भूष्णुः । ग्लाजिस्थश्च ग्स्नुः' (३-२-१३९) इति गिति प्रत्यये च । गुणप्रतिषेधः ।

(वार्तिकम्)=मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते । परिमृजन्ति-परिमार्जन्ति । परिमृजन्तु । परिमार्जन्तु । संक्रमो नाम गुणवृद्धि प्रतिषेधविषयः ।

---

## क्ङिति च (१-१-५)

क्ङिति ७।१ । च (अ०) । क्ङिति पद में द्वन्द्व गर्भ बहुव्रीहि समास है । जहाँ पर गित्, कित् या ङित् प्रत्यय के परे रहते अंग को गुण प्राप्त हो रहा हो, वहाँ इक् को गुण या वृद्धि नहीं होती । चितः, चितवान् । स्तुतः, स्तुतवान् । भिन्नः, भिन्नवान् । मृष्टः, मृष्टवान् । इन उदाहरणों में क्त-क्तवतु प्रत्ययों के कित् होने से आर्धधातुकनिमित्तक प्राप्त गुण-वृद्धि नहीं होते । चिनुतः, चिन्वन्ति । मृष्टः, मृजन्ति । यहाँ तस्-झि प्रत्ययों के ङिद्वद् होने से अंग को प्राप्त गुण-वृद्धि नहीं होते । भूष्णुः । यहाँ प्रत्यय के गित् होने से, प्राप्त गुण नहीं होता ।

---

१. 'अत्र खरि च' (८-४-५५) इत्यनेन गकारस्य ककारे परतश्चर्त्वात् ककारः । मध्यस्थककारस्य ङकारे परतो 'यरोनुनासिकेऽनुनासिकोवा' (८-४-४५) इति ङत्वम् । ततो 'हलोयमां यमिलोपः' (८-४-६४) इति मध्यङकारस्य लोपे 'क्ङो' इति रूपम् । सूत्रभंगभयात् पुनरनुनासिकलोपो नेत्येकः पक्षः । 'क्क्ङिति च' द्विककारको निर्देश इति द्वितीय पक्षः । गिग्निर्देश एव नास्ति 'गलाजिस्थश्च क्स्नुः' (३-२-१३९) इत्यत्राकारस्य प्रश्लिष्ट-निर्देशात् स्थास्नुरितिसिद्धेरि-

## दीधीवेवीटाम् (१-१-६)

दीधीङ् च, वेवीङ् चेट् च=दीधीवेवीटस्तेषाम् (इतरेतरद्वन्द्वः) दीधीङ् (दीप्तिदेवनयोः) वेवीङ् (वेतिनातुल्ये) इत्येतयोर्धात्वोरिटश्च इकः स्थाने प्राप्ते गुणवृद्धी प्रतिषिध्येते। अक्ङिद्विषयार्थ आरम्भः। आदीध्यनम् आवेव्यनम्। (श्वः) कणिता, रणिता। आदीध्यकः आवेव्यकः। ल्युट्तास्योरार्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" (७-३-७४) इति प्राप्तो गुणः, ण्वुलो णित्वात् अचोञ्णिति (७-२-११५) इति प्राप्ता वृद्धिश्च प्रतिषिध्येते।

## हलोऽनन्तराः संयोगः (१-१-७)

हलः। अनन्तराः। संयोगः। न विद्यतेऽन्तरं येषां तेऽनन्तराः (बहुव्रीहिः)। अनन्तरा अतज्जातीयैरज्भिरव्यवहिता हलः संयोग संज्ञा भवन्ति। अग्निरिति ग्नो। अश्व इति श्वो। कर्णइति र्णो। इन्द्रश्चन्द्रो मन्द इति न्द्रः। उष्ट्र इति ष्ट्रः। हल इत्येकशेषोऽत्र द्रष्टव्यः। हल् च हल्च=हलौ। हल् च हल् च हल् चह=लः। हलौ च हलश्च=हलः इति। तेन द्वयोर्बहूनां च संयोगसंज्ञा सिद्धा भवति। संयोग इत्यन्वर्थं संज्ञा संयोजनं संगमन (व्यञ्जनानां)

---

### दीधीवेवीटाम् (१-१-६)

दीधीवेवीटाम् ६·३। इसमें इ० द्वन्द्व समास है। दीधीङ्, वेवीङ् धातुओं और इट् को प्राप्त हो रहे गुण-वृद्धि नहीं होते। आदीध्यनम्, आवेव्यनम्। (श्वः) कणिता, रणिता, आदीध्यकः, आवेव्यकः। ल्युट्, तासि और ण्वुल् प्रत्ययों में ये शब्द बने हैं।

### हलोऽनन्तराः संयोगः (१-१-७)

हलः १।३। अनन्तराः १।३। संयोगः १।१। 'अनन्तराः' शब्द में बहुव्रीहिसमास है। अच् (स्वरों) से रहित हल् (व्यञ्जन) संयोग संज्ञक होते हैं। जैसे अग्निः, अश्वः, कर्णः, इन्द्रः, चन्द्रः, मन्द्रः, उष्ट्रः—इन उदाहरणों में ग्+न्, श्+व्, र्+ण्, न्+द्+र्, ष्+ट्+र्—ये वर्ण (संयुक्त व्यंजन) परस्पर संयोग संज्ञक हैं।

---

त्यपि केचित्। तथा ह्याह न्यासे जिनेन्द्रबुद्धिः 'तस्माद् ग्लाजिस्थश्च क्स्नुरित्याकारप्रश्लेषः कृतः क्स्नु प्रत्ययान्यस्य तिष्ठते राकार एव यथा स्याद् यदन्यत् प्राप्नोति तन्मा भूदित्येवमर्थः। ततश्च तेनैव सिद्धत्वात् स्थास्नुशब्दस्याकिञ्चित्करमिह गकारप्रश्लेषवर्णनमिति"। (न्यासः १-१-५)।

संयोग इति। तथाह्युच्यते—"संयोगस्तु व्यञ्जनसन्निपातः (शौनकप्रातिशाख्यम्) (१-१-१७) इति।

## मुखनासिकावचनोऽनुनासिकः (१-१-८)

मुखनासिकावचनः। अनुनासिकः। मुखञ्च नासिका च=मुखनासिकम्। 'द्वन्द्वश्च प्राणितूर्य सेनाङ्गानाम्'(२-४-२)इत्येकवद्भावः। ईषद्वचनम्=आवचनम्। आवचनं चावचनं च आवचनम्। मुखनासिकमावचनं (किञ्चिन्मुखवचनं किञ्चिन्नासिकावचनं) यस्य वर्णस्य स मुखनासिकावचनः (द्वन्द्वगर्भो बहुव्रीहिः) अथवा मुखेनसहिता नासिका मुखनासिका तयोच्चारितो वचनः (वर्णः) मुखनासिकावचनः (तत्पुरुषः) सोऽनुनासिकसंज्ञो भवति। अभ्र आँ अपः (ऋग्वेदः ५-४८-१), गभीर आँ उग्रपुत्रे, चन आँ इन्द्रः। "आङोऽनुनासिकश्छन्दसि" (६-१-१२६) इत्यचिपरत आङोऽनुनासिकत्वं प्रकृतिभावश्च। अन्वर्थेयमपि संज्ञा-अनुगतो नासिकामनुनासिक इति।

## तुल्यास्यप्रयत्नं सवर्णम् (१-१-९) -१०

तुल्यास्यप्रयत्नम्। सवर्णम्। आस्ये प्रयत्नः आस्यप्रयत्नः (सप्तमीतत्पुरुषः) तुल्य आस्यप्रयत्नो यस्य (वर्णस्य) तत्तुल्यास्यप्रयत्नम् (बहुव्रीहिः) तुल्य आस्ये (मुखे ताल्वादिस्थाने) प्रयत्नो येषां वर्णानां ते परस्परं सवर्णसंज्ञा भवन्ति। स्पृष्टेषत्स्पृष्टसंवृतविवृतेषद्विवृतभेदानां मध्ये संवृतवर्जाश्चत्वार

---

### मुखनासिकावचनोऽनुनासिकः (१-१-८)

मुखनासिकावचनः १।१। अनुनासिकः १।१ मुख० में द्वन्द्वगर्भबहुव्रीहि समास है। पक्षान्तर में तृतीयातत्पुरुष भी संभव है। मुख और नाक से साथ-साथ जो वर्ण उच्चारण किया जाये, वह अनुनासिक संज्ञक होता है। अभ्रआँ अपः। गभीर आँ उग्रपुत्रे। चनआँ इन्द्रः। यहाँ आँ की अनुनासिक संज्ञा है। फलतः इन वैदिक प्रयोगों में अगले स्वर के साथ प्राप्त सन्धि न होकर प्रकृतिभाव होता है।

### तुल्यास्यप्रयत्नं सवर्णम् (१-१-९)

तुल्यास्यप्रयत्नम् १।१। सवर्णम् १।१। तुल्यास्य० शब्द में बहुव्रीहि समास है। मुख के भीतर वर्णों का जब तालु आदि स्थान और आभ्यन्तर प्रयत्न समान हो, तब वे वर्ण परस्पर सवर्ण संज्ञक होते हैं। दण्ड+अग्रम्=दण्डाग्रम्। खट्वा+अग्रम्=खट्वाग्रम्। यहाँ पूर्वपर अ+अ तथा आ+अ

आभ्यन्तरप्रयत्ना अत्राश्रीयन्ते। तत्र स्पर्शानां कादिमपर्यन्तानां पञ्चवर्गाणां स्पृष्टः प्रयत्नः। अन्तस्थानां यवरलानामीषत्स्पृष्टः प्रयत्नः। ऊष्मणां शषसहानामीषद्विवृतः प्रयत्नः। स्वराणामकारादीनाम् औकारान्तानां विवृत एव संवृतस्त्वकारो ह्रस्वः। प्रक्रियायां विवृतो भवति। विवारसंवारश्वासनादघोषाघोषाल्पप्राणमहाप्राणभेदादष्टौ बाह्यप्रयत्नाः। तत्र वर्गाणां प्रथमतृतीयौ यणश्चाल्पप्राणाः, द्वितीय चतुर्थौ शलश्च महाप्राणाः। खरो विवाराः श्वासा अघोषाश्च, हशः संवारा नादा घोषाश्च। वर्णानामुच्चारणयाष्टौ स्थानानि भवन्ति। "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ चतालु च।" तत्र अकुहविसर्जनीयानां स्थानं कण्ठः, इचुयशानां तालु, उपूपध्मानीयानाभोष्ठौ, ऋटुरषाणां मूर्धा, लृतुलसानां दन्ताः, वकारस्य दन्तोष्ठम् = ए-ऐ कण्ठ तालव्यौ ओ-औ कण्ठोष्ठयौ, अनुस्वारयमा नासिक्याः, आश्रयस्थानभागिनोऽयोगवाहाः। अ इ उ ऊ ऋ वर्णाना मेकैकस्याष्टादश भेदा भवन्ति। तद्यथा ह्रस्वोदात्तः, ह्रस्वानुदात्तः ह्रस्व स्वरितः, दीर्घोदात्तः, दीर्घानुदात्तः, दीर्घस्वरितः, प्लुतादात्तः, प्लुतोनुदात्तः, प्लुतस्वरितः। इमे नव सानुनासिकनिरनुनासिकभेदेनाष्टावश जायन्ते। लृकारस्य दीर्घाभावात् सन्ध्य-

---

वर्णों की परस्पर सवर्ण संज्ञा होने से 'अकःसवर्णेदीर्घः' से दीर्घेकादेश हुआ। होतृ+लृकारः। इस प्रयोग में ऋ और लृ वर्णों की वार्त्तिक द्वारा सवर्णसंज्ञा होने से और 'लृ' को दीर्घ न होने से ऋकार को दीर्घादेश हो गया है। सवर्णम् की अनुवृत्ति १-१-१० तक जाती है।

सवर्णसंज्ञा के प्रसंग में पाणिनीय शिक्षा में पठित वर्णों के स्थान तथा आभ्यन्तर और बाह्यप्रयत्न भी जानने योग्य हैं। जो इस प्रकार हैं:—

**वर्णों के स्थान**—अ कु (कवर्ग—कखगघङ) ह तथा विसर्गों का स्थान मुख के भीतर **कण्ठ** है। इ चु (चवर्ग—चछजझञ) य श का तालु; उ पु (पवर्ग—पफबभम) तथा उपध्मानीय (⌣प⌣फ) का **ओष्ठ**; ऋ टु (टवर्ग—टठडढण) र ष का **मूर्धा**; लृ तु (तवर्ग-तथदधन) ल स का दन्त; वकार का दन्त और ओष्ठ; ए-ऐ का कण्ठ और तालु; और ओ औ का कण्ठ और ओष्ठ है?

जिह्वामूलीय ⌣क⌣ख का जिह्वामूलीय, ञमङणन का स्वस्वस्थान और नासिका तथा अनुस्वार का स्थान नासिका है।

क्षराणां ह्रस्वाभावाद् द्वादश द्वादश भेदाः। यवला सानुनासिकनिरनुनासिकभेदेन षट्। रेफोष्मणां पञ्चानां सवर्णा न सन्ति। वर्ग्यो वर्ग्येण सवर्णः। दण्डाग्रम्, खट्वाग्रम्। 'अकः सवर्णे दीर्घः (६-१-१०१) इति सवर्णाकारयोः स्थाने दीर्घ एकादेशो भवति। (वा०) ऋकारलृकारयोः सवर्णसंज्ञावक्तव्या। होतृ+लृकार=होतॄकारः। उभयोर्ऋवर्णस्य चान्तरतमः सवर्णो दीर्घो नास्तीति-ऋकारएवदीर्घो भवति।

## नाज्झलौ (१-१-१०)

न। अज्झलौ। अच्च हल्च=अज्झलौ (इतरेतरद्वन्द्वः)। तुल्यास्यप्रयत्नावपि अज्झलौ परस्परं सवर्णसंज्ञौ न भवतः। दण्डहस्तः, दधिशीतम्। अकारहकारौ, इकारशकारौ च यद्यपि मिथः तुल्यस्थानौ, तथापि सवर्णदीर्घत्वं न भवति प्रकृतसूत्रेण तत्र सवर्णसंज्ञाप्रतिषेधात्। विपाशि भवः=वैपाशो मत्स्यः, अनडुहो विकारः=आनडुहं चर्म। तद्धितेऽणप्रत्यये परतः 'यस्येति च' (६-४-१४८) इतीकारेण तुल्यस्थानस्य शकारस्य, अकारेण च तुल्यस्थानस्य हकारस्य सवर्णसंज्ञाऽभावात् लोपो न भवति।

---

**पञ्च आभ्यन्तर प्रयत्न**—क से म तक २५ वर्णों का स्पृष्ट प्रयत्न है और वे स्पर्श कहलाते हैं।

य व र ल—अन्तःस्थों का ईषत्स्पृष्ट, श ष स ह—ऊष्मों का ईषद्-विवृत, अचों (स्वरों) का विवृत तथा ह्रस्व अकार का से संवृत है, जो व्याकरण प्रक्रियाकाल में विवृत ही माना जाता है।

**एकादश-बाह्य प्रयत्न**—खर् प्रत्याहारस्थ वर्णों का विवार-श्वास-अघोष; हश् का संवाद-नाद-घोष; वर्गों के प्रथम-तृतीय पञ्चम वर्णों और यण् का अल्पप्राण; वर्गों के द्वितीय-चतुर्थ और शल् का महाप्राण।

## नाज्झलौ (१-१-१०)

न (अ०)। अज्झलौ १।२। इ० द्वन्द्व समास। अच् और हल् तुल्य स्थान होते हुए भी परस्पर सवर्णसंज्ञक नहीं होते। दण्डहस्तः। दधिशीतम्। यहाँ अ+ह कण्ठस्थानी और इ+श् तालुस्थानी होते हुए भी परस्पर सवर्ण नहीं होते। फलतः सवर्ण दीर्घ सन्धि नहीं होती।

## ईदूदेद्द्विवचनं प्रगृह्यम् (१-१-११) -१२, -१९

ईदूदेद्द्विवचनम्। प्रगृह्यम्। ईच्च ऊच्च एच्च=ईदूदेत् (समाहार द्वन्द्वः)। ईदूदेच्च तद् द्विवचनम् ईदूदेद्द्विवचनम् (कर्मधारयः)। ईदन्त मूदन्तमेदन्तं[1] द्विवचनं शब्दरूपं प्रगृह्यसंज्ञं भवति। अग्नी इति। वायू इति। माले इति। पचेते इति। पचेथे इति। प्रगृह्यसंज्ञात्वात् 'प्लुतप्रगृह्या अचि नित्यम्' (६-१-१२५) इति प्रकृतिभावो भवति।

## अदसो मात् (१-१-१२)

अदसः। मात्। अदसो मकारात् पर ईदूदेतः प्रगृह्यसंज्ञा भवन्ति। अमी अत्र। अमी आसते। अमू अत्र। अमू आसाते। प्रगृह्यत्वात् प्रकृतिभावः।

## शे (१-१-१३)

'शे' इति लुप्तप्रथमान्तो निर्देशः। 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' (७-१-३९) इति सुपां छान्दस आदेशो गृह्यते। तदन्तं शब्दरूपं

---

### ईदूदेद्द्विवचनं प्रगृह्यम् (१-१-११)

ईदूदेद्द्विवचनम् १।१। प्रगृह्यम् १।१। ईदूदेद् में स० द्वन्द्वगर्भकर्मधारय समासः। ईकारान्त, ऊकारान्त और एकारान्त द्विवचनान्त शब्दों की प्रगृह्य संज्ञा होती है। अग्नी इति। वायू इति। माले इति। पचेते इति। पचेथे इति। प्रगृह्यसंज्ञा के कारण इन शब्दों के अच् परे रहने पर प्रकृतिभाव होने से यण्-अय् सन्धि नहीं होती। यहाँ से प्रगृह्यम् की अनुवृत्ति १९वें सूत्र तक और ईदूदेत्० की १२वें सूत्र तक जाती है॥ ११॥

### अदसो मात् (१-१-१२)

अदसः ६।१। मात् ५।१। अदस् शब्द के मकार से परे ई या ऊ जब हों तो उस शब्द रूप की प्रगृह्य संज्ञा होती है। अमी अत्र। अमी आसते। अमू अत्र। अमू आसाते। एकारान्त अदस् का प्रयोग नहीं होता। यहाँ भी प्रगृह्य संज्ञा से प्रकृतिभाव हुआ है॥ १२॥

### शे (१-१-१३)

'शे' शब्द में प्रथमा विभक्ति का सूत्रों को छन्दोवत् मानकर बहुलता से लुक् हुआ है। 'शे' जिनके अन्त में हों तदन्त शब्द रूप की प्रगृह्य संज्ञा

---

१. 'येन विधिस्तदन्तस्य' (१-१-७२) इति परिभाषाबलादन्तशब्दो विशेषणत्वेनोपादीयते।

प्रगृह्यसंज्ञं भवति । अस्मे इन्द्राबृहस्पती । युष्मेवाज० युष्मे इति । अस्मे इति । त्वे रायो मे रायः । त्वे इति । मे इति । पूर्वं वैदिकमुदाहरणमितरत्तु लौकिकमनुकरणम् । -१५

## निपात एकाजनाङ् (१-१-१४)

निपातः । एकाच् । अनाङ् । एकश्चासावच्च एकाच् (कर्मधारयः) । न आङ् अनाङ् । (नञ्तत्पुरुषः) । एकाज्यो निपात आङ्वर्जितः सः प्रगृह्य-संज्ञो भवति । अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । आ एवं नु मन्यसे । आ एवं किल तत् । प्रगृह्यत्वात् प्रकृतिभावः ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्य-स्मरणयोरङित् । आ+उदकान्तात्=ओदकान्तात् अत्र मर्यादायामर्थे ङिदकारः । -१६

## ओत् (१-१-१५)

ओदन्तो निपातः प्रगृह्यसंज्ञो भवति । आहो इति । उताहो इति । प्रगृह्यत्वात् प्रकृतिभावः । -१८

## सम्बुद्धौ शाकल्यस्येतावनार्षे (१ १ १६)

सम्बुद्धौ । शाकल्यस्य । इतौ । अनार्षे । न आर्षः=अनार्षस्तस्मिन्

---

होती है । अस्मे इन्द्रावृहस्पती । युष्मे इति । अस्मे इति । त्वे रायः । मे रायः । त्वे इति । मे इति । प्रथम वैदिक उदाहरण है । शेष लौकिक अनुकरण हैं ।

### निपात् एकाजनाङ् (१-१-१४)

निपातः १।१ । एकाज् १।१ । अनाङ् १।१ । एकाच् में कर्मधारय तथा अनाङ् में नञ्तत्पुरुष समास है । आङ् को छोड़कर जो एकाकी अच् निपात हो तो उसकी प्रगृह्य संज्ञा होती है । अ पेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । आ एवं नु मन्यसे । आ एवं किल तद् । प्रगृह्यता से प्रकृतिभाव हुआ । यहाँ से निपात पद की अनुवृत्ति पन्द्रहवें सूत्र तक जाती है ।

### ओत् (१-१-१५)

ओत् १।१ । ओकारान्त निपात की प्रगृह्य संज्ञा होती है । आहो इति । उताहो इति । ओत् १६वें सूत्र तक जाता है ।

### सम्बुद्धौ शाकल्यस्येताव नार्षे (१-१-१६)

सम्बुद्धौ ७।१ । शाकल्यस्य ६।१ । इतौ ७।१ । अनार्षे ७।१ । अ नार्ष में

(नञ्तत्पुरुषः)। सम्बुद्धिनिमित्त ओकारः शाकल्यस्याचार्यस्य मतेन इति शब्देऽनार्षे (अवैदिके, परतः प्रगृह्यसंज्ञो भवति। वायो इति। वायविति। भानो इति। भानविति। शाकल्यस्यमतेन प्रकृतिभावः। पक्षान्तरे 'एचोऽयवायाव.' (६-१-७८) इत्यवादेशः।

### उञः (१-१-१७) -१८

उञः प्रगृह्यसंज्ञा भवति इतौ शाकल्यस्याचार्यस्य मतेन। उ इति विति। प्रगृह्यसंज्ञाऽभावपक्षे 'इको यणचि' (६-१-७७) इति वकारादेशः।

### ऊँ (१-१-१८)

उञः ऊँ इत्ययमादेशश्च भवतीतावनार्षे शाकल्यस्य मतेन। तेन त्रीणि रूपाणि भवन्ति उ इति, विति, ऊँ इति। शाकल्यग्रहणं सर्वत्र विभाषार्थम्।

### ईदूतौ च सप्तम्यर्थे (१-१-१९)

ईदूतौ। च। सप्तम्यर्थे। ईच्च ऊच्च ईदूतौ (इतरेतरद्वन्द्वः)। सप्तम्या अर्थः सप्तम्यर्थः, तस्मिन् (षष्ठीतत्पुरुषः)। ईकारान्त ऊकारान्तश्च

---

नञ्तत्पुरुष समास है। सम्बुद्धि निमित्तक ओकारान्त शब्द की शाकल्य आचार्य के मत में (अवैदिक) इति शब्द परे रहने पर प्रगृह्य संज्ञा होती है। वायो इति। वायविति। भानो इति। भानविति। प्रगृह्य संज्ञा से भिन्न पक्ष में ओ को अवादेश हुआ। १८वें सूत्र तक यह सूत्र अनुवृत्त होता है, सम्बुद्धौ पद को छोड़कर।

#### उञ (१-१-१७)

उञः ६।१। उञ् की इत् परे रहते शाकल्य के मत में प्रगृह्य संज्ञा होती है। उ इति। विति। पक्षान्तर में यणादेश हुआ। उञ. की अनुवृत्ति आगामी सूत्र में जाती है।

#### ऊँ (१-१-१८)

ऊँ १।१। उञ् को ऊँ आदेश भी होता है अनार्ष इति शब्द के परे रहने पर, शाकल्प आचार्य के मत में। इससे कुल तीन रूप बनते हैं। उ इति। विति। ऊँ इति।

#### ईदूतौ च सप्तम्यर्थे (१-१-१९)

ईदूतौ १।२ च (अ०)। सप्तम्यर्थे ७।१। ईदूतौ में इ० द्वन्द्व और सप्तम्यर्थे में षष्ठी तत्पुरुष समास है। सप्तमी विभक्ति के अर्थ में विद्यमान

शब्दो सप्तम्यर्थे वर्त्तमानो प्रगृह्यसंज्ञो भवतः। अध्यस्यां मामकी तनू इति। सोमो गौरी अधिश्रितः। 'मामक्यां तन्वाम्', 'गौर्य्याम्', इति प्राप्ते 'सुपां सुलुक्०' (७-१-३९) इति सप्तम्या लुक्। 'तनू गौरी' इत्येतयोरचि परतो यणादेशो न भवति प्रगृह्यसंज्ञत्वात्।

## दाधा घ्वदाप् (१-१ २०)

दाधाः। घु। अदाप्। दाश्च धाश्च दाधाः (इतरेतरद्वन्द्वः) दाप् च दैप् च दाप्। न दाप्=अदाप् (नञ्तत्पुरुषः) दारूपा धारूपाश्च धातवो दाप-दैपौ वर्जयित्वा घुसंज्ञा भवन्ति। दारूपाश्चत्वारः डुदाञ=दाने, दाण्=दाने, दो=अवखण्डने, देङ्=रक्षणे इति। धारूपा द्वौ डुधाञ्=धारणपोषणयोः, धेट्=पाने इति। प्रणिददाति, प्रणिदाता, प्रणिद्यति, प्रणिदधाति,। 'नेर्गदन-दपतपदघुमास्यतिहन्तियातिवाति-द्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु-च' (८-४-१७) इति णत्वं भवति।

## आद्यन्तवदेकस्मिन् (१-१-२१)

आद्यन्तवत्। एकस्मिन्। आदिश्च अन्तश्च=आद्यन्तौ (इतरेतर द्वन्द्वः) आद्यन्तयोरिव आद्यन्तवत्। 'तत्र तस्येव' (५-१-११६) इति षष्ठ्यर्थे

---

ईकारान्त और ऊकारान्त वैदिक शब्दों की प्रगृह्य संज्ञा होती है। अध्यस्यां मामकी तनू इति। सोमो गौरी अधिश्रितः। यहाँ तनू गौरी ये शब्द सप्तम्यर्थक प्रगृह्य संज्ञक हैं ॥ १९ ॥

### दाधा घ्वदाप् (१-१-२०)

दाधाः १।३। घु १।१। अदाप् १।१। दाधाः में इ० द्वन्द्व और अदाप् में नञ्तत्पुरुष समास है। दारूप (चार) और धारूप (दो) धातु दाप् और दैप् को छोड़कर घु संज्ञक होती हैं। प्रणिददाति। प्रणिदाता। प्रणिद्यति। प्रणिदधाति। डुदाञ् दाने, दो अवखण्डेन और डुधाञ् धारणपोषणायोः के प्रनि उपसर्गपूर्वक ये रूप हैं। घु-संज्ञा-वशात् 'नेर्गदनद-घु-देग्धिषु च' सूत्र से नि के नकार को णकारादेश हुआ ॥ २० ॥

### आद्यन्तवदेकस्मिन् (१-१-२१)

आद्यन्तवत् (अ०)। एकस्मिन् ७।१। आद्यन्तौ इस इ० द्वन्द्व समास में इवार्थ में वतिप्रत्यय होकर आद्यन्तवत् बना है। एक वर्ण में आदि के समान और अन्त के समान कार्य होता है। औपगवम्। आम्राम्। यहाँ औपगवम्

सप्तम्यर्थे वा वतिप्रत्ययः। एकस्मिन्नपि आदाविव अन्त इव कार्यं भवति। औपगवम्। आद्युदात्तश्च' (३-१-३) इत्यणप्रत्ययस्याकारोऽसहायोऽपि सन्नुदात्तो भवति प्रकृतातिदेशसूत्रादेव। आभ्याम्। 'सुपि च' (७-३-१०२) इत्यकारमात्रस्यांगस्यान्तवद्भावाद् दीर्घो भवति।

## तरप्तमपौ घः (१-१ २२)

तरप्तमपौ। घः। तरप् च तमप् च=तरप्तमपौ (इतरेतरद्वन्द्वः)। तरप्तमपौ प्रत्ययौ घसंज्ञौ भवतः। कुमारितरा, कुमारितमा। ब्राह्मणितरा, ब्राह्मणितमा। 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः (६-३-४३) इति घे ङीबन्तस्यानेकाचो ह्रस्वः।

## बहुगणवतुडति संख्या (१-१-२३) -२५

बहुगणवतुडति। संख्या। बहुश्च गणश्च वतुश्च डतिश्च बहुगणवतुडति (समाहारद्वन्द्वः) बहुगणौ वत्वन्तडत्यन्तौ च शब्दौ संख्यासंज्ञौ भवतः। बहुकृत्वः, बहुधा, बहुकः, बहुशः गणकृत्वः गणधा, गणकः, गणशः, तावत्कृत्वः, तावद्धा, तावत्कः, तावच्छः, कतिकृत्वः, कतिधा, कतिकः, कतिशः। संख्यासंज्ञावशात् 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (५-४-१७) इति कृत्वसुच् प्रत्ययो

---

में अपत्यार्थ में हुये अण् प्रत्यय के 'अ' को आदिवत् मानते हुये आद्युदात्त स्वरविधान से उदात्तादेश अकेले में भी हो गया और आभ्याम् में भ्याम् परे रहते अंग के अ को इस सूत्र से अन्तवत् मानकर 'सुपि च' सूत्र से दीर्घ हो गया॥ २१॥

## तरप्तमपौ घः (१-१-२२)

तरप्तमपौ १।२। घः १।१। तरप्तमपौ में इ० द्वन्द्व समास है। तरप और तमप् प्रत्ययों की घसंज्ञा होती है। कुमारितरा, कुमारितमा, ब्राह्मणितरा, ब्राह्मणितमा। यहाँ तरप्-तमप् की घ संज्ञा होने से 'घरूपकल्प०' इत्यादि सूत्र से अनेकाच् ङीबन्त पूर्वपद को ह्रस्वादेश हो गया है।

## बहुगणवतुडति संख्या (१-१-२३)

बहुगणवतुडति १।१। संख्या १।१। बहु० इस शब्द में स० द्वन्द्व समास है। बहु, गण, वतुबन्त और डत्यन्त शब्दों की संख्या संज्ञा होती है। बहुकृत्वः, बहुधा, बहुकः, बहुशः। गणकृत्वः, गणधा, गणकः, गणशः,। तावत्कृत्वः, तावद्धा, तावत्कः, तावच्छः। कतिकृत्वः, कतिधा, कतिक,

प्रगृह्यसंज्ञं भवति। अस्मे इन्द्राबृहस्पती। युष्मेवाज० युष्मे इति। अस्मे इति। त्वे रायो मे रायः। त्वे इति। मे इति। पूर्वं वैदिकमुदाहरणमितरतत्तु लौकिकमनुकरणम्।

## निपात एकाजनाङ् (१-१-१४) -१५

निपातः। एकाच्। अनाङ्। एकश्चासावच्च एकाच् (कर्मधारयः)। न आङ् अनाङ्। (नञ्तत्पुरुषः)। एकाज्यो निपात आङ्वर्जितः सः प्रगृह्यसंज्ञो भवति। अ अपेहि। इ इन्द्रं पश्य। उ उत्तिष्ठ। आ एवं नु मन्यसे। आ एवं किल तत्। प्रगृह्यत्वात् प्रकृतिभावः।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्। आ+उदकान्तात्=ओदकान्तात् अत्र मर्यादायामर्थे ङिदकारः।

## ओत् (१-१-१५) -१६

ओदन्तो निपातः प्रगृह्यसंज्ञो भवति। आहो इति। उताहो इति। प्रगृह्यत्वात् प्रकृतिभावः।

## सम्बुद्धौ शाकल्यस्येतावनार्षे (१ १ १६) -१८

सम्बुद्धौ। शाकल्यस्य। इतौ। अनार्षे। न आर्षः=अनार्षस्तस्मिन्

---

होती है। अस्मे इन्द्राबृहस्पती। युष्मे इति। अस्मे इति। त्वे रायः। मे रायः। त्वे इति। मे इति। प्रथम वैदिक उदाहरण है। शेष लौकिक अनुकरण हैं।

**निपात् एकाजनाङ् (१-१-१४)**

निपातः १।१। एकाज् १।१। अनाङ् १।१। एकाच् में कर्मधारय तथा अनाङ् में नञ्तत्पुरुष समास है। आङ् को छोड़कर जो एकाकी अच् निपात हो तो उसकी प्रगृह्य संज्ञा होती है। अ पेहि। इ इन्द्रं पश्य। उ उत्तिष्ठ। आ एवं नु मन्यसे। आ एवं किल तद्। प्रगृह्यता से प्रकृतिभाव हुआ। यहाँ से निपात पद की अनुवृत्ति पन्द्रहवें सूत्र तक जाती है।

**ओत् (१-१-१५)**

ओत् १।१। ओकारान्त निपात की प्रगृह्य संज्ञा होती है। आहो इति। उताहो इति। ओत् १६वें सूत्र तक जाता है।

**सम्बुद्धौ शाकल्यस्येताव नार्षे (१-१-१६)**

सम्बुद्धौ ७।१। शाकल्यस्य ६।१। इतौ ७।१। अनार्षे ७।१। अनार्ष में

(नञ्तत्पुरुषः)। सम्बुद्धिनिमित्त ओकारः शाकल्यस्याचार्यस्य मतेन इति शब्दे-ऽनार्षे (अवैदिके, परतः प्रगृह्यसंज्ञो भवति। वायो इति। वायविति। भानो इति। भानविति। शाकल्यस्यमतेन प्रकृतिभावः। पक्षान्तरे 'एचोऽयवायावः' (६-१-७८) इत्यवादेशः।

उञः (१-१-१७) -१८

उञः प्रगृह्यसंज्ञा भवति इतौ शाकल्यस्याचार्यस्य मतेन। उ इति विति। प्रगृह्यसंज्ञाऽभावपक्षे 'इको यणचि' (६-१-७७) इति वकारादेशः।

ऊँ (१-१-१८)

उञः ऊँ इत्ययमादेशश्च भवतीतावनार्षे शाकल्यस्य मतेन। तेन त्रीणि रूपाणि भवन्ति उ इति, विति, ऊँ इति। शाकल्यग्रहणं सर्वत्र विभाषार्थम्।

ईदूतौ च सप्तम्यर्थे (१-१-१९)

ईदूतौ। च। सप्तम्यर्थे। ईच्च ऊच्च ईदूतौ (इतरेतरद्वन्द्वः)। सप्तम्या अर्थः सप्तम्यर्थः, तस्मिन् (षष्ठीतत्पुरुषः)। ईकारान्त ऊकारान्तश्च

---

नञ्तत्पुरुष समास है। सम्बुद्धि निमित्तक ओकारान्त शब्द की शाकल्य आचार्य के मत में (अवैदिक) इति शब्द परे रहने पर प्रगृह्य संज्ञा होती है। वायो इति। वायविति। भानो इति। भानविति। प्रगृह्य संज्ञा से भिन्न पक्ष में ओ को अवादेश हुआ। १८वें सूत्र तक यह सूत्र अनुवृत्त होता है, सम्बुद्धौ पद को छोड़कर।

उञ (१-१-१७)

उञः ६।१। उञ् की इतु परे रहते शाकल्य के मत में प्रगृह्य संज्ञा होती है। उ इति। विति। पक्षान्तर में यणादेश हुआ। उञ. की अनुवृत्ति आगामी सूत्र में जाती है।

ऊँ (१-१-१८)

ऊँ १।१। उञ् को ऊँ आदेश भी होता है अनार्ष इति शब्द के परे रहने पर, शाकल्प आचार्य के मत में। इससे कुल तीन रूप बनते हैं। उ इति। विति। ऊँ इति।

ईदूतौ च सप्तम्यर्थे (१-१-१९)

ईदूतौ १।२ च (अ०)। सप्तम्यर्थे ७।१। ईदूतौ में इ० द्वन्द्व और सप्तम्यर्थे में षष्ठी तत्पुरुष समास है। सप्तमी विभक्ति के अर्थ में विद्यमान

शब्दो सप्तम्यर्थे वर्त्तमानौ प्रगृह्यसंज्ञौ भवतः। अध्यस्यां मामकी तनू इति। सोमो गौरी अधिश्रितः। 'मामक्यां तन्वाम्', 'गौर्य्याम्', इति प्राप्ते 'सुपां सुलुक्०' (७-१-३९) इति सप्तम्या लुक्। 'तनू गौरी' इत्येतयोरचि परतो यणादेशो न भवति प्रगृह्यसंज्ञत्वात्।

## दाधा घ्वदाप् (१-१ २०)

दाधाः। घु। अदाप्। दाश्च धाश्च दाधाः (इतरेतरद्वन्द्वः) दाप् च दैप् च दाप्। न दाप्=अदाप् (नञ्तत्पुरुषः) दारूपा धारूपाश्च धातवो दाप-दैपौ वर्जयित्वा घुसंज्ञा भवन्ति। दारूपाश्चत्वारः डुदाञ=दाने, दाण्=दाने, दो=अवखण्डने, देङ्=रक्षणे इति। धारूपा द्वौ डुधाञ्=धारणपोषणयोः, धेट्=पाने इति। प्रणिददाति, प्रणिदाता, प्रणिद्यति, प्रणिदधाति,। 'नेर्गदन-दपतपदघुमास्यतिहन्तियातिवाति-द्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु-च' (८-४-१७) इति णत्वं भवति।

## आद्यन्तवदेकस्मिन् (१-१-२१)

आद्यन्तवत्। एकस्मिन्। आदिश्च अन्तश्च=आद्यन्तौ (इतरेतर द्वन्द्वः) आद्यन्तयोरिव आद्यन्तवत्। 'तत्र तस्येव' (५-१-११६) इति षष्ठ्यर्थे

---

ईकारान्त और ऊकारान्त वैदिक शब्दों की प्रगृह्य संज्ञा होती है। अध्यस्यां मामकी तनू इति। सोमो गौरी अधिश्रितः। यहाँ तनू गौरी ये शब्द सप्तम्य-र्थक प्रगृह्य संज्ञक है।। १९।।

### दाधा घ्वदाप् (१-१-२०)

दाधाः १।३। घु १।१। अदाप् १।१। दाधाः में इ० द्वन्द्व और अदाप् में नञ्तत्पुरुष समास है। दारूप (चार) और धारूप (दो) धातु दाप् और दैप् को छोड़कर घु संज्ञक होती हैं। प्रणिददाति। प्रणिदाता। प्रणिद्यति। प्रणि-दधाति। डुदाञ् दाने, दो अवखण्डेन और डुधाञ् धारणपोषणायोः के प्रनि उपसर्गपूर्वक ये रूप हैं। घु-संज्ञा-वशात् 'नेर्गदनद-घु-देग्धिषु च' सूत्र से नि के नकार को णकारादेश हुआ।। २०।।

### आद्यन्तवदेकस्मिन् (१-१-२१)

आद्यन्तवत् (अ०)। एकस्मिन् ७।१। आद्यन्तौ इस इ० द्वन्द्व समास में इवार्थ में वतिप्रत्यय होकर आद्यन्तवत् बना है। एक वर्ण में आदि के समान और अन्त के समान कार्य होता है। औपगवम्। आम्रम्। यहाँ औपगवम्

सप्तम्यर्थे वा वतिप्रत्ययः। एकस्मिन्नपि आदाविव अन्त इव कार्यं भवति। औपगवम्। आद्युदात्तश्च (३-१-३) इत्यण्प्रत्ययस्याकारोऽसहायोऽपि सन्नुदात्तो भवति प्रकृतातिदेशसूत्रादेव। 'आभ्याम्। 'सुपि च' (७-३-१०२) इत्यकारमात्रस्यांगस्यान्तवद्भावाद् दीर्घो भवति।

## तरप्तमपौ घः (१-१ २२)

तरप्तमपौ। घः। तरप् च तमप् च=तरप्तमपौ (इतरेतरद्वन्द्वः)। तरप्तमपौ प्रत्ययौ घसंज्ञौ भवतः। कुमारितरा, कुमारितमा। ब्राह्मणितरा, ब्राह्मणितमा। 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः (६-३-४३) इति घे ङीबन्तस्यानेकाचो ह्रस्वः।

## बहुगणवतुडति संख्या (१-१-२३) -२५

बहुगणवतुडति। संख्या। बहुश्च गणश्च वतुश्च डतिश्च बहुगणवतुडति (समाहारद्वन्द्वः) बहुगणौ वत्वन्तडत्यन्तौ च शब्दौ संख्यासंज्ञौ भवतः। बहुकृत्वः, बहुधा, बहुकः, बहुशः गणकृत्वः गणधा, गणकः, गणशः, तावत्कृत्वः, तावद्धा, तावत्कः, तावच्छः, कतिकृत्वः, कतिधा, कतिकः, कतिशः। संख्यासंज्ञावशात् 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (५-४-१७) इति कृत्वसुच् प्रत्ययो

---

में अपत्यार्थ में हुये अण् प्रत्यय के 'अ' को आदिवत् मानते हुये आद्युदात्त स्वरविधान से उदात्तादेश अकेले में भी हो गया और आभ्याम् में भ्याम् परे रहते अंग के अ को इस सूत्र से अन्तवत् मानकर 'सुपि च' सूत्र से दीर्घ हो गया॥ २१॥

### तरप्तमपौ घः (१-१-२२)

तरप्तमपौ १।२। घः १।१। तरप्तमपौ में इ० द्वन्द्व समास है। तरप और तमप् प्रत्ययों की घसंज्ञा होती है। कुमारितरा, कुमारितमा, ब्राह्मणितरा, ब्राह्मणितमा। यहाँ तरप्-तमप् की घ संज्ञा होने से 'घरूपकल्प०' इत्यादि सूत्र से अनेकाच् ङीबन्त पूर्वपद को ह्रस्वादेश हो गया है।

### बहुगणवतुडति संख्या (१-१-२३)

बहुगणवतुडति १।१। संख्या १।१। बहु० इस शब्द में स० द्वन्द्व समास है। बहु, गण, वतुबन्त और डत्यन्त शब्दों की संख्या संज्ञा होती है। बहुकृत्वः, बहुधा, बहुकः, बहुशः। गणकृत्वः, गणधा, गणकः, गणशः,। तावत्कृत्वः, तावद्धा, तावत्कः, तावच्छः। कतिकृत्वः, कतिधा, कतिक,

भवति । संख्यायाः विधार्थे धा (५-३-४२) इति धाप्रत्ययः । 'संख्याया अतिशदन्तायाः कन्' (५-१-२२) इति कन् । 'संख्यैकवचनाच्च वीप्सायाम्' (५-४-४३) इति शस्प्रत्ययो भवति ।

**ष्णान्ता षट्[1] (१-१-२४)** -२५

ष्णान्ता । षट् । ष् च न् च ष्णौ, ष्णौ अन्ते यस्या सा ष्णान्ता (द्वन्द्वगर्भो बहुव्रीहिः) । षकारान्ता नकारान्ता च संख्या षट्संज्ञा भवति । षट् तिष्ठन्ति । षट् पश्य । पञ्च, सप्त, नव, दश । षट्संज्ञायां 'षड्भ्यो लुक्' (७-१-२२) इति जश्शसोर्लुग् भवति ।

**डति च ( १-१-२५ )**

डति । च । डत्यन्ता च संख्या षट्संज्ञा भवति । कति तिष्ठन्ति, कति पश्य । 'षड्भ्यो लुग्' (७-१-२२) इति जश्शसोर्लुग्भवति ।

---

कतिशः । इन शब्दों की संख्या संज्ञा होने से कृत्वसुच्, धा, कन् और शस् प्रत्यय इनसे हो जाते हैं, यहां से 'संख्या' की अनुवृत्ति २५वें सूत्र तक जाती है ।

**ष्णान्ता षट् (१-१-२४)**

ष्णान्ता १।१ । षट् १।३ । ष्णान्ता में द्वन्द्वगर्भ बहुव्रीहि समास है । षकारान्त और नकारान्त संख्या (जो कि ६ है) षट्संज्ञक होती है । षट् तिष्ठन्ति, षट् पश्य । पञ्च, सप्त, नव, दश । षट्संज्ञा का यह फल है कि इन शब्दों की जस्-शस् विभक्तियों का 'षड्भ्यो लुक्' से लुक् हो जाता है । षट् की अनुवृत्ति २५वें सूत्र में जाती है ॥ २४ ॥

**डति च (१-१-२५)**

डति यह लुप्त-प्रथमान्त निर्देश है । च (अ०) । डति प्रत्ययान्त संख्या भी षट्संज्ञक होती है । कति तिष्ठन्ति । कति पश्य । किम् शब्द से परिमाणार्थ में डति प्रत्यय हुआ तो कति शब्द बना । उसकी षट्संज्ञा होने से प्रथमा बहुवचन और द्वितीया बहुवचन विभक्तियों का लुक् हो गया ॥ २५ ॥

---

१. षडित्ययं शब्दः बहुत्ववाचित्वात् षड्भ्यो लुगिति बहुवचननिर्देशाच्च प्रथमाबहुवचनो वेदितव्यः । तेन षण्णामेव ष्णान्तानां ग्रहणं भवति-पञ्च, षड्, सप्त, अष्ट, नव, दशेति ।

## क्तक्तवतू निष्ठा (१-१-२६)

क्तक्तवतू। निष्ठा। क्तश्च क्तवतुश्च क्तक्तवतू (इतरेतरद्वन्द्वः) क्तक्तवतू प्रत्ययौ निष्ठासंज्ञौ भवतः। डुकृञ् (करणे) कृतः, कृतवान्। भुज (=पालनाभ्यवहारयोः) भुक्तः, भुक्तवान्। 'निष्ठा' (३-२-१०२) इति धातोः परतः क्तक्तवतूप्रत्ययौ भूते भवतः।

## सर्वादीनि सर्वनामानि (१-१-२७) -३२-३६

सर्वादीनि। सर्वनामानि। सर्वशब्द आदिर्येषां तानि सर्वादीनि (बहुव्रीहिः)। सर्वेषां। नामानि वा सर्वनामानि (षष्ठीतत्पुरुषः)। सर्वादीनि शब्द रूपाणि सर्वनामसंज्ञानि भवन्ति। सर्वः, सर्वौ, सर्वे, सर्वस्मै, सर्वस्मात्, सर्वेषाम् सर्वस्मिन्। सर्वकः। विश्वः, विश्वौ, विश्वे, विश्वस्मै, विश्वस्मात् विश्वेषाम्, विश्वस्मिन् विश्वकः उभ, उभय। सर्वनामत्वात् 'सर्वनाम्नः स्मै' (७-१-१४), 'ङसिङ्योः स्मात्स्मिनौ' (७-१-१५), 'जसः शी' (७-१-२०),

---

### क्तक्तवतू निष्ठा (१-१-२६)

क्तक्तवतू १।२। निष्ठा १।१। क्तक्तवतू में इ० द्वन्द्व समास है। क्त और क्तवतु प्रत्ययों की निष्ठा संज्ञा होती है। कृतः, कृतवान्। भुक्तः, भुक्तवान्, धातु से भूतकाल में ये निष्ठासंज्ञक प्रत्यय हुआ करते हैं॥ २६॥

### सर्वादीनि सर्वनामानि (१-१-२७)

सर्वादीनि १।३। सर्वनामानि १।३। सर्वादीनि में बहुव्रीहि समास है। सर्व विश्व उभ, उभय इत्यादि शब्दों की सर्वनाम संज्ञा होती है। सर्वे, सर्वस्मै सर्वस्मात्, सर्वेषाम्, सर्वस्मिन्, सर्वकः। इन उदाहरणों में सर्वनाम संज्ञा के कार्य जस् विभक्ति को शी आदेश, ङे को स्मै, ङसि को स्मात्, आम् को सुडागम, ङि को स्मिन् तथा स्वार्थिक अकच् प्रत्यय क्रमशः हुये हैं। इसी प्रकार विश्वे,

---

१. सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य अन्यतर, इतर, त्वत्, त्व, नेम, सम सिम पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम संज्ञायाम्, स्वमज्ञातिधनाख्यायाम्, अन्तरं बहिर्योगोपसंव्यानयोः। त्यद् तद् यत् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद भवतु (भवत्) किम्। इति सर्वादिगणो द्वयादिस्त्यदादिश्च। अग्रे यत्र यत्र सूत्रे गणनिर्देशो भविष्यति स समग्रो ग्रन्थविस्तरभयादत्र न लेखिष्यतेऽतः तदर्थं काशिकायां गणपाठे वा तत्र तत्र द्रष्टव्यम्।

'आमि सर्वनाम्नः सुट्' ( ७-१-५२ ), 'अव्ययसर्वनाम्नामकच् प्राक्टेः' (५-३-७१), 'सर्वनाम्नस्तृतीया च' ( २-३-७१ ) इत्येवमादयो विषयः प्रवर्तन्ते ।

### विभाषा दिक्समासे बहुव्रीहौ (१-१-२८)

विभाषा । दिक्समासे । बहुव्रीहौ । दिशां समासो दिक्समासस्तस्मिन् (ष० त०)। दिक्समासे बहुव्रीहौ सर्वादीनि विभाषा सर्वनामसंज्ञानि भवन्ति । उत्तरपूर्वस्यै, उत्तरपूर्वायै, दक्षिणपूर्वस्यै, दक्षिणपूर्वायै । सर्वनामपक्षे 'सर्वनाम्नः स्याड्ढ्रस्वश्च' (७-३-११५) इति ङित्प्रत्ययानां स्याडागमोऽङ्गस्य ह्रस्वश्च भवति। पक्षान्तरे 'याडापः' (७-३-११३) इति याडागमो वृद्धिश्च ।

### न बहुव्रीहौ (१-१-२९) -३२

न । बहुव्रीहौ । बहुव्रीहौ समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । प्रियविश्वाय, प्रियोभयाय, द्व्यन्याय, त्र्यन्याय । समासेऽत्र विश्वादिशब्द-स्यासर्वनामत्वे 'ङेर्यः' (७-१-१३) इति यादेशः, 'सुपि च' (७-३-१०२)

---

विश्वस्मै, इत्यादि में भी समझना चाहिये । इस सूत्र से सर्वादीनि की अनुवृत्ति ३२वें सूत्र तक और सर्वनामानि की अनुवृत्ति ३६वें सूत्र तक जाती है ॥ २७ ॥

### विभाषा दिक्समासे बहुव्रीहौ (१-१-२८)

विभाषा १।१ । दिक्समासे ७।१ । बहुव्रीहौ ७।१ । 'दिक्समासे' में षष्ठी तत्पुरुष समास है । दिशावाची शब्दों का बहुव्रीहि समास होने पर, सर्वादि शब्दों की विकल्प से सर्वनाम संज्ञा होती है । उत्तर और पूर्व दिशा का मध्य भाग 'उत्तरपूर्वा' हुआ । तब उसकी सर्वनाम संज्ञा पक्ष में 'उत्तरपूर्वस्यै' यह रूप स्त्रीलिङ्ग विभक्ति परक स्याडागम होने पर बना, पक्षान्तर में उत्तर-पूर्वायै यह रूप होगा । इसी प्रकार दक्षिणपूर्वस्यै, दक्षिणपूर्वायै में भी रूपभेद समझ लेना चाहिये ॥ २८ ॥

### न बहुव्रीहौ (१-१-२९)

न (अ०) । बहुव्रीहौ ७।१ । बहुव्रीहि समास में सर्वादि शब्दों की सर्वनाम संज्ञा नहीं होती । प्रिय है विश्व (सब) जिसको, वह प्रियविश्व

इत्यतोऽङ्गस्य दीर्घश्च भवति । बहुव्रीहाविति वर्त्तमाने पुनर्बहुव्रीहिग्रहणं भूतपूर्वबहुव्रीहावपि प्रतिषेधो यथा स्याद् । वस्त्रान्तरवसनान्तरा इति । अत्र वस्त्रमन्तरं येषां वसनमन्तरं येषामिति बहुव्रीहिं कृत्वा वस्त्रान्तराश्च वसनान्तराश्चेति द्वन्द्वः कृतः । भूतपूर्वबहुव्रीहित्वे त्वयं विशेषो यद् बहुव्रीहेराश्रयणात् तदाश्रयो नित्यः प्रतिषेधो भवति । इतरथा 'विभाषा जसि' (१-१-३२) इति द्वन्द्वसमासे जसि विकल्पेन सर्वनामसंज्ञा प्राप्नोति, सा मा भूदिति ।

## तृतीयासमासे (१-१-३०)

तृतीयया समासस्तृतीयासमासस्तस्मिन् (तृ० त०)। तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासपूर्वाय, संवत्सरपूर्वाय, द्वयहपूर्वाय, त्र्यहपूर्वाय । असत्यां सर्वनामसंज्ञायां ङेःस्मै न भवति । समासे इत्यनुवर्त्तमाने पुनः समासग्रहणं तृतीयासमसार्थवाक्येऽपि प्रतिषेधो यथा स्याद् । मासेन पूर्वायेति ।

## द्वन्द्वे च (१-१-३१) -३२

द्वन्द्वे । च । द्वन्द्वे च समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । पूर्वापराणाम्, कतरकतमानाम् । असत्यां सर्वनामसंज्ञायाम् 'आमि सर्वनाम्नः सुट्' (७-१-५२) इति सुडागमो भवति । 'ह्रस्वनद्यापो नुट्' (७-१-५४) इति नुडागमश्च भवति ।

---

कहलायेगा । उससे चतुर्थी एकवचन में प्रियविश्वाय रूप बना, ङे-को य होने पर। ऐसे ही प्रियोभयाय, द्वयन्याय, त्र्यन्यनाय शब्दों में भी जानना चाहिये । 'न' की अनुवृत्ति ३२वें सूत्र तक जाती है ।। २९ ।।

### तृतीया समासे (१-१-३०)

तृतीयासमासे ७।१। इस शब्द में तृतीयातत्पुरुष है। तृतीयासमास में सर्वादि शब्दों की सर्वनाम संज्ञा नहीं होती । मासेन पूर्वः (एक मास पहले वाला) मासपूर्वः, तस्मै=मासपूर्वाय । संवत्सरपूर्वाय, द्वयहपूर्वाय, त्र्यह-पूर्वाय । समास रहित पूर्व शब्द जहाँ सर्वनाम था, वहाँ वही अब समास में असर्वनाम हो गया ।। ३० ।।

### द्वन्द्वे च (१-१-३१)

द्वन्द्वे ७।१। च (अ०) । द्वन्द्वसमास में भी सर्वादि शब्दों की सर्वनाम संज्ञा नहीं होती। परे च, अपरे च=पूर्वापराः, तेषाम्—पूर्वापराणाम्, कतरकतमानाम् । षष्ठी बहुवचन आम् विभक्ति को सुट् न होकर नुट् आगम हुआ । 'द्वन्द्वे' की अनुवृत्ति ३२वें सूत्र तक जाती है ।। ३१ ।।

## विभाषा जसि (१-१-३२) -३६

द्वन्द्वे समासे जसि सर्वादीनि सर्वनामसंज्ञानि विभाषा न भवन्ति। कतरकतमे, कतरकमाः। सर्वनामसंज्ञाऽभावपक्षे 'जसः शी' (७-१-१७) इति श्यादेशो न भवति, पक्षान्तरे भवत्येव।

## प्रथमचरमतयाल्पार्धकतिपयनेमाश्च (१-१-३३)

प्रथमचरमतयाल्पार्धकतियनेमाः। च। प्रथमश्च चरमश्च तयश्च अल्पश्च अर्द्धश्च कतिपयश्च नेमश्च प्रथम···नेमाः (इतरेतरद्वन्द्वः)। प्रथमचरमतयबन्ताल्पार्द्धकतिपयनेमा जसि विभाषा सर्वनामसंज्ञा भवन्ति। प्रथमे प्रथमाः। चरमे चरमाः। द्वितये द्वितयाः। अल्पे अल्पाः। अर्द्धे अर्द्धाः। कतिपये कतिपयाः। नेमे नेमाः। तय इति तयप् प्रत्ययः, शिष्टानि प्रातिपदिकानि।

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् (१-१ ३४)

पूर्वपरावरदक्षिणोत्तरापराधराणि। व्यवस्थायाम्। असंज्ञायाम्। पूर्वं च परं च अवरं च, दक्षिणं च, अपरं च, उत्तरँ च,अधरं च, पूर्वपरावरदक्षिणोत्तरापराधराणि (इतरेतरद्वन्द्वः)। न संज्ञा असंज्ञा तस्याम् (नञ्तत्पुरुषः)। पूर्वं पर

---

### विभाषा जसि (१-१-३२)

विभाषा १।१। जसि ७।१। द्वन्द्वसमास में जस् विभक्ति (प्र० ब० व०) में सर्वादि शब्दों की सर्वनाम संज्ञा विकल्प से नहीं होती। कतरे च कतमे च=कतरकतमे, कतरकतमाः, यह पूरा सूत्र ३६वें सूत्र तक चलता है।। ३२।।

### प्रथमचरमतयाल्पार्धकतिपयनेमाश्च (१-१-३३)

प्रथम···नेमाः १।३। च (अ०)। प्रथमचरम० इत्यादि इ० द्वन्द्व समास है। प्रथम, चरम, तयबन्त, अल्प, अर्द्ध, कतिपय, नेम शब्दों की जस् विभक्ति में विकल्प से सर्वनाम संज्ञा होती है। प्रथमे, प्रथमाः। चरमे, चरमाः। द्वितये, द्वितयाः। अल्पे, अल्पाः। अर्द्धे, अर्द्धाः। कतिपये, कतिपयाः। नेमे, नेमाः।। ३३।।

### पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् (१-१-३४)

पूर्वपरावर···धराणि १।३। व्यवस्थायाम् ७।१। असंज्ञायाम् ७।१। पूर्वपर० शब्दों में इ० द्वन्द्व और असंज्ञायाम् में नञ्तत्पुरुष समास है। पूर्वं,

अवर-दक्षिण-उत्तर-अपर-अधर-शब्दा जसि विभाषा सर्वनामसंज्ञा भवन्ति व्यवस्थायां (स्वाभिधेयापेक्षायाम्) न चेत्संज्ञा गम्यते। पूर्वे पूर्वाः। परे पराः। अवरे अवराः। दक्षिणे दक्षिणाः। उत्तरे उत्तराः। अपरे अपराः। अधरे अधराः।

## स्वमज्ञातिधनाख्यायाम् (१-१-३५)

स्वम्। अज्ञातिधनाख्यायाम्। ज्ञातिश्च धनं च ज्ञातिधने तयोराख्या ज्ञातिधनाख्या (द्वन्द्वगर्भषष्ठीतत्पुरुषः)। न ज्ञातिधनाख्या अज्ञातिधनाख्या तस्याम् (नञ्तत्पुरुषः)। स्वशब्दो जसि विभाषा सर्वनामसंज्ञो भवति न चेज्ज्ञातिधनयोर्वाचकः। स्वे पुत्राः, स्वाः पुत्राः। स्वे गावः, स्वा गावः। आत्मीया इत्यर्थः।

## अन्तरं बहिर्योगोपसंव्यानयोः (१-१-३६)

अन्तरम्। बहिर्योगोपसंव्यानयोः। बहिश्चासौ योगः=बहिर्योगः। संव्यानस्य समीपम् उपसंव्यानम्। बहिर्योगश्चोपसंव्यानञ्च बहिर्योगोपसंव्याने तयोः (इतरेतरद्वन्द्वः)। अन्तरशब्दो जसि विभाषा सर्वनामसंज्ञो भवति

---

पर, अवर, दक्षिण, उत्तर, अपर, अधर अपने मुख्य अर्थ के वाचक हों और किसी के नाम न हों तो जस् विभक्ति में वे विकल्प से सर्वनामसंज्ञक होते हैं। पूर्वे, पूर्वाः, परे, पराः। अवरे, अवराः। दक्षिणे, दक्षिणाः। उत्तरे, उत्तराः। अपरे, अपराः। अधरे, अधराः॥ ३४॥

### स्वमज्ञातिधनाख्यायाम् (१-१-३५)

स्वम् १।१। अज्ञातिधनाख्यायाम् ७।१। अज्ञाति० अन्तरंग में द्वन्द्व-गर्भषष्ठीतत्पुरुष और बहिरंग में नञ्तत्पुरुष समास है। स्व शब्द ज्ञाति (=बन्धु) वाचक और धनवाचक न हो तो उसकी जस् विभक्ति में विकल्प से सर्वनाम संज्ञा होती है। स्वे पुत्राः, स्वाः, पुत्राः। स्वे गावः, स्वागावः। यहाँ स्व शब्द का अर्थ अपना-अपने है॥ ३५॥

### अन्तरं बहिर्योगोपसंव्यानयोः (१-१-३६)

अन्तरम् १।१। बहिर्योगोपसंव्यानयोः ७।२। बहिर्योग में कर्मधारय, उपसंव्यान में अव्ययीभाव और समूचे शब्द में इ० द्वन्द्व समास है। अन्तर शब्द जस् विभक्ति में बहिर्योग और उपसंव्यान (पहनने के वस्त्र) के अर्थ

बहिर्योगोपसंव्यानयोः गम्यमाने । बहिर्योगे-अन्तरे गृहाः, अन्तरा गृहाः । नगरबाह्याश्चाण्डालादिगृहा उच्यन्ते । उपसंव्याने खल्वपि अन्तरे शाटकाः, अन्तराः शाटकाः । अति समीपे आच्छादिता इत्यर्थः । (वा० १)—अपुरीति वक्तव्यम् । अन्तरायां पुरि वसति ।(वा० २)—विभाषा-प्रकरणे तीयस्य ङित्सु वा सर्वनामसंज्ञेत्युपसंख्यानम्, द्वितीयाय, द्वितीयस्मै । तृतीयाय, तृतीयस्मै ।

## स्वरादिनिपातमव्ययम् (१-१-३७) -४१

स्वरादिनिपातम् । अव्ययम् । स्वर आदिर्येषां ते स्वरादयः (बहुव्रीहिः) स्वरादयश्च निपाताश्च स्वरादिनिपातम् (समाहारद्वन्द्वः) । स्वरादयो निपाताश्च अव्ययसंज्ञा भवन्ति । स्वर् अन्तर् प्रातर् पुनर् इत्येवमादयः स्वरादयः । च वा ह अह एव इत्यादयो निपाताः । अव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' (२-४-८२) इति विभक्तिलुग् भवति । अन्वर्थेयं संज्ञा न व्येतीत्यव्ययम् । क्व पुनर्नव्येति ? स्त्रीपुंनपुंसकेषु, एकत्वद्वित्वबहुत्वेषु च[1] ।

## तद्धितश्चासर्वविभक्तिः (१-१-३८)

तद्धितः । च । असर्वविभक्तिः । नोत्पद्यन्ते सर्वा विभक्तयो यस्मात्

---

में जस् विभक्ति में विकल्प से सर्वनाम संज्ञक होता है । बहिर्योग में-अन्तरे, अन्तरा गृहाः (नगरबाह्य चाण्डालादिगृह अभिप्रेत हैं ।) अन्तरे । अन्तराः शाटकाः । (अति समीप पहनी हुई साड़ियाँ) ।

### स्वरादिनिपातमव्ययम् (१-१-३७)

स्वरादिनिपातम् १।१ । अव्ययम् १।१ । स्वरादि० में बहुव्रीहिगर्भद्वन्द्व समास है । स्वर् इत्यादि शब्दों तथा निपातों की अव्यय संज्ञा होती है । स्वर, अन्तर्, प्रातर्, पुनर् इत्यादि शब्द स्वरादि हैं, तथा च, वा, ह, अह, एव इत्यादि शब्द निपात कहलाते हैं । अव्यय संज्ञा होने से प्रातिपदिक मात्र से प्राप्त सु औ जस् इत्यादि विभक्तियाँ और टाप् आदि स्त्री प्रत्ययों का लुक् हो जाता है । 'अव्ययम्' की अनुवृत्ति ४१ वें सूत्र तक जाती है ॥ ३७ ॥

### तद्धितश्चासर्वविभक्तिः (१-१-३८)

तद्धितः १।१ च (अ०) । असर्वविभक्तिः १।१ । असर्वविभक्तिः शब्द में

---

१. सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ (गोपथब्राह्मणम् १।२६)

सोऽसर्वविभक्तिः तद्धितः (बहुव्रीहिः) असर्वविभक्तिस्तद्धितान्तः शब्दोऽव्ययसंज्ञो भवति । ततः, यतः, तत्र, यत्र, तदा, यदा, सर्वदा, सदा । तदादिशब्देभ्यः 'पञ्चम्यास्तसिल्' (५-३-७) 'सप्तम्यास्त्रल्' (५-३-१०) सर्वैकान्यकियत्तदः-कालेदा' (५-३-१५) इत्येतैः पञ्चम्यादिषु विभक्तिषु तसिलादिप्रत्ययेषु कृतेषु प्रकृतसूत्रेण अव्ययसंज्ञा विधीयते । सर्व एते ततः प्रभृतयो विभक्त्यर्थप्रधानाः । स च विभक्तयर्थः प्रातिपदिकार्थः सम्पन्न इति प्रातिपदिकार्थे प्रथमैव भवति । सापि संख्याविशेषाभावान्न सर्वा, किन्तर्हि ? एकवचनमेव, तस्योत्सर्गत्वात् । अव्ययसंज्ञायां सत्याम् 'अव्ययादाप्सुपः' (२-४-८२) इति लुग् भवति ।

## कृन्मेजन्तः (१-१-३९)

कृत् । मेजन्तः । म् च एच् च मेचौ । मेचावन्तौ यस्य स मेजन्तः (द्वन्द्वगर्भोबहुव्रीहिः) कृद्यो मकारान्त एजन्तश्च तदन्तं शब्दरूपमव्ययसंज्ञं भवति । मकारान्तः—स्वादुंकारं भुङ्क्ते । सम्पन्नकारं भुङ्क्ते । लवणङ्कारं भुङ्क्ते । एजन्तः—वक्षेरायः । तावामेषे रथानाम् । क्त्वे दक्षाय जीवसे । ज्योक्चसूर्यंदृशे । 'स्वादुमिणमुल्' (३-४-२६) इति स्वाद्वर्थेषूपपदेषु कृञो णमुल्प्रत्यये 'अचोञ्णिति' (७-२-११६) इत्यंगस्य वृद्धौ रपरत्वे णमुलः कृदतिङ् (३-१-९३) इति कृत्संज्ञायाम् 'अमैवाव्ययेन' (२-२-२०)इति समासे 'कृत्तद्धितसमासाश्च' (१-२-४६) इति प्रातिपदिकसंज्ञायां 'सुपोधातुप्रातिपदिकयोः' (२-४-७१) इति सुप्लुकि कृदन्तस्य शब्दरूपस्य मान्तत्वात्

---

बहुव्रीहि समास है । विभक्ति-विशेष में विहित तद्धित प्रत्यय जिनके अन्त में हों, उनकी अव्यय संज्ञा होती है । ततः, यतः । तत्र, यत्र । तदा, यदा, सर्वदा, सदा । इन शब्दों में पञ्चमी विभक्ति के अर्थ में तसिल् (तः) प्रत्यय, सप्तमी में त्रल् (त्र) और काल अर्थ में दा प्रत्यय हुआ है और वे अव्यय होने से एक ही रूप में सदा रहते हैं ।

## कृन्मेजन्तः (१-१-३९)

कृत् १।१ । मेजन्तः १।१ । मेजन्तः में द्वन्द्व गर्भ बहुव्रीहि समास है । मकारान्त और एजन्त कृत् प्रत्यय जिस शब्द के अन्त में हो, वह अव्यय-संज्ञक होता है । मान्त-स्वादुङ्कारं भुङ्क्ते । सम्पन्नकारं भुङ्क्ते । लवणङ्कारं भुङ्क्ते । एजन्त-वक्षे रायः । तावामेषे रथानाम् । क्त्वे दक्षाय जीवसे । ज्योक्च सूर्यं दृशे । जो खाद्य वस्तु को स्वादिष्ठ बनाकर खावे, उसके लिए 'स्वादुङ्कारं भुङ्क्ते' यह प्रयोग होता है । मान्त प्रयोग लौकिक उदाहरण हैं और एच्प्रत्ययान्त वैदिक । स्वादु उपपद रहते कृधातु से 'करके' अर्थ में

प्रकृतसूत्रेणव्ययसंज्ञा भवति। ततो 'अव्ययादाप्सुपः' (२-४-८२) इति विभक्ति-लुग्। वक्षे, एषे, जीवसे, दृशे इत्येषु वच-इण-जीव-दृश-धातुभ्यः 'तुमर्थे सेसेनसे असेन्क्सेकसेनध्यै अध्यैन्कध्यैकध्यैन् शध्यैशध्यैन्तवैतवेङ्तवेनः' (३-४-९) इति सेअसेवसेप्रत्ययेषु च कृतेषु एजन्ते सत्यव्ययसंज्ञा भवति।

## क्त्वातोसुन्कसुनः (१-१-४०)

क्त्वा च तोसुन् च कसुन् च=क्त्वातोसुन्कसुनः (इतरेतरद्वन्द्वः)। क्त्वातोसुन्कसुनन्ताःशब्दा अव्ययसंज्ञा भवन्ति। क्त्वा-कृत्वा, हृत्वा। तोसुन्-पुरा सूर्यस्योदेतोराधेयः, पुरा वत्सानामपाकर्त्तोः। कसुन्-पुरा क्रूरस्य विसृपो विरप्शिन्, पुराजत्तृभ्य आतृदः। 'समानकर्त्तृकयोः पूर्वकाले' (३-४-२१) इति क्त्वा, 'भावलक्षणेस्थेणकृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्' (३-४-१६) इति तोसुन्, 'सृपितृदोःकसुन्' (३-४-१७) इति च कुसुन्प्रत्ययो भवति।

## अव्ययीभावश्च (१-१-४१)

अव्ययीभावः। च। अव्ययीभावश्च समासोऽव्ययसंज्ञो भवति उपाग्नि, प्रत्यग्नि शलभाः पतन्ति। 'अव्ययं विभक्तिसमीप०' (२-१-६) इत्यव्ययी-

---

णमुल् प्रत्यय जुड़कर स्वादुंकारम् प्रयोग अव्यय हो गया। इसी प्रकार सम्पन्नकारम्, लवणंकारम् भी जानें। वक्षे, एषे, जीवसे, दृशे से, असे और वसे—ये वैदिक प्रत्यय क्रमशः वच्, इण्, जीव्, और दृश् धातुओं से हुये हैं जो तुमुनर्थक ('के लिये' अर्थ के वाचक) हैं॥ ४०॥

### क्त्वातोसुन्कसुनः (१-१-४०)

क्त्वातोसुन्कसुनः १।३। इस शब्द में इ० द्वन्द्व समास है। क्त्वा, तोसुन् और कसुन् प्रत्यय जिनके अन्त में हों, वे अव्ययसंज्ञक होते हैं। क्त्वान्त-कृत्वा, हृत्वा, तोसुनन्त-पुरा सूर्यस्योदेतोराधेयः। पुरा वत्सानाम-कर्तोः। कसुन्-पुरा क्रूरस्य विसृपो विरप्शिन्। पुरा जत्तृभ्य आतृदः। यहाँ समानकर्तृक पूर्वकाल की क्रिया में क्त्वा, भाव लक्षण में वैदिक तोसुन् और कसुन् प्रत्यय हुये हैं। प्रकृत सूत्र से कृत्वा, हृत्वा, उदेतोः, अपाकर्तोः, विसृपः, आतृदः—ये सभी प्रयोग अव्यय कहलाये॥ ४०॥

### अव्ययीभावश्च (१-१-४१)

अव्ययीभावः १।१। च (अ०)। अव्ययीभाव समास भी अव्यय संज्ञक होता है। उपाग्नि। प्रत्यग्नि शलभाः पतन्ति। उपाग्निमुखः, प्रत्यग्निमुखः।

भावसमासे कृते प्रकृतसूत्रेण अव्ययसंज्ञायां कृतायां सुपो लुग् भवति । उपाग्नि-मुखः, प्रत्यग्निमुखः । 'मुखंस्वाङ्गम्' (६-२-१६७) इत्युत्तरपदान्तोदात्तं प्राप्तं 'नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः' (६-२-१६८) इति प्रतिषिध्यते । उपपयःकारः उपपयःकामः । 'अतः-कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' (८-३-४६) इत्यव्ययपर्युदासाद्विसर्जनीयस्य सत्वं न भवति ।

## शि सर्वनामस्थानम् (१-१-४२) -४३

'जश्शसोः शिः' (७-१-२०) इति शिरादेशो वक्ष्यते तस्येदं ग्रहणम् । शिः सर्वनामस्थानसंज्ञो भवति । कुण्डानि तिष्ठन्ति, कुण्डानिपश्य । दधीनि, मधूनि, त्रपूणि, जतूनि । नपुंसकलिंगे जश्शसोः स्थाने यः शिरादेशस्तस्य सर्व-नामस्थानसंज्ञायां सत्यां 'नपुंसकस्य झलचः' (७-१-७२) इति नुमागमः, 'सर्वनामस्थाने चासम्बुद्धौ' (६-४-८) इति नान्तोपधाया दीर्घश्च भवति ।

## सुडनपुंसकस्य (१-१-४३)

सुट् । अनपुंसकस्य । न नपुंसकम् अनपुंसकं, तस्य (नञ्तत्पुरुषः)

---

उपपयः कारः, उपपयः कामः । यहाँ अग्नि के समीप-उपाग्नि, अग्नि के प्रतीप (समक्ष)—प्रत्यग्नि, ये अव्ययी-भाव समास होने से अव्यय हुये और स्वादि विभक्ति का लुक् हुआ । उपाग्निमुखः प्रत्यग्निमुखः में अव्यय-संज्ञावश मुख शब्द को अन्तोदात्त न होकर पूर्वपदप्रकृतिस्वर होता है । उपपयः कारः, उपपयः कामः में अव्यय होने से विसर्ग को सकारादेश नहीं हुआ ।। ४१ ।।

### शि सर्वनामस्थानम् (१-१-४२)

शि १।१ । सर्वनामस्थानम् १।१ । 'शि' इस प्रत्ययादेश की सर्वनाम-स्थान संज्ञा होती है । कुण्डानि तिष्ठन्ति, कुण्डानि पश्य । दधीनि, मधूनि, त्रपूणि, जतूनि, नपुंसकलिंग में वर्तमान प्रातिपदिकों से जस्-शस् विभक्तियों को 'शि' आदेश होता है । सर्वनामस्थान संज्ञा से नुमागम, अंग को दीर्घा देश होता है । यहाँ से 'सर्वनामस्थानम्' की अनुवृत्ति ४३ वें सूत्र तक जाती है ।। ४२ ।।

### सुडनपुंसकस्य (१-१-४३)

सुट् १।१ । अनपुंसकस्य ६।१ । अनपुंसकस्य में नञ्तत्पुरुष समास है । सुट्—यह सुविभक्ति से आरम्भ होकर औट् पर्यन्त पाँच विभक्तियों का

सुडिति प्रत्याहारोऽयं सु इत्यारभ्य औट् पर्यन्तम्-सु औ जस् अम् औट् इति । स नपुंसकादन्यत्र सर्वनामस्थानसंज्ञो भवति । राजा, राजानौ, राजानः, राजानम्, राजानौ । सर्वनामस्थानसंज्ञाश्रयाद् नान्तस्योपधाया दीर्घत्वम् ।

## न वेति विभाषा (१-१-४४)

न । वा । इति । विभाषा । नेति प्रतिषेधार्थः, वेति विकल्पार्थः । तयोर्योऽर्थःस विभाषासंज्ञो भवति । तत्र प्रतिषेधेन समीकृते विषये पश्चाद् विकल्पः क्रियते । शुशाव, शिश्वाय, शुशुवतुः, शिश्वियतुः । 'विभाषाऽश्वेः' (६-१-३०) इति लिङ्चङोः परतः टुओश्वि (गतिवृद्धयोः) धातोः संप्रसारणं विधीयते विभाषा । तेन रूपद्वयं सिद्ध्यति । इति-करणोऽर्थनिर्देशार्थः । महत्याःसंज्ञाया करणे एतत् प्रयोजनम् उभयोः संज्ञा यथा विज्ञायेत नेति च वेति च ।

## इग्यणः सम्प्रसारणम् (१-१-४५)

इक् । यणः । सम्प्रसारणम् । यणःस्थाने य इक् भूतो भावी वा स सम्प्रसारणसंज्ञो भवति । यज् (देवपूजासंगतिकरणदानेषु) इष्टम् । डुवप् (बीजसन्ताने) उप्तम् । ग्रह (ग्रहणे) गृहीतम् । 'निष्ठा' (३-२-१०२) इति भूते क्ते प्रत्यये परतः 'वचिस्वपियजादीनां किति' (६-१-१५) ग्रहिज्यावयि-

---

प्रत्याहार है । वह नपुंसकलिंग को छोड़कर अन्यत्र सर्वनामस्थान संज्ञक होता है । राजा, राजानौ, राजानः । राजानं, राजानौ । सर्वनामस्थान संज्ञा के कारण नान्त अंग की उपधा को दीर्घ होता है ।। ४३ ।।

## न वेति विभाषा (१-१-४४)

न (अ०) । वा (अ०) । इति (अ०) । विभाषा १।१ । न का अर्थ निषेध और वा का विकल्प है । निषेध और विकल्प अर्थों की विभाषा संज्ञा होती है । शुशाव, शिश्वाय । शुशुवतुः, शिश्वियतुः । 'विभाषाश्वेः' सूत्र से लिट् में जब 'श्वि' को विभाषा सम्प्रसारण हुआ तो शुशाव, शुशुवतुः रूप सम्प्रसारण पक्ष में और शिश्वाय, शिश्वियतुः असम्प्रसारण पक्ष में बने ।। ४४ ।।

## इग्यणः सम्प्रसारणम् (१-१-४५)

इक् १।१ । यणः ६।१ । सम्प्रसारणम् १।१ । यण् प्रत्याहार के स्थान में इक् हो तो वह सम्प्रसारण-संज्ञक होता है । यज्-इष्टम् । वप्-उप्तम् ।

व्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' (६-१-१६) इति यवरां यथाक्रमम् इउऋ इति सम्प्रसारणादेशाः। 'सम्प्रसारणाच्च' (६-१-१०८) इति पूर्वरूपैकादेशाः। सम्प्रसारणमित्यन्वर्थेयं संज्ञा सम्यक् प्रसारणं सम्प्रसारणमिति। अर्धमात्रिकस्य यकारादेर्वर्णस्य पूर्णमात्रिक इकारादिः सम्पद्यते।

### आद्यन्तौ टकितौ (१-१-४६)

आदिश्चान्तश्च आद्यन्तौ (इतरेतरद्वन्द्वः) टश्च क्च टकौ, टका वितौ ययोस्तौ (द्वन्द्वगर्भबहुव्रीहि)। षष्ठीनिर्दिष्टस्य टिदागमः परस्यादौ भवति, किदागमः पूर्वस्यान्ते। लविता, मुण्डो भीषयते। आर्धधातुकस्येड्वलादे' (७-२-३५) इतिलूधातूत्तरवर्तिनो वलादिप्रत्ययस्यादाविडुपतिष्ठते। 'भियो हेतुभये षुक्' (७-३-४०) इति ञिभी (भये) धातोरन्ते षुगागच्छति हेतुभयेऽर्थे णौ परतः।

### मिदचोऽन्त्यात्परः (१-१-४७)

मित्। अचः। अन्त्यात्। पर। म् इत् यस्य स मित् (बहुव्रीहिः) अन्ते भवमन्त्यम्, तस्मात्। 'अच' इति निर्धारणे षष्ठी, जातौ चैकवचनम्। अचां संनिविष्टानामन्त्यादचःपरो मिदागमो भवति। विरुणद्धि, मुञ्चति,

---

ग्रह-गृहीतम्। यहाँ कित् प्रत्यय परे वचिस्वपि०, इत्यादि तथा ग्रहिज्या० इत्यादि सूत्रों से य् को इ, व् को उ तथा र को ऋ सम्प्रसारण हो गया है ॥ ४५ ॥

#### आद्यन्तौ टकितौ (१-१-४६)

आद्यन्तौ १।२। टकितौ १।२। यहाँ प्रथम पद में इ० द्वन्द्व और द्वितीय में द्वन्द्व गर्भ बहुव्रीहि समास है। षष्ठी विभक्ति से निर्दिष्ट टित् आगम पर के आदि और कित् आगम पूर्व के अन्त को होता है। लविता यहाँ आर्धधातुक तृच्-तृन्-तासि को इट् आगम हुआ है। मुण्डो भीषयते। यहाँ भी धातु को षुक् आगम णिच् प्रत्यय परे हुआ है। भीषयते का अर्थ है—डराता है।

#### मिदचोऽन्त्यात्परः (१-१-४७)

मित् १।१। अचः ५।१। अन्त्यात् ५।१। परः १।१। मित् में बहुव्रीहि समास है। मित् आगम किसी शब्द के अन्तिम अच् से परे होता है। विरुणद्धि। यहाँ विपूर्वक रुध् धातु को सार्वधातु विषय में शप् के स्थान में

पयांसि । विपूर्वकरुधिर् (आवरणे) धातोरिरंशस्येत्संज्ञा, 'रुधादिभ्यःश्नम्' (३-१-७८) इत्यन्त्यात्च उकारात् परश्नं विकरणों भवति । मुच्लृ (मोचने) धातोः 'शे मुचादीनाम्' (७ १-५९) इति नुमागम उकारात्परो भवति । पयसः सकारात्पूर्वो य अकारस्तस्माज् जश्शसोः सर्वनामस्थाने परतः 'नपुंसकस्य झलच' (७-१-७२) इति नुमागमो भवति । (वा०) मस्जेरन्त्यात् पूर्व नुममिच्छन्त्यनुषंगसंयोगादिलोपार्थम् । मग्नः, मग्नवान् । मङ्क्ता, मङ्क्तुम् ।

## एच इग्घ्रस्वादेशे (१-१-४८)

एचः । इक् । ह्रस्वादेशे । ह्रस्वश्चासावादेशश्च ह्रस्वादेशस्तस्मिन् (कर्मधारयः) । एचःस्थाने ह्रस्वादेशे कर्तव्ये इगेव ह्रस्वो भवति, नान्यः । रै-अतिरि (रायमतिक्रान्तम्), नौ-अतिनु (नावमतिक्रान्तम्), गो-उपगु (गोः-समीपम्) । 'कुगतिप्रादयः' (२-२-१८) [अत्यादयः क्रान्ताद्यर्थे द्वितीयया-वार्तिकम्], 'अव्ययंविभक्तिसमीप०' (२-१-६) इति समासे कृते 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१-२-४७) इति ह्रस्वकर्त्तव्यतायामिगेव ह्रस्वो भवति ।

## षष्ठी स्थानेयोगा (१-१-४९) -५५

षष्ठी । स्थानेयोगा । स्थाने योगोऽस्याःसेयं स्थानेयोगा । निपातनात्

---

'रुधदिभ्यः श्नम्' से विहित 'श्नम्' विकरण रुध् में उकार के पश्चात् और धकार के पूर्व हुआ । वि+रु+न+ध्+ति+इस दशा में णत्व धत्व जश्त्व होकर विरुणद्धि प्रयोग बना । मुञ्चति में 'शे मुचादीनाम्' से नुमागम हुआ । पयांसि में 'नपुंसकस्य झलचः' से नुमागम हुआ । (वा०) मस्ज्=शुद्धौ धातु में 'मस्जिनशोर्झलि से नुमागम का प्रयोजन अनुषंग और संयोगादि लोप है । मग्नः, मग्नवान् । मङ्क्ता, मङ्क्तुम् ।

### एच इग्घ्रस्वादेशे (१-१-४८)

एचः ६।१ । इक् १।१ । ह्रस्वादेश ७।१ । ह्रस्वादेश में कर्मधारय समास है । एच् के स्थान में ह्रस्वादेश होने पर 'इक्' होता है । अर्थात् ए, ऐ का ह्रस्व 'इ' तथा 'ओ औ' का ह्रस्व 'उ' होता है । अतिरि, अतिनु, उपगु, यहाँ रै, नौ, गो शब्दों के स्वरों को तत्पुरुष समास के अन्त में 'ह्रस्वो नपुंसके प्राति- से ह्रस्व करने पर प्रकृत सूत्र से क्रमशः इ, उ, उ आदेश पदिकस्य' हुये ॥ ४८ ॥

### षष्ठी स्थानेयोगा (१-१-४९)

षष्ठी १।१ । स्थानेयोगा १।१ । स्थानेयोगा में बहुव्रीहि समास है ।

सप्तम्यलुक्। तृतीयाया वा एत्वम्। स्थानेन योगोऽस्याः सेयं स्थानेयोगेति[1] स्थानशब्दः प्रसङ्गवाची, स्थाने इति निमित्तसप्तमी। योगः सम्बन्धः। इह व्याकरणेऽनियतयोगा अनियतसम्बन्धा षष्ठी स्याननिमित्तसम्बन्धैव भवति। भविता भवितुम्, भवितव्यम्। 'अस्तेर्भूः' (२-४-५२) इत्यार्धधातुके तृजादि-प्रत्यये परतः अस् (भुवि) धातोःस्थाने भूरुपतिष्ठते। वक्ता, वक्तुम्, वक्तव्यम्। ब्रुवो वचिः। (२-४-५३) इति ब्रूञ् (व्यक्तायां वाचि) धातोः स्थाने वचिरा-देशो भवति।

## स्थानेऽन्तरतमः (१-१-५०)

स्थाने। अन्तरतमः। अन्तरतमः=सदृशतमः। 'अतिशायने तमबि-ष्ठनौ' (५-३-५५) इति तमप्। स्थाने प्राप्यमाणानां सदृशतम आदेशो भवति। चतुर्विधमान्तर्यं स्थानार्थगुणप्रमाणतः। स्थानतः-दण्डाग्रम् यूपाग्रम्। कण्ठस्थोर्द्वयोरकारयोः कण्ठ्य एव दीर्घ आकारो भवति। अर्थतः—वातण्ड्य-युवतिः। वतण्डीचासौ युवतिश्चेति विग्रहे समासकर्त्तव्यतायां 'पुंवत् कर्मधारय-

---

व्याकरण शास्त्र में (सूत्रों में) अनियत सम्बन्ध वाली षष्ठीविभक्ति स्थान या निमित्त या प्रसङ्ग के सम्बन्ध वाली होती है। भविता, भवितुम्, भवित-व्याम्। इन उदाहरणों में अस् (भुवि) धातु को 'अस्तेर्भूः' सूत्र द्वारा 'भू' आदेश जो आर्धधातुक प्रत्ययों में हुआ है, वह 'अस्' के स्थान में हुआ है। अर्थात् 'होना' अर्थ ज्यों का त्यों रहते हुए भी 'अस्' शब्द वहाँ प्रयुक्त न होकर 'भू' शब्द प्रयुक्त होता है। इसी प्रकार वक्ता, वक्तुम्, वक्तव्यम् में ब्रूञ् (=व्यक्तायां वाचि) धातु को आर्धधातुक विषय में 'ब्रुवो वचिः' से 'वच्' आदेश हो गया है। सूत्र के दोनों पदों की अनुवृत्ति ५५ वें सूत्र तक जाती है॥ ४९॥

## स्थानेऽन्तरतमः (१-१-५०)

स्थाने ७।१। अन्तरतमः १।१। जिस षष्ठ्यन्त शब्द के स्थान में जो आदेश प्राप्त हो, वह उसका अन्तरतम=सदृशतम हुआ करता है। यह सादृश्य स्थान, अर्थ, गुण और प्रमाण से होता है। इसमें स्थानकृत आन्तर्य के उदाहरण—दण्डाग्रम्, यूपाग्रम् हैं। यहाँ दीर्घैकादेश में दोनों अकारों का स्थान कण्ठ है, अतः कण्ठस्थानी ही दीर्घ आकारादेश उनके स्थान में हुआ

---

१. द्रष्टव्यम्-महाभाष्यम्, १-१-४९ सूत्रस्थम्।

जातीयदेशीयेषु' (६-३-४२) इति पूर्वपदस्य पुंवद्भावः। तत्र 'स्थानेऽन्तरतमः' इत्यपत्यार्थे सदृशतमो वातण्ड्यशब्दो'ऽतिदिश्यते न तु वतण्डः। गुणतः— पाकः, त्यागः, रागः। 'चजोः कु घिण्यतोः' (७-३-५२) इति चकारस्याल्पप्राण-स्याघोषस्य तादृश एवादेशः ककारो भवति। जकारस्य च घोषवतोऽल्पप्राणस्य तादृश एव गकारो भवति। प्रमाणतः—अमुष्मै। अमूभ्याम्। 'अदसो-ऽसेर्दादु दो मः' (८-२-८०) इति ह्रस्वस्यावर्णस्य ह्रस्व उकारो दीर्घस्य च दीर्घो भवति प्रमाणकृतसादृश्यादेव। 'स्थाने' इत्यनुवर्त्तमाने पुनः स्थान-ग्रहणस्य प्रयोजनं यत्रानेकविधमान्तर्यं सम्भवति तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात्।

## उरण् रपरः (१-१-५१)

उः। अण्। रपरः परो यस्मात् स रपरः (बहुव्रीहिः)। ऋवर्णस्य स्थाने अण् (अ, इ, उ) प्रसज्यमान एव रपरो भवति। कर्त्ता, हर्त्ता। किरति, गिरति। द्वैमातुरः। त्रैमातुरः। कृहृधातुभ्यां तृजादौ प्रत्यये परतः 'सार्व-धातुकार्धधातुकयोः' (७-३-८४) इत्यंगस्य गुणे कर्त्तव्ये ऋकारस्थाने स्थान-साम्याद् योऽकारो गुणो भवति स रपर एव भवति। किरत्यादौ 'ऋत इद्धातोः'

---

है। अर्थकृत आनन्तर्य-वातण्ड्युवतिः। यहाँ वतण्डी+युवतिः के कर्मधारय समास में पूर्वपद को 'पुंवत्कर्मधारय०' से पुंवद्भाव अर्थकृत (अपत्यसदृश) आनन्तर्य से हुआ, गुणकृत आन्तर्य-पाकः त्यागः, रागः। यहाँ चकार जकार को कुत्वादेश अल्पप्राण, अघोष, घोष इन गुणों की सदृशता से हुआ है। प्रमाणकृत आन्तर्य-अमुष्मै, अमूभ्याम्। यहाँ ह्रस्व 'अ' को 'उ' तथा दीर्घ 'आ' को 'ऊ' आदेश प्रमाण की सदृशता से हुआ है॥ ५०॥

## उरण् रपरः (१-१-५१)

उः ६।१। अण् १।१। रपरः १।१। 'रपरः' में बहुव्रीहि समास है। ऋवर्ण के स्थान में अण् आदेश होते ही वह रपर हो जाता है। कर्त्ता, हर्त्ता। किरति, गिरति। द्वैमातुरः। त्रैमातुरः। यहाँ प्रथम दो प्रयोगों में कृ, हृ धातुओं से तृजादि प्रत्यय परे आर्धधातुकनिमित्तक अंग को गुण (अ) रपर हुआ है। कॄ, गॄ धातुओं को 'ऋत इद्धातोः' से इकारादेश रपर होने पर श, तिप् परे किरति, गिरति रूप बने। द्वैमातुरः, त्रैमातुरः में अपत्यार्थक 'अण्' प्रत्यये पर द्विमातृ,

---

१. 'वतण्डाच्च' (४-१-१०९) इत्यांगिरसेऽपत्यविशेषे गोत्रेयञ्प्रत्ययः।

(७-१-१००) इति कॄ (विक्षेपे) गॄ (निगरणे) धात्वोरिकारादेशो रपर एव भवति । द्वैमातुर इत्यादौ 'मातुरुत् संख्या संभद्रपूर्वायाः' (४-१-११५) इत्यृकारस्थान उकारादेशो रपर एव भवति ।

## अलोऽन्त्यस्य (१-१-५२) -५३-५४

अलः । अन्त्यस्य । अन्ते भवोऽन्त्यस्तस्य । षष्ठी निर्दिष्टस्यादेशोऽन्त्यस्यालः स्थाने भवति । पंचगोणिः । दशगोणिः । 'इद्‌गोण्याः' (१-२-५०) इति गोणी शब्दस्यान्त्येकारस्थाने ह्रस्व इकार आदेशो भवति ।

## ङिच्च (१-१-५३)

ङित् । च । 'ङ्' इति यस्य स ङित् (बहुव्रीहिः) । ङिदादेशोऽनेकालप्यन्त्यस्यालः स्थाने भवति । होतापोतारौ । मातापितरौ । 'आनङ् ऋतो द्वन्द्वे' ( -३-२५) इत्यृकारस्यान्त्यस्य स्थाने आनङादेशो भवति ।

## आदेः परस्य (१-१-५४)

परस्य शिष्यमाणं कार्यमादेरलः स्थाने भवति । 'तस्मादित्युत्तरस्य (१-१-६६) इति पञ्चमीनिर्द्दिष्टात् परस्य कार्यं शिष्यते, तेनास्यैकवाक्यता ।

---

त्रिमातृ शब्द को 'मातुरुत्०' इत्यादि से उत्वादेश रपर होकर बैठा ।। ५१ ।।

### अलोऽन्त्यस्य (१-१-५२)

अलः ६।१ । अन्त्यस्य ६।१ । षष्ठी विभक्ति से निर्दिष्ट आदेश शब्द के अन्त्य (अन्तिम) अल् के स्थान में होता है । पंचगोणिः । दशगोणिः । 'इद्‌गोण्याः' सूत्र से गोणी शब्द को हुआ इकारादेश अन्तिम ईकार के स्थान में हुआ है । यहाँ से 'अलः' ५४वें सूत्र तक और 'अन्त्यस्य' ५३वें तक जाता है ।। ५२ ।।

### ङिच्च (१-१-५३)

ङित् १।१ । च (अ०) । ङित् में बहुव्रीहि है । ङित् प्रकारक आदेश अनेकाल् होते हुये भी अन्त्य अल् के स्थान में होता है । होतापोतारौ, मातापितरौ, यहाँ 'आनङ् ऋतो द्वन्द्वे' से पूर्वपदान्त ऋवर्ण को आनङ् आदेश हुआ है । ङकार अकार की इत् संज्ञा और लोप के पश्चात् 'न लोपः प्रातिपदिकान्तस्य' से नकार का लोप होता है ।। ५३ ।।

### आदेः परस्य (१-१-५४)

आदेः ६।१ । परस्य ६।१ । पर (बाद वाले) को विहित कार्य उसके (पर के) आदि वर्ण को होता है । आसीनो यजते । यहाँ 'ईदासः' सूत्र से

आसीनो यजते । 'ईदासः' (८-२-८३) इति आस् (उपवेशने) धातोरुत्तरस्य ईकारादेशः शिष्यमाण आनस्यादेराकारस्य स्थाने भवति । द्वीपम् । अन्तरीपम् । प्रतीपम् । समीपम् । 'द्व्यन्तरुपसर्गेभ्योऽपईत्' (६-३-९७) इति पञ्चम्यन्तेभ्यो द्व्यादिभ्य उत्तरस्याप ईदादेशो विधीयमान आकारस्य स्थाने भवति ।

## अनेकाल्शित् सर्वस्य (१-१-५५)

अनेकाल्शित । सर्वस्य । एकश्चासावल् च एकाल् (कर्मधारयः), न एकाल् अनेकाल् (नञ्तत्पुरुषः) । 'श्' इत् यस्य स शित् (बहुव्रीहिः) । अनेकाल् च शिच्च अनेकाल्शित (समाहारद्वन्द्वः) । अनेकाल शिच्च आदेशः सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति । भविता । भवितुम् । भवितव्यम् । 'अस्तेर्भूः' (२-४-५२) इति भूरादेशोऽनेकाल्, स सर्वस्य असःस्थाने भवति । कुण्डानि तिष्ठन्ति । कुण्डानि पश्य 'जश्शसोः शिः' (७-१-२०) इति शिरादेशो 'नानुबन्धकृतमनेकाल्त्वमि'ति परिभाषाबलादेकालपि सर्वस्य जसः शसश्च स्थाने भवति शित्वात् ।

## स्थानिवदादेशोऽनल्विधौ (१-१-५६) -५९

स्थानिवत् । आदेशः । अनल्विधौ । स्थानमस्यास्तीति स्थानी ।

---

आस् धातु से परे शानच् के आकार को ईकारादेश हुआ है । द्वीपम् । अन्तरीपम् । प्रतीपम् । समीपम् । यहाँ 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' से द्वि, अन्तर् इत्यादि शब्दों से परे आप् के आकार को ईकारादेश हुआ है ।। ५४ ।।

### अनेकाल्शित् सर्वस्य (१-१-५५)

अनेकाल्शित् १।१ । सर्वस्य ६।१ । पूर्वपद में क्रमशः कर्मधारय, नञ्तत्पुरुष, बहुव्रीहि और समाहार द्वन्द्व समास है । अनेक अल् वाला और शित् आदेश षष्ठीनिर्दिष्ट सम्पूर्ण शब्द के स्थान में होता है । भविता । भवितुम् । भवितव्यम् । 'अस्तेर्भूः' से अस् धातु के स्थान में होने वाला 'भू' आदेश अनेक अल् वाला है । अतः वह सम्पूर्ण अस् के स्थान में उसको हटाकर बैठता है । कुण्डानि तिष्ठन्ति, कुण्डानि पश्य, यहाँ कुण्ड शब्द के परे जस् शस् विभक्तियों को 'शि' आदेश, शित् होने से, समूचे जस्-शस् के स्थान में हुआ है ॥ ५५ ॥

### स्थानिवदादेशोऽनल्विधौ (१-१-५६)

स्थानिवत् (अ०) आदेशः १।१ । अनल्विधौ ७।१ । जिसके स्थान

'अतइनिठनौ' (५-२-११५) इति इनिः। स्थानिना तुल्यं वर्त्तत इति स्थानिवत्। 'तेन तुल्यं क्रियाचेद्वतिः' (५-१-११५) इति वतिः। अलविधिरित्यत्र अर्थानुरोधाच्चतुर्विधस्तत्पुरुषसमासः-अलः परस्य विधिः अलःस्यानेविधिः, अलि विधिः अला विधिरिति। न अल्विधिरनल्विधिस्तस्मिन् अनलविधौ (नञ्तत्पुरुषः)। स्थान्याश्रय कार्यमादेशे न प्राप्नोतीति वतिनिर्देशोऽतिदेशार्थम्। आदेशः स्थानिवद्भवत्यलविधिं वर्जयित्वा। तत्रादेशोऽष्टविधो धात्वंगकृत्तद्धिताव्ययसुप्तिङ्पदभेदात्। १—धात्वादेशः—भविता, भवितुम् भवितव्यम्। वक्ता, वक्तुम्, वक्तव्यम्। 'अस्तेर्भूः' (२-४-५२), 'ब्रुवो वचिः' (२-४-५३) इत्यार्धधातुकविषये असादेर्धातोः स्थाने यो भूरित्याद्यादेशः स धातुवद्भवति। धातुत्वात्ततस्तृजादिप्रत्ययोत्पत्तिः २ – अङ्गादेशः—केन, काभ्याम्, कैः। 'किमः कः' (७-२-१०३) इति विभक्तौ परतः किमोऽङ्गस्य स्थाने क इत्यादेशोऽङ्गवद्भवति। तेनाङ्गाश्रया इनदीर्घत्वैभावास् भवन्ति। ३—कृदादेशः—प्रकृत्य, प्रहृत्य। 'समासेऽनञ्पूर्वे क्त्वो ल्यप' (७-१-३७) इति कृतः क्त्वाप्रत्ययस्य स्थाने ल्यबित्यादेशः कृद्वद् भवति। तेन 'ह्रस्वस्य पिति कृति तुग्' (६-१-७१) इति कृन्निमित्तस्तुगागमो भवति। ४—तद्धितादेशः – दाधिकम्, अद्यतनम्।

---

में कोई आदेश हो उसे स्थानी कहते हैं। स्थानी के तुल्य स्थानिवत् कहलाता है। अनल्विधौ में तत्पुरुष गर्भ नञ्तत्पुरुष समास है। एक अल् की विधि को छोड़कर जो कोई भी किसी शब्द को आदेश होता है, वह स्थानी के समान ही (गुणधर्म वाला) होता है। यह स्थानिद्भाव ८ प्रकार का होता है। (१) धातु के स्थान में हुआ आदेश धातुवत् होता है। जैसे 'अस्तेर्भूः' 'ब्रुवो वचिः' से आर्धधातुक विषय में 'अस्' धातु को 'भू' और 'ब्रू' धातु को 'वच्' आदेश धातुवत् होने से भविता, भवितुम्, भवितव्यम्, वक्ता, वक्तुम्, वक्तव्यम्—इन तृजादि प्रत्ययान्त कृदन्त शब्द रूपों को निष्पन्न कर देता है। (२) अंगादेश अंगवत् होता है। केन, काभ्याम्, कैः। यहाँ 'किमः कः' से किम् को हुआ क आदेश स्थानी किम् अंग की ही भाँति टा, भ्याम्, भिस् प्रत्ययों के पर अंगवत् होता है। फलतः अंगाश्रित कार्य टा को इन, भ्याम् परे अ को दीर्घ और भिस् को ऐस् आदेश हो जाते हैं। (३) कृदादेश कृतवत् होता है। प्रकृत्य, प्रहृत्य। यहाँ 'समासेऽनञ्पूर्वेक्त्वोल्यप्' से क्त्वा को हुआ ल्यबादेश क्त्वा के समान कृत् होने से उसके निमित्त से 'ह्रस्वस्य पिति कृति तुक्' से तुगागम होता है। (४) तद्धितादेश तद्धितवत् होता है। दाधिकम्। अद्यतनम्, यहाँ प्रथमपद के लिए 'दध्नष्ठक्' सूत्र से

'दध्नष्ठक्' (४-२-१७) इति दधिशब्दात् संस्कृतं भक्षाः' (४-२-१५) इत्यस्मिन्नर्थे तद्धितठक्प्रत्यये कृते 'ठस्येकः' (७-३-५०) इति ठकस्तद्धितस्य स्थाने इगादेशस्तद्धितवद् भवति। तेन तद्धितनिमित्तो 'यस्येति च' (६-४-१४८) इतीकारलोपः, 'कृत्तद्धितसमासाश्च' (१-२-४६) इति प्रातिपदिकसञ्ज्ञा च भवति। 'सायं चिरं प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च' (४-३-२३) इत्यद्यशब्दात्तद्धितट्युप्रत्यये 'युवोरनाकौ' (७-१-१०१) इति योः स्थानेऽनादेशस्तद्धितवद् भवति। ततस्दाश्रया प्रातिपदिकसंज्ञा भवति। ५—अव्ययादेशः—प्रस्तुत्य प्रहृत्य, उपस्तुत्य। 'क्त्वातोसुन्कसुनः' (१-१-३९) इति क्त्वाप्रत्ययान्तस्याव्ययसंज्ञायां सत्यां सतासे क्त्वास्थाने विधीयमानो ल्यबादेशोऽव्ययवद्भवति। ततोऽव्ययादाप्सुपः (२-४-८२) इति सुलुग् भवति। ६—सुबादेशः—वृक्षाय प्लक्षाय। 'ङेर्यः' (७-१-१३) इति सुपः ङेः स्थाने य आदेशः सुब्वद् भवति। सुबाश्रयः 'सुपि च' (७-३-१०२) इत्यतोऽङ्गस्य दीर्घो भवति। ७—तिङादेशः—अकुरुताम्, अकुरुतम्। 'तस्थस्थमिपां तान्तन्तामः' (३-४-१०१) इति तिङस्तसादेः स्थाने तामाद्यादेशस्तिङ्वद् भवति। ततः सुप्तिङन्तं पदम्' (१-४-१४) इति पदसंज्ञा भवति। ८—पदादेश—ग्रामो वः स्वं, जनपदो

---

दधि शब्द से ठक् प्रत्यय और 'ठस्येक' से ठ को इगादेशादि कार्य होते हैं। ठक् तो तद्धित संज्ञक था, उसके स्थान में होने वाला इगादेश भी तद्धित प्रकृत सूत्र से हो जाने पर तन्निमित्त से 'यस्येति च' से अंग के इ का लोप और तद्धितान्त होने पर उसकी प्रातिपदिक संज्ञा होती है। अद्यतन शब्द में 'सायं चिरं०' इत्यादि से अद्य शब्द से ट्यु प्रत्यय और तुट् का आगम हुआ है। यहाँ ट्युतद्धित संज्ञक है और उसके 'यु' को 'युवोरनाकौ' से अनादेश भी स्थानिवद्भाव से तद्धित कहलाया। फलतः 'कृत्तद्धितसमासाश्च' से तद्धितान्त 'अद्यतन' शब्द की प्रातिपदिक संज्ञा हो जाती है। (५) अव्यायादेश अव्ययवत् होता है। प्रहृत्य। उपस्तुत्य। यहाँ मूलतः हृ-स्तु धातुओं से हुये क्त्वाप्रत्यय वाले शब्द की 'क्त्वातोसुन्कसुनः' से जिस प्रकार अव्यय संज्ञा होती है, उसी प्रकार क्त्वा को हुये ल्यबादेश के बाद भी प्रहृत्य, इत्यादि शब्दों की अव्यय संज्ञा हुई। अव्ययत्व से स्वादि-विभक्ति-लुक् हुआ। (६) सुबादेश सुब्वत् होता है। वृक्षाय, प्लक्षाय, यहाँ वृक्षादि प्रातिपदिक से चतुर्थी विभक्ति के 'ङे' के 'ङेर्यः' से यादेश होने पर उसकी भी ङे के समान सुप् संज्ञा स्थानिवद्भाव से हो गई। फलतः 'सुपि च' से अदन्तांग को दीर्घ हो गया। (७) तिङादेश तिङ्वत् होता है। अकुरुताम्। अकुरुतम्। कृ धातु से

नः स्वम् । 'बहुवचनस्य वस्नसौ' (८-१-२१) इति युष्माकमस्माकंपदयोः स्थाने क्रमेण वस्नसावादेशौ पदवद् भवतः । पदत्वात् 'ससजुषोरुः' (८-२-६६) इति रुत्वं रेफस्य विसर्जनीयश्च भवति । अल्विधौ तु न स्थानिवद् । तद्यथा अलः (५।१) विधिः—द्यौः, पन्थाः सः । 'दिव औत्' (७-१-८४) इत्यल्मात्रस्य वकारस्यौकारादेशो यदि स्थानिवत् स्यात् ततः स्थानिनो हल्त्वात् 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' (६-१-६६) इत्यनिष्टः सुलोपः प्रसज्येत । एवमेव 'पथिमथ्यृभुक्षामात्' (७-१-८५) इति नकारस्याकारादेशः, 'त्यदादीनामः' (७-२-१०२) इति दकारस्य चाकारादेशः स्थानिवद्भवन्नालं हलन्तलक्षण-सुलोपाय । अलः (६।१) विधिः—द्युकामः 'दिवउत्' (६-१-१३१) इति वकारस्योकार आदिश्यमानो यदि स्थानिवत् स्यात् 'लोपोव्योर्वलि' (६-१-६४) इति वकारलोपः प्रसज्येत । अलि विधिः—क इष्टः । 'वचिस्वपियजादीनां किति च' (६-१-१५) इति यकारस्य सम्प्रसारणमिकारो यदि स्थानिवत्स्याद् 'हशि च' (६-१-११४) इत्यनिष्टं रोरुत्वं प्रसज्येत । अला विधिः—महोरस्केन । 'सोऽपदादौ' (८-३-३८) इति विसर्जनीयस्य सकारादेशो यदि स्थानिवत्स्याद् 'अट्कुप्वाङ्नुम्व्यवायेऽपि' (८-४-२) इति विसर्जनीयस्याऽन्तर्गतत्वादनिष्टो नकारस्य णकारादेशः प्रसज्येत ।

## अचः परस्मिन् पूर्वविधौ (१-१-५७) -५९

पूर्वस्य विधिः पूर्वविधिस्तस्मिन् (ष० त०) परस्मिन्निति निमित-

---

लङ् प्रथम-मध्यम पुरुष द्विवचन के तस्-थस् प्रत्ययों को 'तस्थस्थमिपां तान्तन्तामः' से क्रमशः हुआ ताम्-तम् आदेश स्थानिवद्भाव से तिङ्वत् हुआ, जिससे 'सुप्तिङन्तंपदम्' से इन प्रयोगों की पद संज्ञा हो गई । (८) पदादेश पदवत् होता है । ग्रामो वः स्वम् । जनपदो नः स्वम् । यहाँ युष्माकम्, अस्माकम्, इन पदों के स्थान में 'बहुवचनस्य वस्नसौ' से क्रमशः 'वस् नस्' आदेश हुए हैं । पद संज्ञावशात् सकार को रुत्व विसर्ग हो गया । अल्विधि में स्थानि-वद्भाव नहीं होता । प्रत्युदाहरण मूल में दिए गए हैं । विस्तारभय से उनको नहीं अनूदित किया गया है । यहाँ से स्थानिवत् और आदेशः की अनुवृत्ति ५९ वें सूत्र तक जाती है ।। ५६ ॥

### अचः परस्मिन् पूर्वविधौ (१-१-५७)

अचः ६।१ । परस्मिन् ७।१ । पूर्वविधौ ७।१ । पूर्वविधौ में षष्ठी

सप्तमी। पूर्वविधाविति विषयसप्तमी। अजादेशः परनिमित्तकः पूर्वविधौ कर्त्तव्ये स्थानिवद् भवति। अनल्विधाविति पूर्वेण प्रतिषिद्धेऽल्विध्यर्थमिदमारभ्यते। पटयति। अवधीत्। बहुखट्वकः। पटुमाचष्टे=पटयति। पटूत्तरं णिचि परतो 'टेः' (६-४-१५५) इति भस्य टेरुकारस्य लोपे कृते तस्य स्थानिवद्भावाद् 'अत उपधायाः' (७-२-११६) इत्यदुपधलक्षणा वृद्धिर्न भवति। अवधीत्—'लुङि च' (२-४-४३) इति हन्धातोर्लुङि वधादेशः। तिपि च्लौ, सिजादेशाडिडीडागमेषु च कृतेष्वनुबन्धलोपे च अ + वध + इ + स् + ई+त् इत्यत्र 'अतो लोपः' (६-४-४८) इत्यकारलोपः तस्य प्रकृतसूत्रेण स्थानिवद्भावाद् 'अतो हलादेर्लघोः' (७-२-७) इति हलन्तलक्षणा वृद्धिर्न भवति। बहुखट्वकः – बह्व्यः खट्वा यस्य यस्मिन्वेति विग्रहे, समासे, प्रातिपदिकसंज्ञायां सुप्लुकि, 'स्त्रियाः पुंवद्भाषित०' (६-३-३७) इति पुंवद्भावे, 'शेषाद्विभाषा' (५-४-१५४) इति कप्प्रत्यये आपोऽन्यरस्याम्' (७-४-१५) इति ह्रस्वे 'बहुखट्वकः' इत्यत्र ह्रस्वादेशस्य पूर्वं (स्वर) विधिं प्रति स्थानिवद्भावाद् ('बहुखट्वाक' इति रूपे सम्प्राप्ते) 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' (६-२-१७४) इति स्वरो न भवति। 'कपि पूर्वम्' (६-२-१७३) इति स्वरस्तु भवत्येव।

---

तत्पुरुष है। पर के निमित्त से अच् के स्थान में होने वाला आदेश, पूर्वविधि करने में स्थानिवत् होता है। यह सूत्र अल्विधि के लिए है। पटयति, अवधीत्। बहुखट्वकः। इनमें प्रथम उदाहरण का विग्रह है—पटुमाचष्टे ('पटु' को कहता है)=पटयति। 'तत्करोति तदाचष्टे' इस वार्त्तिक से णिच् परे पटु+अम्+णिच् इस अलौकिक विग्रह के होने पर 'सुपो धातु०' से अम् का लुक् और 'टेः' से उकार का लोप हुआ तो पट्+इ इस दशा में 'अत उपधायाः' से अकार को प्राप्त वृद्धि पर निमित्तक उलोप (अजादेश) के स्थानिवत् होने से नहीं हो पाती। अवधीत् यह हन्-धातु के लुङ् प्रथम पुरुषैकवचन का रूप है। उसके अ+वध+इ+स्+ई+त् इस अलौकिक विग्रह में वध के अन्तिम अकार का 'अतो लोपः' से लोप हुआ। तत्पश्चात् हलन्तवध् शब्दको 'अतो हलादेर्लघोः' से प्राप्त वृद्धि अलोप के स्थानिवद्भाव के कारण नहीं हो पाती। बहुखट्वकः इस शब्द में बहुव्रीहि समास के अन्त में शेषाद्विभाषा से कप् प्रत्यय हुआ है। स्त्रियाः पुंवद्० से पूर्व पद के पुंवद्भाव होने पर बहुखट्वाक इस अवस्था में 'आपोऽन्यतरस्याम्' से विकल्प से अकार को ह्रस्व होने पर उसके स्थानिवद्भाव से 'ह्रस्वान्तेऽन्त्यात् पूर्वम्'

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वार-दीर्घजश्चर्विधिषु (१-१-५८)

पदान्तश्च, द्विर्वचनं च, वरे च, यलोपश्च, स्वरश्च, सवर्णश्च, अनुस्वारश्च, दीर्घश्च, जश्च, चर्च-पदान्त······ चरः, तेषां विधयस्तेषु (द्वन्द्वगर्भः ष० त०)। पदान्त-द्विर्वचन वरे यलोप-स्वर-सवर्ण-अनुस्वार दीर्घ-जश्-चर् विधिषु परनिमित्तकोऽजादेशः पूर्वविधौ न स्थानिवद् भवति। पदान्त-विधिः—कौ स्तः, यौ स्तः, तानि सन्ति, यानि सन्ति 'श्नसोरल्लोपः' (६-४-१११) इत्यसोऽकारलोपः ङित्सार्वधातुकनिमित्तकः पूर्वविधौ पदान्तावयणादेशयोः कर्त्तव्ययोः न स्थानिवद्भवति। द्विर्वचनविधिः—दद्ध्यत्र, मद्ध्वत्र, परनिमित्तको यणादेशः 'अनचि च' (८-४-४७) इति धकारस्य द्वित्वे कर्त्तव्ये स्थानिवन्न भवति। वरेविधि-अप्सु यायावरः प्रवेपत पिण्डान्। यातेर्धातोर्यङन्ताद् 'यश्च यङः' (३-२-१७६) इति वरचि कृते 'अतो लोपः' (६-४-१४८) इत्यार्धधातुक-निमित्तोऽकारलोपः पूर्वविधौ 'लोपो व्योर्वलि' (६-१-६६) इति यलोपे कर्त्तव्ये स्थानिवन्न भवति। यलोपविधिः कण्डूतिः। कण्डूय (गात्रप्रघर्षणे) धातोः क्तिचि

---

से 'ख' के अ को प्राप्त उदात्त नहीं होता। प्रत्युत 'कपि पूर्वम्' से क प्रत्यय से पूर्व स्वर 'ट्व' उदात्त होता है। शेष अनुदात्त हुये॥

**न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चरविधिषु (१-१-५८)**

न (अ०)। पदान्त—विधिषु ७।३। पदान्त० इत्यादि में द्वन्द्वगर्भ षष्ठी तत्पुरुष है। पदान्त, द्विर्वचन, वरे, यलोप, स्वर, सवर्ण, अनुस्वार, दीर्घ, जश्, चर्—विधियों में परनिमित्तक अजादेश पूर्वविधि कर्त्तव्यता में स्थानिवत् नहीं होता। (१) पदान्तविधि—कौ स्तः। यौ स्तः। तानि सन्ति। यानि सन्ति। यहाँ स्तः, सन्ति में 'श्नसोरल्लोपः' से हुआ अकार लोप पर-निमित्तक है, वह पदान्त को अव्-यण् आदेश करने वाली पूर्वविधि में स्थानिवत् नहीं होता। (२) द्विर्वचनविधि—दद्ध्यत्र। मद्ध्वत्र। यहाँ पर-निमित्तक यणादेश 'अनचि च' से पूर्वधकार को द्वित्व करने में स्थानिवत् नहीं होता। (३) वरेविधि—अप्सु यायावरः प्रवपेत पिण्डान्। यायावरः यह यङन्त याधातु का वरच् प्रत्यय का रूप है। यहाँ 'यायायवर' इस स्थिति में 'अतोलोपः' से यङ् के अकार का लोप हुआ, पुनः 'लोपो व्योर्वलि' से यकार का लोप हुआ जो कि परनिमित्तक अकारलोप के स्थानिवत् न होने से ही हो पाया। (४) यलोप विधि—कण्डूतिः। कण्डूय धातु का अकार लोप क्तिच्

परनिमित्तकोऽकारलोपः पूर्वविधौ 'लोपो व्योर्वलि (६६-१-६६) इति यलोपे-कर्त्तव्ये स्थानिवन्न भवति ।

स्वरविधिः — चिकीर्ष'कः । जिहीर्ष'कः । सन्नन्त कृ हृ धातुभ्यां ण्वुल्-तृचौ' (३-१-१३३) इति ण्वुलि कृते तन्निमित्तकोऽतो लोपः पूर्वविधौ । 'लिति' (६-१-१९३) इति प्रत्ययात्पूर्व-मुदात्तस्वरे कर्त्तव्ये स्थानिवन्न भवति । सवर्ण-विधिः—शिण्ढि । पिण्ढि । शिषेःपिषेश्च लोण्मध्यम-पुरुषैकवचने 'रुधादिभ्यः श्नम्' (३-१-१८) इति श्नमि, 'सेर्ह्यपिच्च' (३-४-८७) इति ह्यादेशे तस्य 'सार्व-धातुकमपित्' (१-२-४) इति ङित्वात्, श्नसोरल्लोप.' (६-४-१११) इत्य-कारलोपे, हुझल्भ्यो हेर्धिः' (६-४-१०१) इति धत्वे, 'ष्टुना ष्टुः' (८-४-४०) इति ष्टुत्वे, 'झलां जश् झशि' (८-४-६४) इति डकारलोपे, नश्चापदान्तस्य झलि' (८-३-२४) इत्यनुस्वारे 'अनुस्वारस्य ययि परसवर्णः' (८-४-५७) इति परसवर्णे कर्त्तव्येऽल्लोप स्थानिवन्न भवति । अनुस्वारविधि —शिंषन्ति, पिंषन्ति । 'नश्चापदान्तस्य झलि' इत्यनुस्वारे कर्त्तव्ये श्नसोरल्लोपो न स्थानि-वद् भवति । दीर्घविधिः – प्रतिदीव्ना । प्रतिदीव्ने । 'अल्लोपोऽनः' (६-४-१३४) इत्यकारलोपः परनिमित्तकः पूर्वविधौ 'हलि च' (८-२-७७) इति वकारोपध-दीर्घत्वे कर्त्तव्ये स्थानिवन्न भवति । जश्विधिः—सग्धिः । बब्धाम् । समाना ग्धिः = सग्धिः । अद् (भक्षणे) धातोः क्तिनि 'बहुलं छन्दसि' (२-४-३९)

---

प्रत्यय के निमित्त से हुआ, वह 'लोपो व्योर्वलि' से यकारलोप करने के लिए स्थानिवत् नहीं होता । (५) स्वरविधि —चिकीर्षकः । जिहीर्षकः । सन्नन्त चिकीर्ष, जिहीर्ष धातुओं से ण्वुल् (अक) प्रत्यय परे हुआ अकार लोप लित्स्वर (प्रत्यय से पूर्व को उदात्त) करने के लिए स्थानिवत् नहीं होता । (६) सवर्णविधि-शिण्ढि । पिण्ढि । ये शिष् पिष् धातुओं के लोट् मध्यम पुरुषैकवचन के रूप हैं । 'श्नम्' विकरण करने पर जब शिंढि, पिंढि रूप बने तो 'अनुस्वारस्य ययि परसवर्णः' से परसवर्णा देश (णत्व) करने के लिये 'श्नसोरल्लोप.' से हुआ अकार लोप स्थानिवत् नहीं होता । (७) अनुस्वार-विधि—शिंषन्ति । पिंषन्ति । यहां भी 'श्नम्' के अकार का परनिमित्तक लोप 'नश्चापदान्तस्य झलि' से नकार को अनुस्वारादेश करने के लिए स्थानिवत् नहीं होता । (८) दीर्घ विधि—प्रतिदीव्ना, प्रतिदीव्ने । यहां अल्लोपोऽनः' का अकार लोप 'हलि च' से वकारोपधादीर्घ करने के लिए स्थानिवत् नहीं होता । (९) जश्विधि—सग्धिः । बब्धाम् । अद=भक्षणे धातु का क्तिन् में घस्लादेश करने पर ग्धिः रूप बना । समाना चासौ ग्धिश्च—इस विग्रह से

इति घस्लादेशे, 'घसिभसोर्हलि च' (६-४-१००) इत्युपधालोपे, 'झलो झलि' (८-२-२६) इति सकारलोपे, झषस्तथोर्धोऽधः' (८-२-४०) इति तकारस्य धत्वे, 'झलां जश् झशि' इति जश्त्वे कर्त्तव्ये उपधालोपः स्थानिवन्न भवति। बब्धामिति भस् (भक्षणदीप्त्योः) धातोर्लोट् प्र० पु० द्विवचने तामि श्लौ पूर्ववद् 'घसिभसोर्हलि च' इत्युपधालोपो जश्त्वे कर्त्तव्ये न स्थानिवद्। चर्विधिः— जक्षतुः। जक्षुः। अक्षन्। अदेर्लिट्प्रथमपुरुषद्विवचनबहुवचनयोर्घस्लादेशे 'गमहनजनखनघसांलोपः क्ङित्यनङि' (६-४-९८) इत्युपधालोपे द्विर्वचनाभ्यासकार्ये च कृते 'खरि च' (८-४-५५) इति घकारस्य चर्त्वमुपधालोपस्यास्थानिवत्त्वाद् भवति। ततः शासिवसिघसीनां च' (८-३-६०) इति मूर्धन्यादेशः। अक्षन्निति अदेर्लुङि प्रथमपुरुषबहुवचने घस्लादेशे च्लेः 'मन्त्रेघसह्वरणश०' (२-४-८०) इति लुकि, उपधालोपे, 'खरि चे' ति चर्त्वं तदैव भवति यदोपधालोपः परनिमित्तकः स्थानिवन्न भवति।

## द्विर्वचनेऽचि (१-१-५९)

द्विर्वचने। अचि। द्विर्वचने इति भाष्यप्रामाण्यादेकशेषनिर्देशो द्विर्वचनञ्च

---

सग्धिः यह वैदिक रूप निष्पन्न होता है। यहाँ 'घसिभसोर्हलि च' से घस् के उपधा अकार का लोप परनिमित्तक है, वह 'झलां जश् झशि' से घकार को गकारादेश करने के लिये स्थानिवत् नहीं होता। बब्धाम्—यह भस् (=भक्षणदीप्त्योः) धातु का शप् को श्लु और द्वित्व होने पर लोट् मध्यम पुरुष द्विवचन का वैदिक रूप है। यहाँ भी 'घसिभसोः०' से अकार लोप हुआ, वही भस् के भकार को झलां जश् झशि से जश्त्व (बकारा देश) करने के लिए स्थानिवत् नहीं होता। (१०) चर्विधि—जक्षतुः, जक्षुः। अक्षन्। प्रथम दो रूप अद्धातु के लिट् प्रथम पुरुष के एक वचन, द्विवचन के रूप हैं। और 'अक्षन्' यह उसी धातु का लुङ् प्रथम पुरुषैक वचन का रूप है। अद् को लिट् में घस्लादेश, 'गमहन०' से उपधालोप और द्वित्वादि कार्य होने पर जघस्+अतुस्। उस् इस अवस्था में 'खरि च' से घकार को चर्त्वादेश-ककार, उपधा लोप के स्थानिवत् न होने पर ही होता है। तब 'शासिवसिघसीनां च' से षत्व हुआ। अक्षन् में लुङ् प्र० पु० बहुवचन झि में घस्लादेश, मंत्रे 'घसह्वर०' से च्लिलुक् और पूर्ववत् उपधालोप चर्त्व (घकार को ककार) करने के लिए स्थानिवत् नहीं होता॥ ५८॥

## द्विर्वचनेऽचि (१-१-५९)

द्विर्वचने ७।१। अचि ७।१। द्विर्वचने में कर्मधारय समास है, और

द्विर्वचनञ्चेति द्विर्वचनं तस्मिन् द्विर्वचने। द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवद् भवति द्विर्वचन एव कर्त्तव्ये।[1] रूपातिदेशोऽयं नियतकालश्च तेन कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते। आल्लोपोपधालोपणिलोपयणयवायावादेशाः प्रयोजनम्। आल्लोप—पा (रक्षणे अदादिः, पाने भ्वादि)-पपतु पपु। असंयोगाल्लिट् कित्' (१-२-५) 'आतो लोप इटि च' (६-४-६४) इति किति प्रत्यये परत आकारलोपं कृत्वा 'लिटि धातोरनभ्यासस्य' (६-१-८) 'एकाचो द्वे प्रथमस्यः' (६-१-१) इति द्वित्वमनच्कत्वान्न प्राप्नोति, अस्माद्वचनाद् भवति। उपधालोपः-हन् (हिंसागत्योः)-जघ्नतुः। जघ्नुः। गमहनजनखनघसां लोपः क्ङित्यनङि (६-४-९८) इत्युपधालोपे कृते स्थानिरूपत्वाद् द्विर्वचनं भवति। णिलोपः—अट (गतौ)-आटिटत्। आटतेर्णिचि, लुङि, चङि 'णेरनिटि'

---

यह महाभाष्यकार के प्रमाण से एकशेप है। द्विर्वचननिमित्तक अच् के परे रहने पर अच् के स्थान में होने वाला आदेश द्विर्वचन करने के लिए स्थानिवत् होता है। इसके भी आल्लोप, इत्यादि पांच प्रयोजन हैं। (१) आल्लोप—पपतुः, पपुः। पा+अतुस्, पा+उस् इस स्थिति में 'आतो लोपः०' से जब पा के आकार का लोप हुआ तो धातु के अज् रहित होने से 'लिटि धातो०' से द्वित्व सम्भव नहीं था। सो प्रकृत सूत्र से आलोप के स्थानिवत् होने से द्वित्वादि कार्य हो गए। (२) उपधा लोप—जघ्नतुः, जघ्नुः। यहाँ भी हन्+अतुस्, हन्+उस् में 'गमहनजन०' इत्यादि से उपधालोप होने पर स्वररहित हन् के उपधालोप के स्थानिवत् होने से द्वित्व हो गया। (३) णिलोप—आटिटत्। अट् धातु से णिच्, लुङ्, चङ् परे

---

१. 'द्वित्वनिमित्तेऽचि परे अच आदेशो न स्याद् द्वित्वे कर्त्तव्ये' इति नव्याः (द्रष्टव्यम्-सिद्धान्तकौमुद्यां, भ्वादि प्रकरणम्) तत्र 'अचः' इति 'अचः परस्मिन् पूर्वविधौ' (१-१-४७) इत्यतोनुकृष्यते। एतस्मिन् पक्षे पपतुः इत्यादौ आकारलोपात् पूर्वमेव द्वित्वं भवति। परं तन्मतं महाभाष्याद् विरुद्धमस्ति। तत्र ह्युक्तम् 'द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवदिति वक्ष्यामि'।...कानि पुनरस्ययोगस्य प्रयोजनानि ? पपतुः। पपुः। तस्थतुः। तस्थुः। जग्मतुः। जग्मुः। आटिटत्। आशिशत्। चक्रतुश्चक्रुरिति। आल्लोपोधालोपणिलोपयणादेशेषु कृतेष्वनच्कत्वाद् द्विर्वचनं न प्राप्नोति। स्थानिवद्भावाद् भवति।...किं पुनरत्र ज्यायः ? स्थानिवद्भाव एव ज्यायान्। तस्मात् स्थानिवदित्येष एव पक्षो ज्यायान्' इति।

(६-४-५१) इति णिलोपे कृते स्थानिरूपत्वाद् 'चङि' (६-१-११) 'अजादेर्द्वितीयस्य' (६-१-२) इति टिशब्दरूपस्य द्विर्वचनं भवति। यण्-चक्रतुः। चक्रुः। कृञो लिटि 'इको यणचि' (६-१ ७४) इति यणादेशे कृते स्थानिवत्त्वात् कृशब्दस्य द्विर्वचनं भवति। अयवायावादेशाः—निनय। निनाय। लुलव। लुलाव। नयतेर्लुनातेश्चोत्तमे णलि 'णलुत्तमो वा' (७-१-९१) इति विकल्पेन णित्वाद् 'सार्वधातुकार्धधातुकयोः (७-३-८४) इत्यंगस्य गुणे, पक्षे 'अचोञ्णिति' (७-२-११५) इति वृद्धौ च, 'एचोऽयवायावः' (६-१-७५) इत्ययवायावादेशाः। तेषां 'लिटि धातोरनभ्यासस्य' इति द्वित्वे कर्त्तव्ये स्थानिवत्वाद् ने, नै, लो, लौ, इति शब्दरूपाणां द्विर्वचनं भवति। 'ह्रस्वः' (७-४-५९) इत्यभ्यासस्य ह्रस्वे कर्त्तव्ये 'एच इग्घ्रस्वादेशे' (१-१-४७) इति परिभाषावलादिकारोकारौ भवतः।

## अदर्शनं लोपः (१-१-६०) -६१

अदर्शनम्। लोपः। न दर्शनम् अदर्शनम् (नञ्तत्पुरुषः)। नवेति

---

'णेरनिटि' से णि के लोप होने पर उसका 'चङि' से द्वित्वकर्त्तव्यता में स्थानिवद्भाव हो जाता है। तभी 'आटि' के 'टि' अंश को 'अजादेर्द्वितीयस्य' से द्वित्व होता है। (४) यणादेश—चक्रतुः, चक्रुः। कृ+अतुस्, कृ+उस् इस अवस्था में यणादेश होने पर जब ऋकार रेफ में परिवर्तित हो जाता है तो 'लिटि धातोरनभ्यासस्य' से प्राप्त द्विर्वचन नहीं हो सकता। सो यणादेश के स्थानिवद्भाव से द्विर्वचन हो जाता है। (५) अयवायावादेश—निनय, निनाय। लुलव, लुलाव। ये नी तथा लू धातु के लिट् उत्तम पुरुष, एकवचन के दो दो रूप हैं। नि+णल्, लू+णल्—इस अवस्था में 'णलुत्तमो वा' से णल् के विकल्प से णित् होने पर पक्ष में 'सार्वधातुकार्धधातुकयोः' से अंग को गुण हुआ तो ने+अ; लो+अ बना। अन्यत्र 'अचो ञ्णिति' से अंग को वृद्धि होने पर नै+अ; लौ+अ यह स्थिति हुई। फलतः अयाद्यादेश करने पर नय्+अ; लव्+अ। और नाय्+अ; लाव्+अ हुआ। इसी 'एचोऽयवा०' के अयाद्यादेश के स्थानिवत् होने से 'लिटि धातो०' से द्वित्व करने के लिए क्रमशः 'नेनै' और 'लो लौ' इन धातु रूपों को प्राप्त किया जाता है। तब अभ्यासांश में 'ह्रस्वः' से ह्रस्व होकर निनय, निनाय। लुलव लुलाव रूप सिद्ध होते हैं॥ ५९॥

### अदर्शनं लोपः (१-१-६०)

अदर्शनम् १।१। लोपः १।१। अदर्शनं पद में नञ्तत्पुरुष समास है।

विभाषेत्यत । इति पदं मण्डूकप्लुत्याऽनुवर्त्तते । प्रसक्तस्य अदर्शनमश्रवणमनुच्चारणमनुपलब्धिर्विनाश इत्यभिधीयमानोऽर्थो लोपसंज्ञो भवति । अर्थस्यैवं संज्ञा न शब्दस्य । गौधेरः । 'गोधाया ढ्रक्' (४-१-१२९) इति गोधाशब्दाड्ढ्रकि प्रत्यये ढस्यैयादेशे च कृते ककारस्य 'हलन्त्यम्' (१-३-३) 'तस्य लोपः' (१-३-९) इति लोपः, आकारस्य 'यस्येति च' (६-४-१४८) इति लोपः । यकारस्य लोपो व्योर्वलि' (६-१-६४) इति लोपः । डुपचष् (पाके) पचेरन् । पचेर्लिङि सीयुडागमे 'झस्य रन्' (३-४-१०५) इति रनादेशे 'लिङः सलोपोऽनन्त्यस्य' (७-२-७९) इति सकारलोपो 'तस्यलोपः' इत्यनुबन्धलोपो 'लोपो व्योर्वलि' इति च यकारलोपो भवति । जीरदानुः । जीवेरदानुक् (उणादिसूत्रम् २।२३) इति जीव (प्राणधारणे) धातोरदानुक् प्रत्यये परतो 'लोपो व्योर्वलि' इति वकारलोपो भवति । आस्त्रेमाणम् । आङोपसृष्टस्य स्त्रिवु (गतिशोषणयोः) धातोर्मनिनि प्रत्यये परतः पूर्ववद् वलोपः । यत्रैव वर्णस्य लोपस्तत्र तस्यादर्शनमेवाभिप्रेतम् ॥ ६० ॥

---

प्रसक्त (जिसकी प्राप्ति है, जो चल रहा है, उस) का न दिखाई देना, न सुनाई देना, उचारण और उपलब्धि न होना, विनाश होना 'लोप' कहलाता है । यहाँ पर 'अदर्शन' अर्थ की लोप संज्ञा समझनी चाहिये न कि 'अदर्शन' शब्द की । गौधेरः । पचेरन् । जीरदानुः । आस्त्रेमाणम् । यहाँ गौधेरः में गोधाया अपत्यम्—इस अर्थ में गोधा शब्द से 'गोधाया ढ्रक्' सूत्र से ढ्रक्-प्रत्यय करने पर ढकार को एयादेश हुआ तो गोधा+एय्क् इस स्थिति में ककार की 'हलन्त्यम्' से इत्संज्ञा, तस्य लोपः से लोप, 'लोपो व्योर्वलि' से यकार का लोप और 'यस्येति च' से आकार का लोप हुआ । सर्वत्र इन वर्णों का विनाश होने से गौधेर शब्द बना । पचेरन् में पच् धातु को लिङ् आत्मनेपद प्रथम पुरुष बहुवचन में झ प्रत्यय को रन् आदेश, सीयुडागम, शप् विकरण हुआ है । यहाँ श्, प्, उ, ट् तो इत्संज्ञावशात् लोप हुए हैं । सकार का 'लिङः सलोपोऽनन्त्यस्य' से और यकार का 'लोपो व्योर्वलि' से लोप हो गया है । जीरदानुः में जीव धातु से रदानुक् प्रत्यय हुआ तो ककार का तथा वकार का पूर्ववत् लोप हुआ । आस्त्रेमाणम् में आङ्पूर्वक स्त्रिव् धातु से मनिन् प्रत्यय करने पर द्वितीयैक वचन विभक्ति में इ, न्, व् वर्णों का पूर्ववत् लोप हुआ । यहाँ से 'अदर्शनम्' की अनुवृत्ति ६१वें सूत्र तक जाती है ॥ ६० ॥

## प्रत्ययस्य लुक्श्लुलुपः (१-१-६१)

लुक् च श्लुश्च लुप् च=लुक्श्लुलुपः (इतरेतरद्वन्द्वः)। प्रत्ययस्यादर्शनानि लुक्श्लुलुप्संज्ञकानि भवन्ति। अनेकसंज्ञाविधानात् तद्भावितग्रहणमिह विज्ञायते-लुक्श्लुलुप्शब्दैः कृतानि प्रत्ययादर्शनानि क्रमाल्लुक्श्लुलुप्संज्ञकानि भवन्तीति। अद (भक्षणे)-अत्ति। 'अदिप्रभृतिभ्यः शपः' (२-४-७२) इति शपो लुग् भवति। हु (दानादनयोरादाने च) जुहोति। 'जुहोत्यादिभ्यः श्लुः' (२-४-७५) इति शपः श्लुर्भवति। ततः 'श्लौ' (६-१-१०) इति द्विर्वचनम्। वरणाः। वरणानामदूरभव इत्यणि कृते 'वरणादिभ्यश्च' (४-२-८२) इत्यणो लुब् भवति। ततो 'न लुमताङ्गस्य' (१-१-६३) इति प्रत्ययलक्षणकार्यस्य (वृद्धेः) प्रतिषेधः।

## प्रत्ययलोपे प्रत्ययलक्षणम् (१-१-६२) -६३

प्रत्ययस्य लोपः प्रत्ययलोपस्तस्मिन् (ष० त०) प्रत्ययो लक्षणं यस्य (कार्यस्य) तत् प्रत्ययलक्षणं (बहुव्रीहिः)। प्रत्ययलोपे सति प्रत्ययनिमित्तकं कार्यं भवति। अग्निचित्। सोमसुत्। क्विपो लोपे सति तद्निमित्तको

---

### प्रत्ययस्य लुक्श्लुलुपः (१-१-६१)

प्रत्ययस्य ६।१। लुक्श्लुलुपः १।३। लुक्० में इ० द्वन्द्व समास है। प्रत्यय का अदर्शन लुक्संज्ञक, श्लुसंज्ञक और लुप्संज्ञक होता है। अनेक संज्ञाओं के विधान से तद्भावित ग्रहण जाना जाता है। फलतः लुक् श्लु लुप् शब्दों से विहित प्रत्ययलोप लुक्श्लुलुप् संज्ञक होते हैं। अत्ति। जुहोति। वरणाः। अद्धातु से सार्वधातुक विषय में प्राप्त शप् विकरण का जब 'अदिप्रभृतिभ्यः शपः' से लुक् हो जाता है तो अत्ति रूप लट्तिप् में निष्पन्न होता है। हु धातु से लट् तिप् में 'जुहोत्यादिभ्यः श्लुः' से शप् का श्लु तथा 'श्लौ' से धातु को द्वित्व होकर जुहोति रूप बना। 'वरणादिभ्यश्च' से 'वरण' शब्द से अण् प्रत्यय का लुप् होने पर वरणानामदूरभवः (ग्रामः)=वरणाः यह प्रयोग सिद्ध हुआ॥ ६१॥

### प्रत्ययलोपे प्रत्ययलक्षणम् (१-१-६२)

प्रत्ययलोपे ७।१। प्रत्ययलक्षणम् १।१। पूर्वपद में षष्ठी तत्पुरुष और परपद में बहुव्रीहि समास है। प्रत्यय के लोप होने पर भी प्रत्ययनिमित्तक कार्य होता है। अग्निचित्। सोमसुत्। अग्निं चितवान्—इस अर्थ

'ह्रस्वस्य पिति कृति तुक्' (६-१-७१) इति तुगागमो भवति। 'हल्ङ्याप्०' (६-१-६७) इति सुलोपेऽपि सति प्रकृतसूत्रेण 'सुप्तिङन्तं पदम्' (१-४-१४) इति पदसंज्ञा भवति। अधोक्। दुहेर्लङि तिपि शप्लुकि तिलोपे च कृते पूर्ववत् पदसंज्ञा भवति। प्रत्ययस्येत्यनुवर्तमाने पुनः प्रत्ययग्रहणं कृत्स्नप्रत्ययस्य लोपार्थम्।

## न लुमताङ्गस्य (१-१-६३)

न। लुमता। अङ्गस्य। लुक्श्लुलुपो यस्य यस्मिन् वा स लुमान् तेन। 'तदस्यास्त्यस्मिन्निति मतुप्' (५-२-९४) इति मतुप्प्रत्ययः। लुमताशब्देन (लुक्श्लुलुबिति शब्दत्रयेण) लुप्ते प्रत्यये यदङ्गं तस्य प्रत्ययलक्षणं कार्यं न भवति। गर्गाः। 'गर्गादिभ्यो यञ्' (४-१-१०५) इति यञि 'यञञोश्च' (२-४-६४) इति यञो लुकि कृते प्रकृतसूत्रेणाङ्गस्य वृद्धिस्वरौ न भवतः। मृष्टः। अदिप्रभृतिभ्यः 'शपः' (२-४-७२) इति शपो लुकि कृते तस्य प्रत्यय-लक्षणकार्येऽनिमित्ते सति 'मृजेर्वृद्धिः' (७-२-११४) इत्यङ्गस्य वृद्धिर्न भवति।

---

में चिधातु से 'अग्नौ चेः' से क्विप् प्रत्यय हुआ है। और सोमं सुतवान् इस अर्थ में सुधातु से 'सोमे सुञः' से क्विप् हुआ। क्विप् का सर्वापहारी लोप होने पर कृत् और पित् के निमित्त से 'ह्रस्वस्य पिति कृति तुक्' से तुक् का आगम होता है। और हल्ङ्याप्० से सुलोप होते हुए सुप्तिङन्तं पदम् से पदसंज्ञा होती है। अधोक्। दुह् धातु से लङ् तिप् शप्लुक् करने पर हल्ङ्याप्० से तिप् का लोप होकर प्रत्ययलक्षण कार्य होने से 'सुप्तिङन्तं पदम्' से पदसंज्ञा और दादेर्धातोर्घः से हकार को घकारादेश, पुनः चर्त्व से ककारादेश हुआ। यह सारा सूत्र ६२ वें सूत्र तक चलता है॥ ६२॥

## न लुमताङ्गस्य (१-१-६३)

न (अ०)। लुमता ३।१। अङ्गस्य ६।१। लुक्, श्लु या लुप् में से किसी से भी प्रत्यय के लुप्त होने पर अंग को प्रत्ययलक्षण-कार्य नहीं होता। गर्गाः। मृष्टः। जुहुतः। गर्गस्य गोत्रापत्यानि पुमांसः—इस विग्रह में 'गर्गादिभ्यो यञ्' से गर्ग शब्द से बहुवचन में अपत्यार्थक यञ् प्रत्यय के आने पर उसका 'यञञोश्च' से लुक् हो गया। तब यञ् के निमित्त से प्राप्त आदि वृद्धि और आद्युदात्त स्वर नहीं हुए। मृष्टः में मृज् धातु से तस् प्रत्यय के परे 'अदि-प्रभृतिभ्यः शपः' से शप् का लुक् होने पर 'मृजेर्वृद्धिः' से प्राप्त वृद्धि नहीं

जुहुतः । 'जुहोत्यादिभ्यः श्लुः' (२-४-७५) इति श्लौ शप्प्रत्ययादर्शने सति शब्निमित्तकोऽङ्गस्य गुणो न भवति । सर्वत्र यमेव प्रत्ययमाश्रित्यांगसंज्ञा जाता स एव वृद्ध्यादेः कार्यस्यानिमित्तम् ।

### अचोऽन्त्यादि टि (१-१-६४)

अचः । अन्त्यादि । टि । अन्ते भवमन्त्यम् । 'दिगादिभ्यो यत्' (४-३-५४) इति यत् । अन्त्य आदिर्यस्य तदन्त्यादि (बहुव्रीहिः) । अच इति निर्धारणे षष्ठी । अचां मध्ये योऽन्त्योऽच् तदादिशब्दरूपं टिसंज्ञं भवति । अग्निचित् । सोमसुत् । इत्-उत्-शब्दरूपौ टिसंज्ञौ । आताम् । आथाम् । आमो टिसंज्ञायां सत्यां पचेते, पचेथे इत्यत्र 'टित आत्मनेपदानां टेरे' (३-४-७९) इत्येकारादेशः ।

### अलोऽन्त्यात् पूर्व उपधा (१-१-६५)

अलः । अन्त्यात् । पूर्वः । उपधा । वर्णसमुदायेऽन्त्यादलः पूर्वो वर्ण उपधासंज्ञो भवति । पच्, पठ्-अकारः । भिद्, छिद्-इकारः । बुध्, युध्-उकारः । वृत्, वृध्-ऋकारः ।

### तस्मिन्निति निर्दिष्टे पूर्वस्य (१-१-६६) -६७

तस्मिन् । इति । निर्दिष्टे । पूर्वस्य । इति शब्दोऽर्थनिर्देशार्थः । तस्मि-

---

होती । जुहुतः में हु धातु से तस् परे शप् को श्लु होने से अंग को गुणादेश नहीं हुआ ।। ६३ ।।

### अचोऽन्त्यादि टि (१-१-६४)

अचः ६।१ । अन्त्यादि १।१ । टि १।१ अन्त्यादि में बहुव्रीहि समास है । किसी शब्द के अचों के मध्य में जो अन्त्य अच् हो, तदादि शब्दरूप की टि संज्ञा होती है । अग्निचित् । सोमसुत् । आताम् । आथाम् । यहाँ इत्, उत्, आम् इनकी टि संज्ञा होती है । फलतः पचेते, पचेथे में टित 'आत्मनेपदानां टेरे' से टि अंश को एत्वादेश हुआ ।

### अलोऽन्त्यात् पूर्व उपधा (१-१-६५)

अलः ५।१ । अन्त्यात् ५।१ । पूर्वः १।१ । उपधा १।१ । किसी शब्द में अन्तिम अल् से पूर्व वर्ण की उपधा संज्ञा होती है । पच्, पठ् में अकार; भिद्, छिद् में इकार; बुध्, युध् में उकार और वृत्, वृध् में ऋकार उपधा संज्ञक है ।। ६५ ।।

### तस्मिन्निति निर्दिष्टे पूर्वस्य (१-१-६६)

तस्मिन् ७।१ । इति (अ०) । निर्दिष्टे ७।१ । पूर्वस्य ६।१ । इति

ग्निति सप्तम्यर्थनिर्देशे सति पूर्वस्यैव कार्यं भवति नोत्तरस्य। वध्युदकम्। मध्विदम्। पचत्योदनम्। 'इको यणचि' (६-१-७७) इति सप्तमीनिर्दिष्टेऽचि परतः पूर्वस्यैकः स्थाने यणादेशो भवति।

### तस्मादित्युत्तरस्य (१-१-६७)

तस्मात्। इति। उत्तरस्य। तस्मादिति पञ्चम्यर्थनिर्देशे सत्युत्तरस्यैव कार्यं भवति न पूर्वस्य। ओदनं पचति। 'तिङ्ङतिङः' (८-१-२८) इत्यतिङ ओदनशब्दादुत्तरं तिङन्तमनुदात्तं भवति।

### स्वं रूपं शब्दस्याशब्दसंज्ञा (१-१-६८) -७२

स्वम्। रूपम्। शब्दस्य। अशब्दसंज्ञा। शब्दस्य संज्ञा शब्दसंज्ञा (ष० त०) न शब्दसंज्ञा अशब्दसंज्ञा (नञ्तत्पुरुषः)। अस्मिन् शास्त्रे शब्दस्य स्वं रूपमेव ग्राह्यं भवति नत्वर्थः पर्यायो वा, शब्दसंज्ञां (टि-घु-भ-इत्यादिव्याकरणप्रसिद्धसंज्ञाः) वर्जयित्वा। आग्नेयमष्टाकपालं निर्वपेत्। 'अग्नेर्ढक्' (४-२-३३) इति नाग्न्यर्थादङ्गाराड्ढक् क्रियते, न च तत्पर्यायाज्ज्वलनपावकादिशब्दात्, किं तर्हि? 'अग्नि' इत्येतस्माच्छब्दादेव। ढस्य 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' (७-१-२) इत्येयादेशः, 'किति च' (७-२-११८)

---

शब्द अर्थनिर्देश के लिए है। सप्तम्यर्थ के निर्देश होने पर पूर्व को ही कार्य होता है, उत्तर को नहीं। दध्युदकम्। मध्विदम्। पचत्योदनम्। यहाँ 'इको यणचि' सूत्र में अचि सप्तमी निर्दिष्ट होने से पूर्व इकार-उकार को क्रमशः यकार-वकारादेश हुए हैं। यहाँ से निर्दिष्टे की अनुवृत्ति ६७ वें सूत्र तक जाती है॥ ६६॥

**तस्मादित्युत्तरस्य (१-१-६७)**

तस्मात् ५।१। इति (अ०)। उत्तरस्य ६।१। पञ्चमी अर्थ के निर्देश होने पर पर को कार्य होता है, पूर्व को नहीं। ओदनं पचति। यहाँ 'तिङ्ङतिङः' से उत्तर पद तिङन्त को सर्वानुदात्त हुआ है॥ ६७॥

**स्वं रूपं शब्दस्याशब्दसंज्ञा (१-१-६८)**

स्वम् १।१। रूपम् १।१। शब्दस्य ६।१। अशब्द संज्ञा १।१। अशब्द संज्ञा में तत्पुरुष गर्भ नञ् तत्पुरुष है।

इस व्याकरण शास्त्र में शब्द का अपना रूप ही ग्रहण किया जाता है, परन्तु जहाँ शब्द संज्ञा (टिघुभ, आदि) हो वहाँ अर्थ ग्रहण किया जाता

इत्याद्यचो वृद्धिः, 'यस्येति च' (६-४-१४८) इतीकारलोपः। औदश्वित्कम्। 'उदश्वितोऽन्यतरस्याम्' (४-२-१९) इत्युदश्विच्छब्दात् ठकि, 'इसुसुक्तान्तात्कः। (७-३-५१) इति कादेशे किन्निमित्ताद्यज्वृद्धिः। पक्षेऽणि औदश्वितम्। तक्रारिष्टादिपर्यायेभ्यो न भवतः। अशब्दसंज्ञेति वचनात् 'दाधाघ्वदाप्' (१-१-२०) 'तरप्तमपौ घः' (१-१-२२) इति घुघग्रहणे संज्ञिनो ग्रहणं भवति न तु संज्ञायाः।

(वा० १)—सित्तद्विशेषाणांवृक्षाद्यर्थम्। 'विभाषावृक्षमृगतृण' (२-४-१२) इत्यत्र तद्विशेषग्रहणाद् द्वन्द्वसमासे प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः इति सिद्धं भवति। (वा० २)—पित् पर्यायवचनस्य च स्वाद्यर्थम्। चात् स्वस्य रूपस्य तद्विशेषाणां चेति। 'स्वे पुषः' (३-४-४०) इति णमुल् विधौ स्वपोषं पुष्टः, रैपोषं, धनपोषं, अश्वपोषं, गोपोषम् इति सिद्धं भवति। (वा० ३)—जित् पर्यायवचनस्यैव राजाद्यर्थम्। 'सभा राजाऽमनुष्यपूर्वा' (२-४-२३) इनसभम्, ईश्वरसभम् इति नपुंसकलिंगता सिद्धा भवति। (वा० ४)—झित्तद्विशेषाणां च मत्स्याद्यर्थम्। चात् तस्य च ग्रहणं भवति। 'पक्षिमत्स्यमृगान् हन्ति' (४-४-३५)। पाक्षिकः, मात्स्यिकः, शाकुनिकः इत्यत्र ठक्प्रत्ययः सिद्धो भवति।

## अणुदित्सवर्णस्य चाप्रत्ययः (१-१-६९) -७०

अणुदित्। सवर्णस्य। च। अप्रत्ययः। उत् इद् यस्य स उदित् (बहुव्रीहिः) अण् चोदिच्च अणुदित्-(समाहाराद्वन्द्वः)। न प्रत्ययः अप्रत्ययः

---

है। आग्नेयमष्टाकपालं निर्वपेत्। 'अग्नेर्ढक्' सूत्र में अग्नि शब्द का ग्रहण होने से उससे ही ढक् प्रत्यय करने पर आग्नेय रूप बना है; यहाँ अग्नि का अर्थ 'अंगारे' नहीं लिया जाता। इसी प्रकार 'औदश्वित्कम्' में 'उदश्वितोऽन्यतरस्याम्' से ठक् प्रत्यय और इसुसुक्तान्तात्कः' से ठ को कादेश विधान उदश्वित शब्द से ही हुआ है, न कि उसके अर्थ से। पक्ष में अण् होने पर औदश्वितम् हुआ। तक्र आदि पर्यायों से ये प्रत्यय नहीं होते। विस्तारभय से उनका अनुवाद नहीं दिया गया है। 'स्वं रूपम्' की अनुवृत्ति ७२ वें सूत्र तक चलती है।

### अणुदित् सवर्णस्य चाप्रत्ययः (१-१-६९)

अणुदित् १।१। सवर्णस्य ६।१। च (अ०)। अप्रत्ययः १।१। अणुदित् में बहुव्रीहिगर्भ द्वन्द्व समास है। अप्रत्ययः में नञ्तत्पुरुष समास है। अण् में अ से लण् के णकार पर्यन्त प्रत्याहार का ग्रहण इष्ट है। अण् के

(नञ्तत्पुरुषः) । अण्प्रत्याहार उदिच्च सवर्णस्य ग्राहको भवति चकारात् स्वस्य च रूपस्य, प्रत्ययं वर्जयित्वा । 'आद् गुणः' (६-१-८७) इति यथा देव+इन्द्रः=देवेन्द्रः इत्यत्र गुणो भवति एवं खट्वा+इन्द्रः=खट्वेन्द्रः इत्यादावपि गुणैकादेशो भवति । 'अस्य च्वौ' (७-४-३२) इत्यनेन अपटः पटः सम्पद्यते=पटीभवति इतिवत् अमाला माला सम्पद्यते=मालीभवति इत्यादावपि ईत्वादेशो भवति । दक्षस्यापत्यं पुमान् दाक्षिः, इत्यत्र यस्येति च'(६-४-१४८) इति यथाऽकारस्यलोपो भवति तथैव चूडालाया अपत्यं पुमान् चौडालिरित्यत्रापि तत्सवर्णस्य आकारस्य । उदित्खल्वपि-'चुटू' (१-३-७) इति चवर्गटवर्गयोः, 'लशक्वतद्धिते' (१-३-८) इति च कवर्गस्य ग्रहणं भवति 'अप्रत्यय' इति प्रत्ययस्य सवर्णग्रहण-प्रतिषेधात् सनाशंसभिक्ष उः' (३-२-१६८) इति ह्रस्वोकारविधानात् चिकीर्षुः, आशंसुः, भिक्षुः, इत्यादौ दीर्घोकारश्रवणं न भवति ।

## तपरस्तत्कालस्य (१-१-७०)

तपरः । तत्कालस्य । तः परो यस्मात् स तपरः (बहुव्रीहिः) । तादपि-परस्तपरः (ष० त०) । तस्यकालः तत्कालः (ष० त०) तत्कालः कालो यस्य स तत्कालस्तस्य (उत्तरपदलोपी बहुव्रीहिः) । तपरोवर्णस्तत्कालस्यात्मनातुल्य-

---

वर्ण कु चु टु तु पु से गृहीतक् च्० इत्यादि वर्ण स्वरूप और अपने सवर्ण के ग्राहक होते हैं; प्रत्यय में यह विधि लागू नहीं होती । देव+इन्द्रः=देवेन्द्रः । जैसे यहाँ पर 'आद्गुण:' सूत्र से अकार से परे इकार होने पर गुणैकादेश का विधान है, वैसे ही खट्वा+इन्द्रः=खट्वेन्द्रः में भी अ से सवर्णी आ का ग्रहण होने से गुणैकादेश हो गया । अपटः पटः सम्पद्यते=पटीभवति के समान अमाला माला सम्पद्यते=माली भवति में भी 'आ' को ईत्व हो गया । दक्षस्यापत्यं पुमान् 'दाक्षिः' में जैसे इञ् परे अ का 'यस्येति च' से लोप हुआ, वैसे ही चूडालाया अपत्यं पुमान् चौडालिः में सवर्णता से आकार का भी लोप हो गया । उदित् से 'चुटू' 'लशक्वतद्धिते' इन सूत्रों में चु से चवर्ग, टु से टवर्ग और कु से कवर्ग के वर्ण गृहीत होते हैं ।। ६९ ।।

## तपरस्तत्कालस्य (१-१-७०)

तपरः १।१ । तत्कालस्य ६।१ । तपरः में बहुव्रीहि और षष्ठी तत्पुरुष दोनों समास है । तत्कालस्य में उत्तरपदलोपी बहुव्रीहि है । तपर वर्ण अपने समान काल वाले सवर्ण का और स्वरूप का ग्राहक (=बोधक)

कालस्य गुणान्तरयुक्तस्य सवर्णस्य स्वस्य च रूपस्य ग्राहको भवति । वृक्षैः, प्लक्षैः । 'अतो भिस ऐस्' (७-१-९) इति ह्रस्वाकारात् परस्य भिस ऐसादेशे, वृद्धौ सस्य विसर्गे च रूपम् । अब्जाः गोजाः । 'जनसनखनक्रमगमो विट्' (३-२-६७) इत्यबुपपदाद् गवुपपदाच्च जनेर्विटि 'विड्वनोरनुनासिकस्यात्' (६-४-४१) इति तपरत्वादाकार एवान्तादेशो भवति ।

## आदिरन्त्येन सहेता (१-१-७१)

आदिः । अन्त्येन । सह । इता । आदिर्वर्णोऽन्त्येनेत्संज्ञकेन वर्णेन सहोच्चार्यमाणस्तन्मध्यपतितानां वर्णानां स्वस्य च रूपस्य ग्राहको भवति । अण्=अ इ उ । अक्=अ इ उ ऋ ऌ । अच्=अ इ उ ऋ ऌ ए ओ ऐ औ । हल्=ह य र व ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह । सुप्=सु औ जस् अम् औट् शस् टा भ्याम् भिस् ङे भ्याम् भ्यस् ङसि भ्याम् भ्यस् ङस् ओस् आम् ङि ओस् सुप् । तिङ=तिप् तस् झि सिप् थ थस् मिप् वस् मस्, त आताम् झ थास् आथाम् ध्वम् इट् वहि महिङ् । अन्त्यस्येत्संज्ञाऽत्र 'हलन्त्यम्' (१-३-३) इति सूत्रेण भवति ।

## येन विधिस्तदन्तस्य (१-१-७२)

येन । विधिः । तदन्तस्य । सोऽन्ते यस्य स तदन्तस्तस्य (बहुव्रीहिः) । येन विशेषणेन विधिर्विधीयते स तदन्तस्यात्मान्तस्य समुदायस्य स्वस्य च

---

होता है । वृक्षैः । प्लक्षैः । अतो भिस ऐस् से अकारान्तांग से परे ही भिस् के स्थान में ऐसादेश हुआ है । अब्जाः (गोजाः) अप् या गो शब्द के उपपद रहते जन धातु को विड्वनोरनुनासिकस्यात् से आकार ही अन्तादेश हुआ है ।। ७० ।।

## आदिरन्त्येन सहेता (१-१-७१)

आदिः १।१ । अन्त्येन ३।१ । सह (अ०) । इता ३।१ । आदि वर्ण अन्त्य इत्संज्ञक वर्ण के साथ उच्चरित होने पर स्वरूप का बोधक होने के साथ-साथ बीच के वर्णों का भी बोधक होता है । अण्=अ इ उ । अक्=अ इ उ ऋ ऌ । अच्=अ इ उ ऋ ऌ ए ओ ऐ औ । इसी प्रकार हल्, सुप् तिङ् में भी तत्तत् प्रत्याहारगत वर्णों का ग्रहण होता है ।। ७१ ।।

## येन विधिस्तदन्तस्य (१-१-७२)

येन ३।१ । विधिः १।१ । तदन्तस्य ६।१ । तदन्तस्य में बहुव्रीहि समास है । जिस विशेषण से विधि विहित होती है, वह तदन्त, (अर्थात्

रूपस्य ग्राहको भवति । चयः । जयः । अयः । 'एरच्' (३-३-५६) इतीवर्णा-न्तादच् प्रत्ययो भवति । अङ्गस्य गुणेऽयादेशे च रूपम् । अवश्यलाव्यम्, अव-श्यपाव्यम् । 'ओरावश्यके' (३-१-१२५) इत्युवर्णान्ताद् ण्यत्प्रत्ययो भवति । 'अचो ञ्णिति' (७-२-११५) इति वृद्धावावादेशे च रूपम् ।

(वा० १)—समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः । 'द्वितीया श्रितातीत०' (२-१-२४) इति द्वितीयान्तं श्रितादिभिः सह समस्यते-कष्टश्रितः । इह मा भूत कष्टं परमश्रित इति । प्रत्ययविधौ 'नडादिभ्यः फक्' (४-१-९९) इति नडस्यापत्यं नाडायनः । इह मा भूत्—सूत्रनडस्यापत्यं सौत्रनाडिः । किमविशेषेण ? नेत्याह । (वा० २)—उगिद्वर्णग्रहणवर्जमिति वाच्यम् । 'उगितश्च' (४-१-६) इति ङीप्प्रत्ययस्तदन्तादपि भवति । भवती, अतिभवती । वर्णग्रहणम् । 'अत इञ्' (४-१-९५) । दक्षस्यापत्यं पुमान् दाक्षिः । प्लाक्षिः । (वा० ३)—'यस्मिन् विधिस्तदादावल्ग्रहणे' । अल्ग्रहणेषु-यस्मिन् विधिस्तदादाविति वक्तव्यम् । 'अचि श्नुधातुभ्रुवांय्वोरियङुवङौ' (६-४-७७) इति । श्रियः, भ्रुवः ।

## वृद्धिर्यस्याचामादिस्तद्वृद्धम् (१-१-७३) -७५

वृद्धिः । यस्य । अचाम् । आदिः । तद् । वृद्धम् । अचामिति निर्धारणे षष्ठी । अचां मध्ये तस्याद्यज्वृद्धिसंज्ञकस्तच्छब्दरूपं वृद्धिसंज्ञकं भवति । शालायां भवः शालीयः । मालीयः । वृद्धसंज्ञावशाद् 'वृद्धाच्छः' (४-२-११४)

---

अपने रूप के किसी शब्द के अन्त में होने पर) और स्वरूप मात्र का ग्राहक होता है । चयः । जयः । अयः । यहाँ क्रमशः चि, जि, इ—इन धातुओं को 'एरच्' से, इकारान्तत्वेन और स्वरूपेण, अच् प्रत्यय होने पर अंग को गुण और अयादेश होकर चयः, जयः, अयः, रूप बने । अवश्यलाव्यम् । अवश्य-पाव्यम् । अवश्य पूर्वक लू-पू धातुओं से ऊकारान्तत्वेन 'ओरावश्यके' से ण्यत् प्रत्यय, अनुबन्ध लोप और अंगकार्य होकर अवश्यलाव्यम्, अवश्यपाव्यम् रूप सिद्ध हुए ।। ७२ ।।

### वृद्धिर्यस्याचामादिस्तद् वृद्धम् (१-१-७३)

वृद्धिः १।१ । यस्य ६।१ । अचाम् ६।३ । आदिः १।१ । तद् १।१ । वृद्धम् १।१ । 'अचाम्' में निर्धारण में षष्ठी विभक्ति है । अचों के मध्य में आदि का अच् जिस शब्द में वृद्धि संज्ञक हो, उसकी वृद्ध संज्ञा होती है ।

इति छे प्रत्यये तस्य 'आयेनेयीनीयियः०' (७-१-२) इतीयादशे 'यस्येति च' (६-४-१४८) इत्याकाकारलोपे च रूपसिद्धिः। औपवगीयः। कापटवीयः। वृद्धसंज्ञकादौपगवादिशब्दात् पूर्ववच्छप्रत्ययः, तत्स्थान ईयादेशश्च।

(वा० १) – वा नामधेयस्य वृद्धसंज्ञा वक्तव्या। देवदत्तीयाः, दैवदत्ताः। (वा० २)—गोत्रान्तादसमस्तवत् प्रत्ययो भवतीति वक्तव्यम्। घृतप्रधानो रौढिः, घृतरौढिः तस्य छात्रा घृतरौढीयाः। ओदनप्रधानः पाणिनिरोदनपाणिनिः, तस्य छात्रा ओदनपाणिनीयाः। वृद्धाम्भीयाः। वृद्धकाश्यपीयाः। (वा० ३)— जिह्वकात्यहरितकात्यवर्जम्। जैह्वकाताः। हरितकाताः।

## त्यदादीनि च (१-१-१४)

त्यदादिर्येषां तानि त्यदादीनि (बहुव्रीहिः)। त्यादादीनि शब्दरूपाणि वृद्धसंज्ञकानि भवन्ति। त्यदीयम्। तदीयम्। एतदीयम्। इदमीयम्। अदसीयम्। त्वदीयम्। त्वादायनिः। मदीयम्। मादायनिः। भवदीयम्। किमीयम्। सर्वत्र वृद्धसंज्ञायां सत्यां शैषिकार्थे छःप्रत्ययः। त्वादायनिरित्यादौ 'उदीचां वृद्धादगोत्रात्' (४-१-१५७) इत्यपत्येऽर्थे फिञि आयनादेशे च रूपम्।

---

शालीयः। मालीयः। औपगवीयः। कापटवीयः। शाला, माला, औपगव, कापटव शब्दों का आदि अच् वृद्धि संज्ञक होने से ये शब्द वृद्धसंज्ञक हुए तो 'वृद्धाच्छः' से 'तत्र भवः' अर्थ में छप्रत्यय और छकार को ईयादेश 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' से होने पर शालीयः, इत्यादि रूप सिद्ध हुए। यहाँ से 'वृद्धम्' की अनुवृत्ति पादान्त ७५ वें सूत्र तक जाती है॥ ७३॥

## त्यदादीनि च (१-१-७४)

त्यदादीनि १।३। च (अ०)। त्यदादीनि में बहुव्रीहि समास है। त्यदीयम्। तदीयम्। एतदीयम्। इदमीयम्। अदसीयम्। त्वदीयम्। मदीयम्। त्वादायनिः। मादायनिः। भवदीयम्। किमीयम्। त्यद् इत्यादि शब्दों की वृद्धसंज्ञा होने पर शैषिकार्थक छप्रत्यय हुआ। छ को ईयादेश होने पर त्यदीयम् इत्यादि रूप बने। त्वादायनिः, इत्यादि में त्यद् आदि की वृद्धसंज्ञा होने पर 'उदीचां वृद्धादगोत्रात्' से अपत्यार्थ में फिञ् और फकार को आयनादेश होने पर त्वादायनिः, इत्यादि शब्द बने॥ ७४॥

## एङ् प्राचां देशे (१-१-१५)

यस्याचामादिरिति मण्डूकप्लुतगत्याऽनुवर्तते। एङ् यस्य शब्दरूपस्याचामादिस्तत्प्राचां[1] देशाऽभिधाने वृद्धसंज्ञं भवति। एणीपचनीयः। भोजकटीयः। गोनर्दीयः। पूर्वंच्छप्रत्यये कृते रूपसिद्धिः।

इति प्रथमाध्यायस्य प्रथम पादः

—: ० :—

---

## एङ् प्राचां देशे (१-१-७५)

एङ् १।१। प्राचाम् ६।३। देशे ७।१। 'एङ्' वर्ण जिस शब्द में आदि अच् हो, उसकी प्राग्देश के वाचक होने पर वृद्धसंज्ञा होती है। एणीपचनीयः। भोजकटीयः। गोनर्दीयः। एणीपचन, भोजकट, गोनर्द--ये शब्द पूर्व दिशा के प्राचीनकाल के देशों के नाम थे। उनकी वृद्धसंज्ञा होने पर उनसे शैषिकार्थ में छप्रत्यय होने एणीपचनीयः इत्यादि रूप निष्पन्न हुये ॥ ७५ ॥

यह लघुकशिका में प्रथम अध्याय
के प्रथमपाद का हिन्दी अनुवाद पूर्ण हुआ।

—: ० :—

---

१. "शरावती नाम नदी उत्तरपूर्वाभिमुखा। तस्या दक्षिणपूर्वस्यां दिशि व्यवस्थितो देशः प्राग्देशः उत्तरावरस्यामुदग्देशः, तो शरावती विभजते। तथा मर्यादया तयोर्विभागो ज्ञायते।" (पदमञ्जरी १-१-७५)।

# अथ प्रथमाध्यायस्य द्वितीयः पादः

## गाङ्कुटादिभ्योऽञ्णिन्ङित् (१-२-१) -४

गाङ्कुटादिभ्यः । अञ्णित् । ङित् । कुट् आदिर्येषां ते कुटादयः (बहुव्रीहिः) । गाङ् च कुटादयश्च गाङ्कुटादयस्तेभ्यः (इतरेतरद्वन्द्वः) । ञ् च ण् च ञ्णौ ताविती यस्य स ञ्णित् । (द्वन्द्वगर्भो बहुव्रीहिः) । न ञ्णित् अञ्णित् (नञ्तत्पुरुषः) । गाङ् इत्यस्मात् कुटादिभ्यश्च धातुभ्यः परो ञ्णिद्भिन्नप्रत्ययो ङिद्भवति-ङिद्वद्भवतीत्यर्थः । गाङः-अध्यगीष्ट । अध्यगीषाताम् । अध्यगीषत । अध्युपसृष्टादिङ् (अध्ययने) धातोर्लुङि च्लौ सिचि ते 'विभाषा लुङ्लृङोः' (२-४-५०) इति गाङादेशे सिचः प्रकृतसूत्रेण ङित्वाद् 'घुमास्थागापाजहातिसां हलि' (६-४-६६) इतीकारादेशः । ततोऽडागमे सस्य मूर्धन्ये तस्य ष्टुत्वे च कृते अध्यगीष्टेति । एवमग्रेऽपि । कुटादिभ्यः-कुटिता । कुटितुम् । कुटितव्यम् । उत्पुटिता । उत्पुटितुम् । उत्पुटितव्यम् । कुट् (कौटिल्ये) इत्यादेस्तास्यादौ परतः 'पुगन्तलघूपधस्य च' (७-३-८६) इति प्राप्तो गुणः प्रकृतसूत्रेण तास्यादेर्ङित्वात् 'क्ङिति च' (१-१-५) इत्यनेन बाध्यते ।

---

### अथ प्रथमाध्यायस्य द्वितीयः पादः

### गाङ्कुटादिभ्योऽञ्णिन् ङित् (१-२-१)

गाङ्कुटादिभ्यः ५।३ । अञ्णित् १।१ । ङित् १।१ । गाङ्कुटादिभ्यः में बहु०गर्भ इ०द्वन्द्व और अञ्णित् में द्वन्द्व गर्भ बहुव्रीहि समास तथा अन्त में नञ्तत्पुरुष है । गाङ् और कुटादि धातुओं से परे ञित्-भिन्न प्रत्यय ङिद्वद् होता है । जैसे—गाङ् के लुङ् में होने वाले रूपों—अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत में सिच् प्रत्यय के इस सूत्र से ङित् होने के कारण गाधातु को ईकारान्तादेश हो गया । और कुटादि धातु रूपों—कुटिता, कुटितुम्, कुटितव्यम् । उत्पुटिता, उत्पुटितुम्, उत्पुटितव्यम् । इत्यादि में तास्-तुमुन्-तव्यत् प्रत्ययों के इसी सूत्र से ङित् होने से प्राप्तलघूपधगुण 'क्ङिति च' सूत्रवशाद् बाधित हो गया ।। १ ।।

## विज इट् (१-२-२)　　　　　-३

विजः । इट् । ओविजी (भयचलनयोः) धातोः पर इडादिः प्रत्ययो ङिद्भवति । उद्विजिता । उद्विजिता । उद्विजितव्यम् । ङित्वं पूर्ववद् गुणप्रतिषेधार्थम् ।

## विभाषोर्णोः (१-२-३)

विभाषा । ऊर्णोः । ऊर्णुञ् (आच्छादने) धातोः पर इडादिप्रत्ययो विभाषा ङिद्भवति । प्रोर्णुविता । प्रोर्णविता । ङित्पक्षे गुणाभावे 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' (६-४-७७) इत्युवङादेशः । अङित्पक्षेऽङ्गस्य गुणोऽवादेशश्च ।

## सार्वधातुकमपित् (१-२-४)　　　　　-५

सार्वधातुकम् । अपित् । प् इद् यस्य स पित् (बहुव्रीहिः) । न पित् अपित् (नञ्तत्पुरुषः) । अपित् सार्वधातुकं ङिद् भवति । कुरुतः । कुर्वन्ति ।

---

## विज इट् (१-२-२)

विजः ५।१ । इट् १।१ । भय और चलने के अर्थ में वर्त्तमान विज-धातु से परे इडादि प्रत्यय ङित् होता है । उद्विजिता । उद्विजितुम् । उद्विजितव्यम् । उदुपसर्गपूर्वक विज् के ये क्रमशः तासि, तुमुन् और तव्यत् प्रत्ययों में रूप हैं । इडागमयुक्त इन प्रत्ययों के ङित् होने से, आर्धधातुकप्रत्ययनिमित्तक अंग को लघूपधगुणादेश जो प्राप्त हो रहा था, निषिद्ध हो गया ।। २ ।।

## विभाषोर्णोः (१-२-३)

विभाषा १।१ । ऊर्णोः ५।१ । आच्छादनार्थक ऊर्णुधातु से परे इडादि-प्रत्यय विकल्प से ङित् होता है। प्रोर्णुविता । प्रोर्णविता । इट्सहित तृन्-तृच्-तासि प्रत्यय जिस पक्ष में ङित् हुआ वहाँ अंगगुणादेश के प्रतिषिद्ध होने से 'अचि श्नुधातु०' इत्यादि से उवङादेश हो गया । पक्षान्तर में अंग को गुण और अवादेश हो गया ।। ३ ।।

## सार्वधातुकमपित् (१-२-४)

सार्वधातुकम् १।१ । अपित् १।१ । अपित् में बहुव्रीहि गर्भ नञ्तत्पुरुष समास है । पित्भिन्न सार्वधातुक प्रत्यय ङित् होता है । कुरुतः । कुर्वन्ति ।

चिनुतः । चिन्वन्ति । तसादिविभक्तीनामपित्त्वादतिदिश्यमानं ङित्त्वं 'क्ङिति च' त्यनेन सार्वधातुकनिमित्तकाङ्गस्य गुणस्य बाधकं भवति ।

**असंयोगाल्लिट् कित् (१-२-५)** -६, -२६

असंयोगात् । लिट् । कित् । न संयोगः असंयोगस्तस्मात् (नञ्तत्पुरुषः) । असंयोगान्ताद्धातोः परोऽपिल्लिट्प्रत्ययः किद्भवति । बिभिदतुः । बिभिदुः । चिच्छिदतुः । चिच्छिदुः । ईजतुः ईजुः । भिदेः छिदिर् (द्वैधीकरणे) इत्यस्माच्चोत्तरयोः अतुसुसोः कित्त्वाल्लघूपधलक्षणो गुणः प्रतिषिध्यते । यजेः (देवपूजासंगतिकरणदानार्थकस्य) परयोश्चानयोः कित्वाद् 'वचिस्वपियजादीनां किति च' (६-१-१६) इति सम्प्रसारणे 'सम्प्रसारणाच्च' (६-१-१०८) इति पूर्वरूपैकादेशे कृते 'लिटि धातोरनभ्यासस्य' (६-१-८) इति द्वित्वं, 'अकः सवर्णे दीर्घः' (६-१-१०१) इति दीर्घश्च भवति ।

**इन्धिभवतिभ्यां च (१-२-६)**

इन्धिभवतिभ्याम् । च । इन्धिश्च भवतिश्च इन्धिभवती ताभ्याम् (इतरेतरद्वन्द्वः) । इन्धिभवतिभ्यां परो लिट्प्रत्ययः किद्भवति । इन्धेः-संयोगार्थं

---

चिनुतः । चिन्वन्ति । यहाँ तस्-झि-उ और श्नु प्रत्ययों का ङिद्वद्भाव होने से अंगों को गुणादेश नहीं होने पाया ।। ४ ।।

**असंयोगाल्लिट् कित् (१-२-५)**

असंयोगात् ५।१ । लिट् १।१ । कित् १।१ । असंयोगात् पद में नञ्तत्पुरुष समास है । पूर्व सूत्र से अपित् की अनुवृत्ति आ रही है । असंयोगान्त धातु से परे अपित् लिट् प्रत्यय किद् होता है । बिभिदतुः । बिभिदुः । चिच्छिदतुः । चिच्छिदुः । ईजतुः । ईजुः । क्रमशः भिद्, छिद् और यज् धातुओं के ये लिट् प्रथम पुरुष द्विवचन और बहुवचन के रूप हैं । इनके (अतुस्-उस् के) कित् होने से 'क्ङिति च' सूत्र से प्रथम चार उदाहरणों में प्राप्त उपधागुण का प्रतिषेध हो गया और अन्तिम दो उदाहरणों में यज् के यकार को इकार सम्प्रसारण होने पर पूर्वरूपैकादेश, द्वित्व और सवर्णदीर्घ हुआ है ।। ५ ।।

**इन्धिभवतिभ्यां च (१-२-६)**

इन्धिभवतिभ्याम् ५।२ । च (अव्यय) । 'इन्धिभवतिभ्याम्' में इतरेतरद्वन्द्व समास है । दीप्त्यर्थक इन्ध धातु और भूधातु से परे लिट् प्रत्यय कित्

भवतेश्च पिदर्थं वचनम् । पुत्र ईधे अथर्वणः । समीधे दस्युहन्तमम् (ऋ० ६-१६-१४।१५) ञिइन्धी (दीप्तौ) धातोर्लिटि त प्रत्ययः । 'लिटस्तझयो-रेशिरेच्' (३-४-८१) इत्येशप्रत्ययस्तस्य कित्त्वात् 'अनिदितां हल उपधायाः क्ङिति' (६-४-२४) इति नकारलोपो भवति । बभूव । बभूविथ । भूधातोर्णलि 'अचो ञ्णिति' (७-२-११५) इति प्राप्ताऽङ्गस्य वृद्धिः, थलि च 'सार्वधातुकार्धधातुकयोः' (७-३-८४) इति प्राप्तोऽङ्गस्य गुणः कित्वान्न भवति ।

(वा०)—श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम् । श्रेथतुः, श्रेथुः । ग्रेथतुः, ग्रेथुः । देभतुः, देभुः । परिषस्वजे, परिषस्वजाते ।

मृडमृदगुधकुषक्लिशवदवसः क्त्वा (१-२-७) -८

मृडश्च मृदश्च गुधश्च कुषश्च क्लिशश्च वदश्च वस् च मृड···वस्, तस्मात् (समाहारद्वन्द्वः) । मृडादिभ्यो धातुभ्यः परः क्त्वाप्रत्ययः किद् भवति । 'न क्त्वा सेट्' (१-२-१८) इति सामान्येन कित्त्वप्रतिषेधं वक्ष्यति तस्यायं पुरस्तादपवादः । गुधकुषक्लिशीनां रलो व्युपधाद्धलादेः संश्च' (१-२-२६) इति विकल्पे प्राप्ते नित्यार्थं वचनम् । मृड=(सुखने) मृडित्वा । मृद=(क्षोदे) मृदित्वा । गुध=(परिवेष्टने दिवादिः, रोषे क्र्यादिः) गुधित्वा । कुष=(निष्कर्षे) कुषित्वा । क्लिश्=(विबाधने) क्लिशित्वा । वद=(व्यक्तायां

---

होता है । इन्ध् के संयोगान्त होने से और भू में पित् विषय में भी गुणानङ्गीकार होने से यह सूत्र बनाया गया । पुत्र ईधे अथर्वणः । समीधे दस्युहन्तम् । बभूव । बभूविथ । प्रथम दो उदा० ईधे, समीधे इन्ध के आत्मनेपद लिट् प्रथम पुरुष तप्रत्यय के हैं । यहाँ त को एशादेश और प्रकृत सूत्र से कित्त्व होने से उपधास्थ नकार का लोप हो गया । बभूव-तिप् (णल्) और बभूविथ सिप् (थल्) के रूप हैं । यहाँ पित् प्रत्यय के कित्वद् होने से गुण नहीं हुआ ।। ६ ।।

मृडमृदगुधकुषक्लिशवदवसः क्त्वा (१-२-७)

मृडमृदगुधकुषक्लिशवदवसः ५।१ । क्त्वा (अ०) । मृडमृद० इत्यादि में समाहार द्वन्द्व समास है । मृडादि धातुओं से परे क्त्वाप्रत्यय कित् होता है । यह सूत्र आगे के अठारहवें सूत्र 'न क्त्वा सेट्' का अपवाद है। मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । क्लिशित्वा । उदित्वा । उषित्वा । प्रथम पाँच उदाहरणों में सेट् क्त्वा प्रत्यय के कित् होने से उपधागुण का प्रतिषेध

वाचि) उदित्वा । वस=(निवासे) उषित्वा । कित्त्वान्मृडादेरङ्गस्य गुणाभावः, वदिवस्योः सम्प्रसारणञ्च ।

### रुदविदमुषग्रहिस्वपिप्रच्छः संश्च (१-२-८) -१०

रुदविदमुषग्रहिस्वपिप्रच्छः । सन् । च । रुदश्च विदश्च मुषश्च ग्रहिश्च स्वपिश्च प्रच्छ च रुद ······प्रट्, तस्मात् (समाहारद्वन्द्वः) । रुदादिभ्यः परः सन्प्रत्ययः क्त्वा च कितौ भवतः । रुदविदमुषीणां 'रलो व्युपधात्०' इति विकल्पे प्राप्ते नित्यार्थं ग्रहणम् । रुदिर्=(अश्रुविमोचने) रुदित्वा, रुरुदिषति । विद= (ज्ञाने अदादिः) विदित्वा, विविदिषति । मुष=(स्तेये) मुषित्वा, मुमुषिषति । ग्रह=(उपादाने) गृहीत्वा, जिघृक्षति । ञिष्वप्=(शये) सुप्त्वा, सुषुप्सति । प्रच्छ=(ज्ञीप्सायाम्) पृष्ट्वा, पिपृच्छिषति । कित्वाद् गुणप्रतिषेधः सम्प्रसारणञ्च भवति ।

### इको झल् (१-२-९) -११, -१२

इकः । झल् । इगन्ताद्धातोः परो झलादिः सन् किद्भवति । चिञ्-चिचीषति । ष्टुञ्=(स्तुतौ) तुष्टूषति । कृञ्-चिकीर्षति । कित्त्वाद् गुणप्रतिषेधः । 'अज्झनगमां सनि' (६-४-१६) इत्यंगस्य दीर्घः । 'ऋत इद्धातोः' (७-१-१००)

---

और अन्तिम दो उदाहरणों में वकार को सम्प्रसारण-उकारादेश हो गया ।। ७ ।।

### रुदविदमुषग्रहिस्वपिप्रच्छः संश्च (१-२-८)

रुदविदमुषग्रहिस्वपिप्रच्छः ५।१ । सन् १।१ । च (अ०) । रुदविद० इत्यादि में समा० द्वन्द्व समास है । रुदादि धातुओं से परे सन् और क्त्वा प्रत्यय कित् होते हैं । रुदित्वा, रुरुदिषति । विदित्वा, विविदिषति । मुषित्वा, मुमुषिषति । गृहीत्वा, जिघृक्षति । सुप्त्वा, सुषुप्सति । पृष्ट्वा, पिपृच्छिषति । यहाँ रुद्, विद् और मुष् धातुओं में गुणाभाव और ग्रह, ष्वप् और प्रच्छ में सम्प्रसारण का होना प्रत्ययकित्त्व के फल हैं ।। ८ ।।

### इको झल् (१-२-९)

इकः ५।१। झल् १।१ । इगन्त धातु से परे झलादि सन् प्रत्यय कित् होता है । चि—चिचीषति । ष्टु—तुष्टूषति । कृ—चिकीर्षति । यहाँ पूर्व सूत्र से सन् की अनुवृत्ति आ रही है, जो आगे दशवें सूत्र तक जाएगी ।

इतीत्वम्। 'सन्यङोः' (६-१-९) इति द्विर्वचनम्। कुहोश्चुः (७-४-६२) इत्यभ्यासचुत्वम्।

### हलन्ताच्च (१-२-१०) -११

हलन्तात्। च। हल् चासावन्तश्च हलन्तस्तस्मात् (कर्मधारयः)। समीपवचनोऽत्रान्तशब्दः। इकः[1] समीपाद्धलः परो झलादिः सन् किद्भवति। भिद्-बिभित्सति। बुध्= (अवगमने) बुभुत्सते। 'पुगन्तलघूपधस्य च' (७-३-८६) इति प्राप्तो गुणः कित्त्वाद् बाध्यते।

### लिङ्सिचावात्मनेपदेषु (१-२-११) -१३, -१७

लिङ्सिचौ। आत्मनेपदेषु। लिङ् च सिच् च लिङ्सिचौ (इतरेतर-द्वन्द्वः)। इक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदेषु परतः कितौ भवतः। लिङः-भिद्-भित्सीष्ट, बुध्-भुत्सीष्ट। सिचः अभित्त। अबुद्ध। 'झलो झलि' (८-२-२६) इति सिचः सकारलोपः। 'खरि च' (८-४-५५) इति दस्य

---

झलादि सन् का तात्पर्य इडागमरहित सन् से है। उसके कित् होने से अंग को गुण नहीं हुआ॥ ९॥

### हलन्ताच्च (१-२-१०)

हलन्तात् ५।१। च (अ०)। हलन्तात् में कर्मधारय समास है। अन्त शब्द यहाँ पर समीपवाची है। इक् के समीपस्थ हलन्त धातु से परे झलादि सन् प्रत्यय कित् होता है। भिद्-बिभित्सति। बुध्-बुभुत्सते। यहाँ आर्धधातुकत्वेन प्राप्त उपधागुण का सन् के कित् होने से प्रतिषेध हो गया॥ १०॥

### लिङ्सिचावात्मनेपदेषु (१-२-११)

लिङ्सिचौ १।२। आत्मनेपदेषु ७।३। लिङ्सिचौ में इ० द्वन्द्व समास है। इक्समीप हलन्त धातु से परे झलादि लिङ् और सिच् प्रत्यय आत्मनेपदों में कित् होते हैं। लिङ् में भिद्=भित्सीष्ट, बुध्=भुत्सीष्ट। सिच में, भिद्=अभित्त। बुध्=अबुद्ध। इन प्रत्ययों के कित् होने से सर्वत्र प्राप्त

---

१. इक इति पञ्चम्यन्तं समीपसमीपि सम्बन्धे सति विभक्तिविपरिणामेन षष्ठ्यन्ततामनुभवतीति न्यासकारः।

तत्वम् । 'झषस्तथोर्धोऽधः' (८-२-४०) इति तस्य धत्वम् । 'झलां जश् झशि' (८-४-५३) इति जश्त्वम् । कित्वादुपधागुणो न भवति ।

## उश्च (१-२-१२)

उः । च । ऋ वर्णान्ताद्धातोः परौ झलादी लिङ्सिचावात्मनेपदेषु कितौ भवतः । कृ-कृषीष्ट । हृ-हृषीष्ट । अकृत, अहृत । 'ह्रस्वादङ्गात्' (८-२-२७) इति सिचलोपः । कित्वादगुणः ।

## वा गमः (१-२-१३)

गम्लृ (गतौ) धातोः परौ लिङ्सिचौ झलादी आत्मनेपदेषु वा कितौ भवतः । लिङ्-संगंसीष्ट, संगसीष्ट । सिच्-समगंस्त, समगंस्त । 'समो गम्यृच्छि-प्रच्छिस्वरत्यर्तिश्रुविदिभ्यः' (१-३-२९) इत्यात्मनेपदम् । कित्वपक्षे 'अनुदात्तो-पदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (६-४-३७) इत्यनुनासि-कमवर्णस्य लोपः । अकित्पक्षे 'नश्चापदान्तस्य झलि' (८-३-२४) इति मोऽनु-स्वारः ।

---

उपधा गुण का प्रतिषेध हो गया । अभित्त, अबुद्ध में 'झलो झलि' से सिच् के सकार का लुक् हुआ ।। ११ ।।

## उश्च (१-२-१२)

उः ५।१ । च (अ०) । ऋवर्णान्त धातु से परे झलादि लिङ् और सिच् आत्मनेपदों में कित् होते हैं । कृ=कृषीट । हृ=हृषीष्ट । अकृत, अहृत । प्रथम दो उदाहरण लिङ् के और अन्तिम दो सिच् के हैं । उभयत्र प्रत्ययों के कित् होने से ऋकारान्ताङ्ग को प्राप्त गुण प्रतिषिद्ध हो गया ।। १२ ।।

## वा गमः (१-२-१३)

वा (अ०) । गमः ५।१ । गत्यर्थक गम् धातु से परे झलादि लिङ् और सिच् आत्मनेपदों में विकल्प से कित् होते हैं । लिङ् में—संगंसीष्ट, संगसीष्ट । सिच् में—समगत, समगंस्त । यहाँ 'समो गम्यृच्छिप्रच्छि०' इत्यादि सूत्र से सम्पूर्वक गम् धातु का आत्मनेपद में प्रयोग होता है । कित् पक्ष में अनुनासिक मकार का लोप और अकित् पक्ष में मकार को अनुस्वार हो गया है ।। १३ ।।

## हनः सिच् (१-२-१४) -१७

हन्धातोः परः सिच् प्रत्यय आत्मनेपदेषु किद्भवति । आहत । आहसाताम् । आहसत । 'आङो यमहनः' (१-३-२८) इत्यात्मनेपदम् । कित्त्वाद् 'अनुदात्तोपदेश०' इत्यनुनासिकलोपः । ह्रस्वादंगात् (८-२-२७) इति ते परतः सिच्लोपः ।

## यमो गन्धने (१-२-१५) -१६

यमः । गन्धने । यम (उपरमे) धातोर्गन्धने (सूचने) अर्थे वर्त्तमानात् परः सिजात्मनेपदेषु किद् भवति । उदायत । उदायसाताम् । उदायसत । 'आङो यमहनः' इत्यात्मनेपदम् । कित्त्वादनुदात्तोपदेश० इत्यादिनाऽनुनासिकलोपः ।

## विभाषोपयमने (१-२-१६)

विभाषा । उपयमने । उपयमने (विवाहे) अर्थे वर्त्तमानाद् 'यम' धातोः परः सिच् प्रत्यय आत्मनेपदेषु विभाषा किद् भवति । उपायत कन्याम् । उपायंस्त कन्याम् । 'उपाद्यमः स्वकरणे' (१-३-५६) इत्यात्मनेपदम् । कित्त्वपक्षेऽनुनासिकलोपः ।

---

### हनः सिच् (१-२-१४)

हनः ५।१ । सिच् १।१ । हन् धातु से परे सिच् प्रत्यय आत्मनेपदों में कित् होता है । आहत । आहसाताम् । आहसत । यहाँ 'आङो यमहनः' से आत्मनेपद हुआ । लुङ् में सिच् के कित् होने पर 'अनुदात्तोपदेश०' इत्यादि सूत्र से हन् के नकार का लोप हो गया ॥ १४ ॥

### यमो गन्धने (१-२-१५)

यमः ५।१ । गन्धने ७।१ । गन्धन अर्थ में वर्त्तमान यम धातु से परे सिच् प्रत्यय आत्मने पदों में कित् होता है । उदायत । उदायसाताम् । उदायसत । कित्त्व से यम् के मकार का लोप हो गया ॥ १५ ॥

### विभाषोपयमने (१-२-१६)

विभाषा १।१ । उपयमने ७।१ । उपयमन (=विवाह) अर्थ में वर्त्तमान यमधातु से परे सिच् प्रत्यय आत्मनेपदों में विकल्प से कित् होता है । उपायत कन्याम् । उपायंस्त कन्याम् । यहाँ 'उपाद्यमः स्वकरणे' से आत्मनेपद और कित्पक्ष में 'अनुदात्तोपदेश०' इत्यादि से अनुनासिक मकार का लोप हुआ ॥ १६ ॥

## स्थाघ्वोरिच्च (१-२-१७)

स्थाघ्वोः । इत् । च । स्था च घुश्च स्थाघू तयोः स्थाघ्वोः (इतरेतर-द्वन्द्वः) । ष्ठा (गतिनिवृत्तौ) धातोः घुसंज्ञकधातूनाञ्च इकारान्तादेशो भवति, सिच्च किद्भवत्यात्मनेपदेषु परतः । उपास्थित । उपास्थिषाताम् । उपास्थिषत । दाण्=(दाने) अदित । डुधाञ्=(धारणपोषणयोः) अधित । 'ह्रस्वादंगात्' (८-२-२७) इति सकारलोपः । कित्वाद् गुणाऽभावः ।

## न क्त्वा सेट् (१-२-१८) -२५, -२६

सहेटा=सेट् 'तेन सहेति तुल्ययोगे' (२-२-२८) इति बहुव्रीहिसमासः । सेट् क्त्वा प्रत्ययः किन्न भवति । देवित्वा । वर्त्तित्वा । 'पुगन्तलघूपधस्य च' (७-३-८६) इत्यंगस्य गुणः ।

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः (१-२-१९) -२२

शीङ् च स्विदिश्च, मिदिश्च क्ष्विदिश्च धृश्च शीङ्·····धृट्, तस्मात् (समाहारद्वन्द्वः) । शीङादिभ्यो धातुभ्यः परो निष्ठा प्रत्ययः सेट् किन्न भवति । शीङ्=(स्वप्ने)-शयितः, शयितवान् । ञिष्विदा=(गात्रप्रक्षरणे)-प्रस्वेदितः

---

### स्थाघ्वोरिच्च (१-२-१७)

स्थाघ्वोः ६।२ । इत् १।१ । च (अ०) । स्थाघ्वोः में इ० द्वन्द्व समास है । स्था और घुसंज्ञक (दा-धा) धातुओं को इकारान्तादेश होता है और इनसे परे सिच् प्रत्यय आत्मनेपदों में कित् होता है । स्था—उपास्थित । उपास्थिषाताम् । उपास्थिषत । दा—अदित । धा—अधित । यहाँ सिच् लोप और गुणाभाव कित्व से हुआ ॥ १७ ॥

### न क्त्वा सेट् (१-२-१८)

न (अ०) । क्त्वा (अ०) । सेट् १।१ । सेट् यह बहुव्रीहि समास है । इट् सहित क्त्वा प्रत्यय कित् नहीं होता । देवित्वा । वर्त्तित्वा । कित्वप्रतिषेध से दिव् के इकार तथा वृत् के ऋकार को गुण हो गया ॥ १८ ॥

### निष्ठा शीङ्स्विदिमिदिक्ष्विदि धृषः (१-२-१९)

निष्ठा १।१ । शीङ्—धृषः ५।१ । शीङ्स्विदिमिदिक्ष्विदिधृषः में समाहारद्वन्द्व समास है । शीङ् इत्यादि धातुओं से परे सेट् निष्ठा (क्त-क्तवतु) प्रत्यय कित् नहीं होता । शीङ्—शयितः, शयितवान् । ष्विद्—प्रस्वेदितः,

प्रस्वेदितवान् । ञिमिदा=(स्नेहने) प्रमेदितः, प्रमेदितवान् । ञिक्ष्विदा=(स्नेहनमोचनयोः) प्रक्ष्वेदितः, प्रक्ष्वेदितवान् । ञिधृषा=(प्रागल्भ्ये) प्रर्धषितः, प्रर्धषितवान् । अकित्त्वादङ्गस्य गुणः ।

**मृषस्तितिक्षायाम् (१-२-२०)**

मृषः । तितिक्षायाम् । तितिक्षा (क्षमा) अर्थे वर्त्तमानान्मृषेर्धातोः परः सेण्निष्ठाप्रत्ययो न किद् भवति । मर्षितः, मर्षितवान् । अकित्त्वाद् गुणः ।

**उदुपधाद्भावादिकर्मणोरन्यतरस्याम् (१-२-२१)**

उदुपधात् । भावादिकर्मणोः । अन्यतरस्याम् । उदुपधा यस्य स उदुपधस्तस्मात् (बहुब्रीहिः) । आदि चादः कर्म च आदिकर्म (कर्मधारयः) । भावश्चादिकर्म च भावादिकर्मणी तयोः (इतरेतरद्वन्द्वः) । उदुपधात् धातोर्भावे आदिकर्मणि च वर्त्तमानः सेण्निष्ठाप्रत्ययोऽन्यतरस्यां (विकल्पेन) किन्न भवति । भावे द्युती=(दीप्तौ) द्युतितमनेन, द्योतितमनेन । मुद=(हर्षे)-मुदितमनेन, मोदितमनेन । आदिकर्मणि प्रद्योतितः, प्रद्युतितः । प्रमुदितः, प्रमोदितः । 'नपुंसके भावे क्तः' (३-३-११४), 'आदिकर्मणि निष्ठा वक्तव्या' (वा० ३।२।१०२), 'आदिकर्मणि क्तः कर्त्तरि च' (३-४-७१) इति भावे कर्त्तर्यादिकर्मणि च क्तः प्रत्ययः । अकित्त्वपक्षे लघूपधलक्षणगुणः । इतरत्र तदभावः ।

---

प्रस्वेदितवान् । मिद—प्रमेदितः, प्रमेदितवान् । क्ष्विद्—प्रक्ष्वेदितः, प्रक्ष्वेदितवान् । धृष्—प्रर्धषितः, प्रर्धषितवान् । कित्प्रतिषेध से सर्वत्र अंग को गुण हो गया ।। १९ ।।

**मृषस्तितिक्षायाम् (१-२-२०)**

मृषः ५।१ । तितिक्षायाम् ७।१ । तितिक्षा (क्षमा) अर्थ में वर्त्तमान मृष् धातु से परे सेट् निष्ठा प्रत्यय कित् नहीं होता । मर्षितः, मर्षितवान् । न हां कित् प्रतिषेध से अंग को लघूपध गुण हो गया ।। २० ।।

**उदुपधाद्भावादिकर्मणोरन्यतरस्याम् (१-२-२१)**

उदुपधात् ५।१ । भावादिकर्मणोः ७।२ । अन्यतरस्याम् ७।१ । उदुपधात् में बहुव्रीहि तथा भावादिकर्मणोः में कर्मधारयगर्भद्वन्द्व समास है । उकार उपधा वाली धातु से भाव तथा आदि कर्म में वर्त्तमान सेट्निष्ठा प्रत्यय विकल्प से कित् नहीं होता । भाव में—द्युत—द्युतितमनेन, द्योतितमनेन । मुद—मुदितमनेन, मोदितमनेन । आदि कर्म में—प्रद्योतितः प्रद्युतितः, प्रमुदितः, प्रमोदितः ।। २१ ।।

पूङः क्त्वा च (१-२-२२) -२६

पूङ् (पवने) धातोः परौ सेट्क्त्वानिष्ठाप्रत्ययौ कितौ न भवतः। पवित्वा। पवितः, पवितवान्। पूङश्च (७-२-५१) इति विकल्पेनेडागमो भवति क्त्वानिष्ठयोः। कित्त्वप्रतिषेधादङ्गस्य गुणो भवत्येव सेटक्त्वाप्रत्ययस्य कित्त्वं प्रतिषिद्धमेव पूर्वम्। एवं तर्हि क्त्वाग्रहणमुत्तरार्थम्।

नोपधात्थफान्ताद्वा (१-२-२३) -२६

नोपधात्। थफान्तात्। वा। न उपधा यस्य स नोपधस्तस्मात् (बहुव्रीहिः)। थश्च फश्च थफौ (इतरेतरद्वन्द्वः)। थफावन्ते यस्य स थफान्तस्तस्मात् (बहुव्रीहिः)। नोपधात् थान्तात् फान्ताच्च धातोः परः सेट्क्त्वाप्रत्ययो वा किन्न भवति। ग्रन्थ=(सन्दर्भे)ग्रथित्वा, ग्रन्थित्वा। श्रन्थ = (विमोचनहर्षयोः क्र्यादिः, सन्दर्भे चुरादिः) श्रथित्वा, श्रन्थित्वा। गुम्फ=(ग्रन्थे)-गुफित्वा, गुम्फित्वा। कित्त्वविकल्पादनुनासिकलोपविकल्पः।

वञ्चिलुञ्च्यृतश्च (१-२-२४)

वञ्चिलुञ्च्यृतः। च। वञ्चिश्च लुञ्चिश्च ऋच्च वञ्चिलुञ्च्यृत्,

---

पूङः क्त्वाच (१-२-२२)

पूङः ५।१। क्त्वा (अ०)। च (अ०)। शोधनार्थक पूङ् धातु से परे सेट् क्त्वा और सेट् निष्ठा प्रत्यय कित् नहीं होते। पवित्वा। पवितः पवितवान्। कित्त्वप्रतिषेध से ऊकारान्तांग को गुण हो गया। सेट्क्त्वा का कित् प्रतिषेध पहले से प्राप्त था। यहां पर पुनः कथन आगे २६ वें सूत्र तक उसकी अनुवृत्ति के लिये किया गया है॥ २२॥

नोपधात् थफान्ताद्वा (१-२-२३)

नोपधात् ५।१, थफान्तात् ५।१, वा (अ०)। नोपधात् में बहुव्रीहि और थफान्तात् में द्वन्द्व गर्भ बहुव्रीहि समास है। नकार उपधा वाली और थकारान्त एवं फकारान्त धातु से परे सेट् क्त्वा प्रत्यय विकल्प से कित् नहीं होता। ग्रन्थ—ग्रथित्वा, ग्रन्थित्वा। श्रन्थ्—श्रथित्वा, श्रन्थित्वा। गुम्फ—गुफित्वा, गुम्फित्वा। कित् पक्ष में अनुनासिक वर्ण नकार-मकार का लोप हुआ तथा अकित् पक्ष में अनुनासिक लोप नहीं हुआ॥ २३॥

वञ्चिलुञ्च्यृतश्च (१-२-२४)

वञ्चिलुञ्च्यृतः ५।१। च (अ०)। वञ्चि० इत्यादि में समा० द्वन्द्व

तस्मात् (समाहारद्वन्द्वः)। वञ्चिलुञ्चि-ऋद्भ्यो धातुभ्यः परः सेट्क्त्वाप्रत्ययः वा किन्न भवति। वञ्चु=(गतौ प्रलम्भने च)-वचित्वा, वञ्चित्वा। लुञ्च=(अपनयने) लुचित्वा, लुञ्चित्वा। ऋतिः—(घृणायां, सौत्रो धातुः)-ऋतित्वा, अर्तित्वा, क्त्विपक्षे पूर्ववदनुनासिकलोपो गुणाभावश्च।

### तृषिमृषिकृशेः काश्यपस्य (१-२-२५)

तृषिश्च मृषिश्च कृशिश्च तृषिमृषिकृशि, तस्मात् (समाहारद्वन्द्वः)। तृषिमृषिकृशेःपरः सेट्क्त्वाप्रत्ययः किन्न भवति काश्यपस्याचार्यस्य मतेन ञितृषा=(पिपासायाम्)-तृषित्वा, तर्षित्वा। मृषु=(सेचने सहने च भ्वादिः, तितिक्षायां, दिवादिश्चुरादिश्च)-मृषित्वा, मर्षित्वा। कृश=(तनूकरणे)-कृशित्वा, कर्शित्वा। वेत्यनुवर्त्तमाने काश्यपग्रहणं पूजार्थम्।

### रलो व्युपधाद्धलादेः संश्च (१-२-२६)

रलः। व्युपधात्। हलादेः। सन्। च उश्च इश्च वी (इतरेतरद्वन्द्वः)। वी उपधे यस्य स व्युपधस्तस्मात् (बहुव्रीहिः)। हलादिर्यस्य स हलादिस्तस्मात् (बहुव्रीहिः)। उकारोपधादिकारोपधाच्च रलन्ताद्धातोर्हलादेः परौ सेटौ सन्क्त्वा-

---

समास है। वञ्च्, लुञ्च् और ऋत् धातु से परे सेट् क्त्वा प्रत्यय विकल्प से कित् नहीं होता। वञ्च्—वचित्वा, वञ्चित्वा। लुञ्च्—लुचित्वा, लुञ्चित्वा। ऋति (घृणार्थक सौत्र धातु)—ऋतित्वा, अर्तित्वा। कित्पक्ष में अनुनासिक लोप तथा अंगगुणाभाव हुआ॥ २४॥

### तृषिमृषिकृशेः काश्यपस्य (१-२-२५)

तृषिमृषिकृशेः ५।१। काश्यपस्य ६।१। तृषिमृषिकृशेः में समा० द्वन्द्व समास है। तृष्, मृष् और कृश् धातुओं से परे सेट् क्त्वा प्रत्यय कित् नहीं होता काश्यप आचार्य के मत में। तृष्—तृषित्वा, तर्षित्वा। मृष्—मृषित्वा, मर्षित्वा। कृश्—कृशित्वा, कर्शित्वा। कित् पक्ष में उपधा गुण प्रतिषेध और अकित् पक्ष में अंग गुण हो गया। 'वा' की अनुवृत्ति होते हुए काश्यप का नाम लेना आदरार्थक है॥ २५॥

### रलो व्युपधाद्धलादेः संश्च (१-२-२६)

रलः ५।१। व्युपधात् ५।१। हलादेः ५।१। सन् १।१। च (अ०)। व्युपधात् में द्वन्द्व गर्भ बहुव्रीहि है, और हलादेः में बहुव्रीहि है। उकार उपधा वाली और इकार उपधा वाली रल् प्रत्याहारान्त धातु से परे सेट्

प्रत्ययौ वा कितौ भवतः। द्युत्=(दीप्तौ) द्युतित्वा, द्योतित्वा। लिख्=(विलेखने)-लिखित्वा लेखित्वा। दिद्युतिषते, दिद्योतिषते। लिलिखिषति, लिलेखिषति। दिद्युतिषते इति सन्नन्तस्य 'सन्यङोः' (६-१-९) इति द्वित्वे कृते 'द्युतिस्वाप्योः सम्प्रसारणम्' (७-४-६७) इत्यभ्यासस्य सम्प्रसारणं 'सम्प्रसारणाच्च' (६-१-१०४) इति पूर्वरूपकैकादेशः।

## ऊकालोऽज्झ्रस्वदीर्घप्लुतः (१-२-२७) -२१, -२८

ऊकालः। अच्। ह्रस्वदीर्घप्लुतः। उकालश्च, ऊकालश्च ऊ३कालश्च-ऊकालाः। उवर्णस्य सवर्णदीर्घत्वं कालशब्दस्यैकशेषश्च। ऊकाला इव कालाः यस्य स ऊकालः (मध्यमपदलोपी-बहुव्रीहिः)। ह्रस्वश्च दीर्घश्च प्लुतश्च ह्रस्वदीर्घप्लुतः (समाहारद्वन्द्वः)। 'छन्दोवत्सूत्राणि भवन्ति' इति छान्दसविधेर्बहुलत्वान्नपुंसकत्वाभावः। यद्वेतरेतरद्वन्द्वोऽयं तत्र 'सुपां सुलुक्०' (७-१-३९) इति जसः स्थाने सुः। उ ऊ ऊ३=(मात्रिक-द्विमात्रिक-त्रिमात्रिकः) इत्येवंकालोऽज् यथाक्रमं ह्रस्वदीर्घप्लुतसंज्ञो भवति। दधि, मधु इति ह्रस्वः। कुमारी, गौरी इति दीर्घः। देवदत्त ३ अत्र न्वसि इति प्लुतः। ह्रस्वदीर्घयो रूपोदाहरणानि। प्लुतस्य पुनः कार्योदाहरणम्। अनन्त्यस्यापि प्रश्नाख्यानयोः। (८-२-१०५) इति टेः प्लुतः।

---

सन् और क्त्वा प्रत्यय विकल्प से कित् होते हैं। क्त्वा में, द्युत्—द्युतित्वा, द्योतित्वा। लिख्—लिखित्वा, लेखित्वा। सन् में दिद्युतिषते, दिद्योतिषते। लिलिखिषति, लिलेखिषति। दोनों पक्षों में गुणाभाव और गुण का होना फल है॥ २६॥

## ऊकालोऽज्झ्रस्वदीर्घप्लुतः (१-२-२७)

ऊकालः १।१। अच् १।१। ह्रस्व दीर्घ प्लुतः १।१। ऊकाल में द्वन्द्व गर्भ बहुव्रीहि और ह्रस्व दीर्घ प्लुतः में द्वन्द्व समास है। उ, ऊ, ऊ ३ ये क्रमशः एकमात्रिक, द्विमात्रिक और त्रिमात्रिक उवर्ण के उदाहरण हैं; इनके समान जो कोई भी अच् (स्वर) हो, वह क्रमशः ह्रस्व, दीर्घ और प्लुत संज्ञक होता है। यथा—दधि, मधु ये ह्रस्वस्वरान्त हैं, कुमारी, गौरी ये दीर्घ स्वरान्त और देवदत्त ३ यह प्लुत स्वरान्त पद हैं॥ २७॥

## अचश्च (१-२-२८)

अचः । च । ह्रस्वदीर्घप्लुताः स्वसंज्ञया शिष्यमाणा अच एव स्थाने भवन्ति[1] । रैं रायमतिक्रान्तम् अतिरि । नौ अतिनु । गो उपगु । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१-२-४७) इत्यैकारादेरच एव स्थाने स्थानसाम्याद्ध्रस्वेकारादिर्भवति । चीयते । श्रूयते । 'अकृत्सार्वधातुकयोर्दीर्घः' (७-४-२५) इति इवर्णोवर्णयोरेव दीर्घः । देवदत्त ३ । यज्ञदत्त ३ । 'वाक्यस्य टेः प्लुत उदात्तः' (७-२-८२) इति टेः प्लुतोदात्तोऽकारस्याच एव भवति ।

## उच्चैरुदात्तः (१-२-२९)

उच्चैः । उदात्तः । ताल्वादिस्थानेषु समाने स्थाने ऊर्ध्वभागनिष्पन्नोऽज् उदात्तसंज्ञो भवति । 'आयामो (निग्रहो गात्राणाम्) दारुण्यम् (रूक्षता-अस्निग्धता स्वरस्य) अणुता खस्य (संवृतता कण्ठविवरस्य) इत्युच्चैःकराणि शब्दस्य[2] ।' ये । ते । के । यत् तत् किम्-इत्येतेषां विभक्तेः प्राक् 'फिषोऽन्तोदात्तः'[3] इत्य-

---

### अचश्च (१-२-२८)

अच: ६।१ । च (अ०) । इस व्याकरण शास्त्र में ह्रस्व, दीर्घ और प्लुत संज्ञा से जब किसी आदेश का विधान होता है तो वह 'अच्' (९ स्वरों) के स्थान में ही होता है (किसी व्यंजन के स्थान में नहीं) । जैसे 'रैं' (धन) को अतिक्रान्त करने वाला कुल अतिरि; नौ (नाव) को अतिक्रान्त करने वाला अतिनु और गौ के समीप रहने वाला उपगु कहा जाता है । यहाँ सर्वत्र 'ह्रस्वो नपुंसके प्रातिपदिकस्प' से विधीयमान ह्रस्व उस उस अच् स्वर (ऐ, औ, ओ) को ही हुआ (व्यंजन वर्ण को नहीं) । इसी प्रकार चीयते, श्रूयते में इकार-उकार को दीर्घ तथा देवदत्त ३, यज्ञदत्त ३ में अ को प्लुत वृत्युक्त विविध सूत्रों से हुआ ।। २८ ।।

### उच्चैरुदात्तः (१-२-२९)

उच्चै: (अ०) । उदात्त: १।१ । मुख के भीतर जो वर्णोच्चारण के लिए तालु-कण्ठादि स्थान हैं, उनमें समान स्थान में ऊपरी भाग से उच्चरित होने वाला स्वर उदात्त संज्ञक होता है । ये । ते । के । ये तीनों पद उदात्त

---

१. यत्र ह्रस्वो यत्र दीर्घो यत्र च प्लुतो विधीयते तत्र तत्राच इति षष्ठ्यन्त पदमुपतिष्ठते इति तात्पर्यम् ।

२. महाभाष्यम् (१-२-२९) ।

३. फिट्सूत्रम् १।१ ।

न्तोदात्तत्वम् । जसः 'अनुदात्तौ सुप्पितौ' (३-१-४) इत्यनुदात्तत्वात् तस्य 'शी' आदेशस्यापि स्थानिवद्भावदनुदात्तत्वम् । तत 'एकादेश उदात्तेनोदात्तः' (८-२-५) इत्येकादेश एकार उदात्तः ।

## नीचैरनुदात्तः (१-२-३०)

नीचैः । अनुदात्तः । समाने स्थाने नीचैरुपलभ्यमानोऽधोभागनिष्पन्नोऽज् अनुदात्तसंज्ञो भवति । 'अन्ववसर्गः' (शिथिलता गात्राणाम्) मार्दवम् (स्वरस्य मृदुता स्निग्धता) उरुता खस्य (महत्ता कण्ठविवरस्य) इति नीचैःकराणि शब्दस्य[1] । त्व । सम । सिम । नेम । नमस्ते रुद्र नीलकण्ठ सहस्राक्ष । 'त्व समसिमनेमेत्यनुच्चानि' इति फिट्सूत्रेणानुदात्तानि । 'नमस्ते' इत्यत्र 'तेमयावेकवचनस्य' (८-१-२२) युष्मदस्त इत्यादेशः स चानुदात्तः । 'रुद्र' इत्याद्यामन्त्रितपदानाम् 'आमन्त्रितस्य च' (८-१-१९) इति सर्वानुदात्तत्वम् । तत ऐकश्रुत्यम् ।

## समाहारः स्वरितः (१-२-३१)

उदात्तानुदात्तस्वरस्य समाहारो यस्मिन्नचि स स्वरितसंज्ञो भवति । शिक्यम् । कन्या । सामन्यः । क्व । 'इनसेः शि कुट् किच्च' (उ०सू० ५।६६४)

---

एकारान्त हैं । उदात्त स्वर पर कोई स्वर चिह्न नहीं लगाया जाता । उदात्तत्व हेतु वृत्ति में दिया गया है । विस्तारभय से यहाँ पर उसे नहीं दिया जा रहा है । अतः मूल से जिज्ञासा निवृत्ति कर लें ।। २९ ।।

## नीचैरनुदात्तः (१-२-३०)

नीचैः (अ०) । अनुदात्तः १।१ । समान स्थान में जो निम्न भाग से ताल्वादि स्थानों में निष्पन्न होने वाला अच् होता है, वह अनुदात्त संज्ञक होता है । त्व । सम । सिम । नेम । नमस्ते रुद्र नीलकण्ठ सहस्राक्ष । अनुदात्त स्वर के लिए नीचे से तिरछी रेखा स्वर चिह्न के रूप में लगाई जाती है । त्व, सम, सिम, नेम इन अव्यय पदों में त्व सम० इत्यनुच्चानि' इस फिट् सूत्र से सर्वानुदात्त हुआ है । 'नमस्ते०' इत्यादि में 'तेमयावेकवचनस्य' और 'आमन्त्रितस्य च' से सर्वानुदात्त और तब ३९वें सूत्र से एकश्रुति हुयी है ।। ३० ।।

## समाहारः स्वरितः (१-२-३१)

समाहारः १।१ । स्वरितः १।१ । उदात्त और अनुदात्त स्वर का समाहार (मिश्रण) जिस अच् में हो, वह स्वरितसंज्ञक होता है । शिक्यम् ।

---

१. महाभाष्यम् (१-२-३०) ।

इति यत्प्रत्यये शिक्यमिति रूपम् । 'तित्स्वरितम्' (६-१-१८५) इति यकारोत्तरवर्तिनोऽकारस्य स्वरितत्वम् । तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्य-मनुष्याणामन्तः' (फिट् सू० ४।७६) इति कन्याशब्दोऽन्तस्वरितः । 'तत्र साधुः' (४-४-९८) इति सामशब्दाद्यत्प्रत्ययः । तित्वादेवान्तस्वरितः । 'किमोऽत्' (५-३-१२) इति किम् शब्दाद् अत्प्रत्ययः 'क्वाति' (७-२-१०५) इति च क्वादेशः । तित्वादेवस्वरितत्वम् । 'अनुदात्तं पदमेकवर्जम्' (६-१-१५८) इति सर्वत्र शिष्टानुदात्तत्वम् ।

### तस्यादित उदात्तमर्धह्रस्वम् (१-२ ३२)

तस्य । आदितः । उदात्तम् । अर्धह्रस्वम् । अर्धंह्रस्वस्य=अर्धह्रस्वम् । 'अर्धं नपुंसकम्' (२-२-२) इति तत्पुरुषसमासः । तस्य स्वरितस्यादावर्धह्रस्वम् । (अर्धमात्रम्) उदात्तं भवति, अवशिष्टमनुदात्तम् । शिक्यम् । कन्या । माणवक३ माणवक । सर्वत्रेह स्वरिते पूर्वार्द्धमात्रा उदात्ता, उत्तरा क्रमेण अर्द्धा, अध्यर्धा, अर्द्धतृतीया च अनुदात्तस्य ।

### एकश्रुति दूरात् सम्बुद्धौ (१-२-३३) -३९

एकश्रुति । दूरात् । सम्बुद्धौ । भावसाधनोऽत्र श्रुतिशब्दः श्रवणं श्रुतिरिति । एका श्रुतिर्यस्य (स्वरस्य) स एक श्रुतिः (बहुव्रीहिः) । 'सुपां सुलुक्०'

---

कन्या । सामन्यः । क्व । स्वरित स्वर की पहचान ऊपर से खड़ी रेखा होती है । इन उदाहरणों में स्वरितादिस्वरों की सिद्धि संस्कृत वृत्ति से ज्ञात कर लें । लेख-विस्तार के भय से यहाँ उसे नहीं लिखा जा रहा है ।। ३१ ।।

### तस्यादित उदात्तमर्द्धह्रस्वम् (१-२-३२)

तस्य ६।१ । आदितः ५।१ । उदात्तम् १।१ । अर्द्धह्रस्वम् १।१ । अर्धह्रस्वम् में तत्पुरुष समास है । उस स्वरित के आरम्भ की आधी (ह्रस्व) मात्रा उदात्त होती है और अवशिष्ट मात्रा अनुदात्त । शिक्यम् । कन्या । माणवक३माणवक । यहाँ स्वरित स्वरों अ, आ तथा अ ३ में पूर्व की आधी ह्रस्व मात्रा उदात्त है ।। ३२ ।।

### एकश्रुति दूरात् सम्बुद्धौ (१-२-३३)

एकश्रुति १।१ । दूरात् ५।१ । सम्बुद्धौ ७।१ । एकश्रुति में बहुव्रीहि समास है । एकश्रुति से तात्पर्य एक समान श्रवण से है । दूर से किसी को

(७-१-३९) इति विभक्तिलुक्। सम्बोधनं सम्यग्ज्ञापनं सम्बुद्धिरित्यकृत्रिमस्य ग्रहणम्। दूरात सम्बोधने आह्वाने सत्युदात्तानुदात्तस्वरितानामेकश्रुतिर्भवति। आगच्छ भो माणबक देवदत्त ३। अत्रोदात्तानुदात्तस्वरितानां पृथक्-पृथक् श्रवणं न भवति।

### यज्ञकर्मण्यजपन्यूङ्खसामसु (१-२-३४) -३५

यज्ञकर्मणि। अजपन्यूङ्खसामसु। यज्ञस्य कर्म यज्ञकर्म तस्मिन् (ष० त०)। जपश्च न्यूङ्खश्च साम च जपन्यूङ्खसामानि (इतरेतरद्वन्द्वः)। न जपन्यूङ्खसामानि अजपन्यूङ्खसामानि तेषु (न० त०)। यज्ञकर्मणि मन्त्राणामेकश्रुत्यं भवति जपन्यूङ्खसामानि वर्जयित्वा। 'अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतो३म्' (यजु० ३।१२)। यज्ञकर्मणि विनियुक्तेऽस्मिन् मन्त्रे एकश्रुतिर्जायते।

### उच्चैस्तरां वा वषट्कार (१-२ ३५)

यज्ञकर्मणि वषट्कारो मन्त्र उच्चैस्तराम् =उदात्ततरो भवति विकल्पेन,

---

बुलाने में एकश्रुति होती है, अर्थात् उदात्त, अनुदात्त, स्वरित स्वरों का पृथक्-पृथक् श्रवण नहीं होता। आगच्छ भो माणवक देवदत्त ३। यहाँ प्रतिपद या प्रतिवर्ण प्राप्त स्वर मिश्रित से होकर एकश्रुति कहलाये ॥ ३३ ॥

### यज्ञकर्मण्यजपन्यूङ्खसामसु (१-२-३४)

यज्ञकर्मणि ७।१। अजपन्यूङ्खसामसु ७।३। यज्ञकर्मणि में षष्ठी-तत्पुरुष तथा अजप० इत्यादि में द्वन्द्वगर्भनञ्तत्पुरुष समास है। यज्ञकर्म में मन्त्रों की एकश्रुति होती है जप-न्यूङ्ख-साम को छोड़कर। 'अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतो३म्' ॥ (यजुर्वेद ३।१२) यह मन्त्र यज्ञकर्म में विनियुक्त होने पर एकश्रुति में पढ़ा जाता है। जप= उपांशु प्रयोग (मुख के भीतर ही किया जाने वाला उच्चारण) है। न्यूङ्ख सोलह या छः ओकार हैं, जो उदात्त-अनुदात्त-भेद-भिन्न हैं। और साम मन्त्रों का विशेष गान हैं। इनमें एक श्रुति नहीं होती ॥ ३४ ॥

### उच्चैस्तरां वा वषट्कारः (१-२-३५)

उच्चैस्तराम् (अ०)। वा (अ०)। वषट्कारः १।१। यज्ञकर्म में वषट्कार मन्त्र विकल्प से उच्चैस्तर अर्थात् उदात्ततर होता है; पक्ष में एक-

पक्षे एकश्रुतिर्भवति । वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते । सोमस्याग्ने वीही-३वौ३षट् । सोमस्याग्ने वीही३वौ३षट् ।

### विभाषा छन्दसि (१ २-३६)

छन्दसि विषये विकल्पेनैकश्रुतिर्भवति, पक्षान्तरे त्रैस्वर्यमेव । वेति प्रकृते विभाषेतिग्रहणं यज्ञकर्मणीत्यस्य निवृत्त्यर्थम् । तेनायं स्वाध्यायकालेऽपि पाक्षिक ऐकश्रुत्यविधिर्भवति । अग्निमीडे पुरोहितम्० (ऋ० १-१-१), इषे त्वोर्जे त्वा० (यजु० १।१), अग्न आयाहि वीतये० (साम० १-१-१), शन्नो देवीरभिष्टये० (अथर्व० १।१।१) ।

### न सुब्रह्मण्यायां स्वरितस्य तूदात्तः (१-२-३७) -३८

न । सुब्रह्मण्यायाम् । स्वरितस्य । तु । उदात्तः । सुब्रह्मण्या नाम निगदस्तत्रैकश्रुतिर्नभवति किन्तु लक्षणप्राप्तस्य स्वरितस्योदात्तादेशो भवति । सुब्रह्मण्यो३मिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार कौशिक ब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन्

---

श्रुति होती है । 'वौषट्' को वषट्कार कहा गया है । सोमस्याग्ने वीही ३वौ ३षट् । सोमस्याग्ने वीही३वौ३षट् ।। ३५ ।।

### विभाषा छन्दसि (१-२-३६)

विभाषा १।१ । छन्दसि ७।१ । छन्दोविषय अर्थात् वेदों के अध्ययन-स्वाध्याय-काल में विकल्प से एकश्रुति होती है । 'वा' की अनुवृत्ति से ही कार्य हो सकता था तो विभाषा क्यों पढ़ा ? इसका समाधान यह है कि ऐसा करके 'यज्ञकर्मणि' प्रसंग की निवृत्ति अभिलषित की गई है । अग्निमीडे पुरोहितम्० । इषे त्वोर्ज्जे त्वा० । अग्न आयाहि वीतये० । शन्नो देवीरभिष्टये० । ये क्रमशः ऋग्वेद, यजुर्वेद, सामवेद तथा अथर्ववेद के आदिम मन्त्र हैं । पक्ष में त्रैस्वर्य भी होता है ।। ३६ ।।

### न सुब्रह्मण्यायां स्वरितस्य तूदात्तः (१-२-३७)

न (अ०) । सुब्रह्मण्यायाम् ७।१ । स्वरितस्य ६।१ । तु (अ०) । उदात्तः १।१ । सुब्रह्मण्या नाम का वैदिक वाङ्मय का पाठ निगद कहा जाता है । उसमें एकश्रुति नहीं होती, किन्तु स्वरित स्वर ही उदात्त आदेश होता है । सुब्रह्मण्यो३मिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने

(शतपथ ब्रा० ३।३।४।१७)। अत्रोमित्योकारस्तित्स्वरेण स्वरितस्तस्योदात्तो विधीयते। इन्द्र आगच्छेत्यामन्त्रितमाद्युदात्तं द्वितीयो वर्णोऽनुदात्तः। 'उदात्तादनुदात्तस्य स्वरितः (८-४-६६) इति स्वरितः प्रसक्तस्तस्यानेनोदात्तः क्रियते। आगच्छेत्याकारः फिट्स्वरेणोदात्तः। ततः 'तिङ्ङतिङः'(८-१-२८) इति परोऽनुदात्तः। स च स्वरितो जातस्तस्यानेनोदात्तत्वं क्रियते। तदेवमिन्द्र आगच्छेति चत्वार उदात्ताः। हरिव आगच्छेत्यनेनैव प्रकारेण चत्वार उदात्ता द्वावनुदात्तौ। मेधातिथेरिति 'सुबामन्त्रिते पराङ्गवत्स्वरे' (२-१-२) इति पराङ्गवद्भावादामन्त्रिताद्युदात्तो 'मे' इति। धा' इत्येतस्यानुदात्तत्वे स्वरितत्वे च प्राप्तेऽनेनोदात्तत्वम्। शिष्टमनुदात्तम्। वृषणश्वस्य मेन इति पूर्ववदेवाद्यौ वर्णावुदात्तौ। 'गौरावस्कन्दन्' इत्यपि तथैव। अहल्यायै जारेत्यत्रापि द्वावुदात्तौ शिष्टमनुदात्तम्। कौशिकब्राह्मणेति चामन्त्रिताद्युदात्तस्तत्परश्च वर्ण उदात्तः। गौतमब्रुवाण इत्यपि तथैव। श्व इत्याद्युदात्तः। सुत्यामिति 'संज्ञायां समज०' (३-३-९९) इति क्यपो विधानेऽन्तोदात्तः। 'सु' इत्येतस्यानुदात्तत्वे जाते 'उदात्तादनुदात्तस्य स्वरितः' (८-४-६५) इति प्राप्तस्य स्वरितस्योदात्तविधानम्। आगच्छेति द्वावुदात्तावन्त्योऽनुदात्तः। मघवन्निति पदात् परमामन्त्रितं निहन्यते, 'आमन्त्रितस्य च' (८-१-१९) इत्यनेन।

## देवब्रह्मणोरनुदात्तः (१-२-३८)

देवब्रह्मणोः। अनुदात्तः। देवश्च ब्रह्मा च देवब्रह्मणौ तयोः (इतरेतरद्वन्द्वः)। सुब्रह्मण्यायां पठितयोर्देवब्रह्मणोः स्वरितस्यानुदात्त आदेशो भवति।

---

गौरावस्कन्दिन्नहल्यायै जार कौशिक ब्राह्मण गौतमब्रुवाणा श्वः सुत्यामागच्छ मघवन् (श० ब्रा०)। यहाँ ओम्, इन्द्र, इत्यादि में ओकार और अकार आदि स्वरित थे, उन्हें उदात्त पढ़ा जाता है। अतः उन पर कोई स्वर चिह्न भी नहीं है। प्रत्येक ऐसे पद का विवरण मूल वृत्ति में दिया गया है। उसे देखें॥ ३७॥

## देवब्रह्मणोरनुदात्तः (१-२-३८)

देवब्रह्मणोः ७।२। अनुदात्तः १।१। देवब्रह्मणोः में इ० द्वन्द्व समास है। सुब्रह्मण्या में पढ़े गये देव और ब्रह्मन् शब्दों के स्वरित को अनुदात्त आदेश होता है। देवा ब्रह्माण आगच्छत। यहाँ पर देवाः और ब्रह्माणः दोनों सम्बोधन पद हैं। दोनों को आमन्त्रिताद्युदात्त होता है। पुनः शेष भाग को

देवा ब्रह्माण आगच्छत । द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेषनिघाते चोदात्तादनुदात्तस्य स्वरितः कृतस्तस्यानेनानुदात्तः क्रियते ।

### स्वरितात्संहितायामनुदात्तानाम् (१-२-३९) -४०

स्वरितात् । संहितायाम् । अनुदात्तानाम् । संहितायां विषये स्वरितात्परेषामनुदात्तानामेकश्रुतिर्भवति । इमं मे' गङ्गे यमुने सरस्वति शुतुद्रि (ऋ० १०-७५-५) । माणवक जटिलकाध्यापक । क्व गमिष्यसि । इममिति 'एकादेश उदात्तेनोदात्तः' (८-२-५) इत्यन्तोदात्तः, शेषोऽनुदात्तः । 'मे' इति 'ते मयावेकवचनस्य' (८-१-२२) इति 'मे' आदेशोऽनुदात्तः । तस्य 'उदात्तादनुदात्तस्य स्वरितः (८-४-६५) इति स्वरिते कृतेऽग्रेस्थानामामन्त्रितपदानाम् 'आमन्त्रिस्य च' (८-१-१९) इति निघातादेशे सति प्रकृतसूत्रेणैकश्रुतिर्विधीयते । माणवक जटिलकाध्यापकेति 'आमन्त्रितस्य च' (६-१-१९८) इत्याद्युदात्तत्वात् शेषनिघाते स्वरितत्वे चैकश्रुतिः । क्व गमिष्यसि । इहापि स्वरितादुत्तरस्य 'तिङ्ङतिङः' (८-१-२८) इति जातस्य निघातस्यैकश्रुत्यम् ।

### उदात्तस्वरितपरस्य सन्नतरः (१-२-४०)

उदात्तस्वरितपरस्य । सन्नतरः । उदात्तश्च स्वरितश्च उदात्तस्वरितौ

---

'अनुदात्तं पदमेकवर्जम्' से अनुदात्त होकर 'उदात्तादनुदात्तस्य स्वरितः' से स्वरित आदेश हुआ । पुनः उसी स्वरित को प्रकृतसूत्र से अनुदात्त आदेश विधान किया गया है ।। ३८ ।।

**स्वरितात् संहितायामनुदात्तानाम् (१-२-३९)**

स्वरितात् ५।१ । संहितायाम् ७।१ । अनुदात्तानाम् ६।३ । संहिता विषय में स्वरित से परे अनुदात्तों की एकश्रुति होती है । इमं मे गङ्गे यमुने सरस्वति शुतुद्रि । माणवक जटिलकाध्यापक । क्व गमिष्यसि । इन तीनों ही उदाहरणों में क्रमशः 'मे', 'ण', 'क्व' में स्वरित स्वर है, और उनके आगे के अनुदात्त स्वरों को एकश्रुति से उच्चरित किया जाने का विधान प्रकृत सूत्र करता है । अर्थात् ऐसे अनुदात्तों का पृथक्-पृथक् (अनुदात्त रूप में) उच्चारण न होकर समान रूप से एकश्रुति में उच्चारण होता है ।। ३९ ।।

**उदात्तस्वरितपरस्य सन्नतरः (१-२-४०)**

उदात्तस्वरितपरस्य ६।१ । सन्नतरः १।१ । उदात्तस्वरितपरस्य में

तौ परौ यस्मात् स उदात्तस्वरितपरस्तस्य (द्वन्द्वगर्भबहुव्रीहिः)। उदात्तपरस्य स्वरितपरस्य चानुदात्तस्य सन्नतरोऽनुदात्ततर आदेशो भवति। देवा मरुतः पृश्निमातरोऽपः। मातर इत्यनुदात्तः। अप इत्यन्तोदात्तः। तयोरेकादेश ओकारोऽनुदात्तः। तस्योदात्ते परभूते सन्नतर आदेशो भवति। इमं मे गङ्गे यमुने सरस्वति शुतुद्रि। सरस्वतिशब्दस्येकारोऽनुदात्तः। शुतुद्रिशब्दश्च षाष्ठिकामन्त्रितत्वादाद्युदात्तः, तस्मिन् परभूते पूर्वस्यानुदात्ततर आदेशः। माणवक जटिलकाध्यापक क्व गमिष्यसि। क्वेति स्वरितस्तस्मिन् परभूते पूर्वस्यानुदात्ततर आदेशः।

### अपृक्त एकाल्प्रत्ययः (१-२-४१)

अपृक्तः। एकाल्। प्रत्ययः। एकोऽल् यस्मिन् स एकाल् (बहुव्रीहिः)। एकाल् प्रत्ययोऽपृक्तसंज्ञो भवति। घृतस्पृक्। घृतं स्पृशतीत्यस्मिन्नर्थे स्पृशधातोः 'स्पृशोऽनुदके क्विन्' (३-२-५८) इति क्विन्प्रत्यये कृतेऽनुबन्धलोपे प्रकृतसूत्रेण वकारस्यापृक्तसंज्ञायां 'वेरपृक्तस्य' (६-१-६७) इति वकारलोपे 'क्विन्प्रत्ययस्य कुः' (८-२-६२) इति कुत्वे च रूपम्। अर्द्धभाक्। पादभाक्।

---

द्वन्द्व गर्भ बहुव्रीहि है। ऐसा अनुदात्त जिसके परे उदात्त या स्वरित हो, उसको सन्नतर अर्थात् अनुदात्ततर आदेश होता है, संहिता विषय में। देवा मरुतः पृश्निमातरोऽपः। इयं मे गङ्गे यमुने सरस्वति शुतुद्रि। माणवक जटिलकाध्यापक क्व गमिष्यसि। इन उदाहरणों में अनुदात्त 'रो' के परे, 'ति' के परे और अध्यापक के 'क' के परे 'पः' और 'शु' उदात्त स्वर तथा 'क्व' स्वरित स्वर है अतः 'रो', 'ति' 'क' के अनुदात्त स्वरों को सन्नतर = अनुदात्ततर (अधिक अनुदात्त) आदेश हो जाता है॥ ४०॥

### अपृक्त एकाल्प्रत्ययः (१-२-४१)

अपृक्तः १।१। एकाल् १।१। प्रत्ययः १।१। एकाल् में बहुव्रीहि समास है। एक अल् जिसमें हो, ऐसा प्रत्यय अपृक्तसंज्ञक होता है। घृतस्पृक्। इस उदाहरण में कर्मोपपद घृत शब्द के रहते स्पृश् धातु से 'क्विन्' प्रत्यय हुआ है। यहाँ पर ककार, इकार और नकार की इत्संज्ञा होने पर अकेला वकार शेष रह जाता है। उसकी प्रकृत सूत्र से अपृक्त संज्ञा होने पर 'वेरपृक्तस्य' से उसका भी लोप हो जाता है। इसी प्रकार अर्द्धभाक्, पाद-

अर्द्धोपपदात् पादोपपदाच्च भजधातोः 'भजो ण्विः' (३-२-६२) इति ण्विप्रत्यये कृते पूर्ववद्वकारस्यापृक्तसंज्ञायां लोपे 'अत उपधायाः (७-२-११६) इत्युपधावृद्धौ सौ 'चोः कुः' (८-२-३०) इति कुत्वे च रूपम् । अपृक्त इत्यन्वर्थसंज्ञा न संपृक्त एकल इत्यर्थः ।

### तत्पुरुषः समानाधिकरणः कर्मधारयः (१-२-४२)

समानमाधिकरणं यस्य स समानाधिकरणः (बहुव्रीहिः) । समानाधिकरणस्तत्पुरुषः समासः कर्मधारयसंज्ञो भवति । परमराज्यम् । उत्तमराज्यम् । परमं च तद्राज्यं च, उत्तमं च तद्राज्यं चेति विग्रहे 'सन्महत्परमोत्कृष्टाः पूज्यमानैः (२-१-६१) इति समासे कृते 'अकर्मधारये राज्यम्' (६-२-१३०) इत्युत्तरपदाद्युदात्तं न भवति । समासान्तोदात्तत्वं शिष्टानुदात्तत्वं च भवति । पाचकवृन्दारिका । पाचिकाचासौ वृन्दारिका चेत्यत्र 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' (२-१-६२) इति तत्पुरुषसमासे कृते प्रकृतसूत्रेण कर्मधारयसंज्ञायां 'पुंवत्कर्मधारयजातीयदेशीयेषु' (६-३-४०) इति पुंवद्भावो भवति ।

### प्रथमानिर्दिष्टं समास उपसर्जनम् (१-२-४३)　　　-४४

प्रथमानिर्दिष्टम् । समासे । उपसर्जनम् । प्रथमया (विभक्त्या) निर्दिष्टं

---

भाक् । इन उदाहरणों में अर्द्ध और पाद शब्दों के उपपद रहते भजधातु से 'ण्वि' प्रत्यय हुआ है । ण्वि में भी णकार और इकार की इत्संज्ञा होने पर शेष वकार रहता है, जिसकी अपृक्तसंज्ञा होने पर बाद में लोप हो जाया करता है ॥

**तत्पुरुषः समानाधिकरणः कर्मधारयः (१-२-४२)**

तत्पुरुषः १।१ । समानाधिकरणः १।१ । कर्मधारयः १।१ । समानाधिकरण में बहुव्रीहि समास है । समानाधिकरण तत्पुरुष समास की कर्मधारय संज्ञा होती है । परमराज्यम् । उत्तमराज्यम् । पाचकवृन्दारिका । परम (श्रेष्ठ) जो राज्य वह परमराज्य तथा उत्तम जो राज्य वह उत्तम राज्य कहलाता है । इनकी कर्मधारय संज्ञा होने से उत्तर पद को आद्युदात्त नहीं होने पाया । जो पकाने वाली वृन्दारिका (अच्छी) हो वह पाचकवृन्दारिका कहलाती है । कर्मधारय समास होने से पाचक (पूर्वपद) में पुंवद्भाव हो गया ॥ ४२ ॥

**प्रथमानिर्दिष्टं समास उपसर्जनम् (१-२-४३)**

प्रथमानिर्दिष्टम् १।१ । समासे ७।१ । उपसर्जनम् १।१ । 'प्रथमा-

प्रथमानिर्दिष्टम् (तृ०त०) समास इति समासविधायकसूत्रं गृह्यते। तत्र प्रथमया विभक्त्या निर्दिश्यमानपदमुपसर्जनसंज्ञं भवति। कष्टश्रितः। शङ्कुलाखण्डः। यूपदारु। वृकभयम्। राजपुरुषः। अक्षशौण्डः। कष्टंश्रित इति लौकिकविग्रहः। कष्ट+अम्। श्रित+सु इत्यलौकिकविग्रहः। तत्र 'द्वितीया श्रितातीत०' (२-१-२४) इति तत्पुरुषसमासे द्वितीयाशब्दः (तदन्तः कष्टशब्दः) प्रथमानिर्दिष्टः। तस्य प्रकृतसूत्रेणोपसर्जनसंज्ञायां सत्याम् 'उपसर्जनं पूर्वम्' (२-२-३०) इति पूर्वनिपातो भवति। एवं शङ्कुलया खण्डः शङ्कुलाखण्डः इति तृतीया समासे 'तृतीया तत्कृतार्थेन०' (२-१-२९) इति तृतीया, यूपाय दारु यूपदारु इति चतुर्थीसमासे 'चतुर्थी तदर्थार्थ०' (२-१-३५) इति चतुर्थी, वृकाद्भयं वृकभयम् इति पञ्चमीसमासे 'पञ्चमी भयेन' (२-१-३६) इति पञ्चमी, राज्ञः पुरुषः इति षष्ठीसमासे 'षष्ठी' (२-२-८) इति षष्ठी, अक्षेषु शौण्डः अक्षशौण्डः इति सप्तमीसमासे 'सप्तमी शौण्डैः' (२-१-३९) इति सप्तमी प्रथमानिर्दिष्टा, तदन्तं पदमुपसर्जनसंज्ञं विज्ञेयम्। अन्वर्थसंज्ञेयमप्रधानमुपसर्जनमिति।

### एकविभक्ति चापूर्वनिपाते (१-२-४४)

एकविभक्ति। च। अपूर्वनिपाते। एकविभक्तिर्यस्य तदिदमेकविभक्ति (पदम्) (बहुव्रीहिः)। पूर्वश्चासौ निपातश्चेति पूर्वनिपातः (कर्मधारयः)। न

---

निर्दिष्टम्' में तृतीया-तत्पुरुष समास है। समासशास्त्र में तृतीया विभक्ति से निर्दिष्ट किया जाने वाला पद उपसर्जन कहलाता है। ऐसे उपसर्जन संज्ञक पद का समास में पूर्वनिपात (पहले प्रयोग) होता है। जैसे कष्टंश्रितः— कष्ट को झेलने वाला पुरुष कष्टश्रितः कहा जाता है। यहाँ पर कष्टं पद द्वितीया विभक्त्यन्त है। समास करने वाला सूत्र है 'द्वितीया श्रितातीत— प्राप्तापन्नैः'। सो 'द्वितीया' शब्द प्रथमाविभक्तिक है, उससे निर्दिष्ट उक्त उदाहरण में 'कष्टम्' शब्द हुआ। उसकी प्रकृत सूत्र से उपसर्जन संज्ञा हुई तो उसका समास में पूर्वनिपात होने पर 'कष्टश्रितः' यह प्रयोग सिद्ध हुआ। इसी प्रकार तृतीया, चतुर्थी, पञ्चमी, षष्ठी और सप्तमी विभक्तियों के उदाहरण क्रमशः शङ्कुलाखण्डः, यूपदारु, वृकभयम्, राजपुरुष और अक्षशौण्डः हैं, जिनमें तृतीयान्तादि पदों की उपसर्जन संज्ञा होने से उनका पूर्वनिपात हुआ है॥ ४३॥

### एकविभक्ति चापूर्वनिपाते (१-२-४४)

एकविभक्ति १।१। च (अ०)। अपूर्वनिपाते ७।१। एकविभक्ति में बहुव्रीहि और अपूर्व० में कर्मधारयगर्भ नञ्तत्पुरुष समास है। समास विधान

पूर्वनिपातः अपूर्वनिपातस्तत्र (नञ्तत्पुरुषः) । समासे विधीयमाने यन्नियत-विभक्तिकं द्वितीये सम्बन्धिनि बहुभिर्विभक्तिभिर्युज्यमानेऽपि एकयैव विभक्त्या युज्यते तदुपसर्जनसंज्ञं भवति पूर्वनिपाताख्यमुपसर्जनकार्यं वर्जयित्वा । निष्कौशाम्बिः । निर्वाराणसिः । निष्कौशाम्बिम्, निष्कौशाम्बिना, निष्कौशाम्बये, निष्कौशाम्बेः२, निष्कौशाम्बौ, हे निष्कौशाम्बे ! 'निष्कान्तः कौशाम्ब्याः (=निष्कौशाम्बिः)' इत्येवं विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्याः' इति वार्त्तिकेन तत्पुरुषसमासे कर्त्तव्ये पूर्वपदं नानाविभक्तिकं सदपि उत्तरपदं पञ्चम्यन्तं नियतविभक्तिकमेव तिष्ठति तस्यैवात्रोपसर्जनसंज्ञा विधीयते । उपसर्जनसंज्ञायां सत्यां 'गोस्त्रियोरुपसर्जनस्य' (१-२-४८) इति ह्रस्वो भवति ।

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (१-२-४५) ४६

अर्थवद् । अधातुः । अप्रत्ययः । प्रातिपदिकम् । अर्थोऽस्यास्तीत्यर्थवद् । 'तदस्यास्त्यस्मिन्निति मतुप्' (५-२-४६) इति मतुप्प्रत्ययः । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः'(८-२-९) इति मतुपो मकारस्य वकारादेशः 'झलां जशोऽन्ते' (८-२-३९) इति तस्य दः । न धातुरधातुः । न प्रत्ययोऽप्रत्ययः (उभयत्र नञ्तत्पुरुषः) । अर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं भवति धातुप्रत्ययौ वर्जयित्वा । अभि-

---

करते समय विग्रह वाक्य में जो पद नियतविभक्ति वाला हो, उसकी भी उपसर्जन संज्ञा होती है पूर्वनिपात वाले उपसर्जन कार्य को छोड़कर । निष्कौशाम्बिः । निर्वाराणसिः । यहां पर निष्क्रान्तः कौशाम्ब्याः= निष्कौशाम्बिः । निष्क्रान्तं कौशाम्ब्याः=निष्कौशाम्बिम् । निष्क्रान्तेन कौशाम्ब्याः=निष्कौशाम्बिना । इत्यादि प्रयोगों में 'कौशाम्ब्याः' यह पञ्चम्यन्त पद नियत विभक्तिक है । इसी प्रकार निष्क्रान्तः वाराणस्याः= निर्वाराणसिः इत्यादि में भी वाराणस्याः पद नियत विभक्तिक है । इनकी प्रकृत सूत्र से उपसर्जन संज्ञा होती है, जिसका प्रयोजन, 'गोस्त्रियोरुपसर्जनस्य' से ह्रस्व हो जाना है ।। ४४ ।।

### अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (१-२-४५)

अर्थवत् १।१ । अधातुः १।१ । अप्रत्ययः १।१ । प्रातिपदिकम् १।१ । अर्थवत् शब्द मतुप्प्रत्ययान्त और अधातु तथा अप्रत्ययः शब्दों में नञ्तत्पुरुष समास है । अर्थवान् शब्द प्रातिपदिक संज्ञक होता है, धातु और प्रत्ययों को छोड़कर । डित्थः (लकड़ी का हाथी) । कपित्थः (बन्दर के बैठने का स्थान) ।

धेयवचनोऽत्रार्थशब्दः । डित्थः । कपित्थः । कुण्डम् । पीठम् । अव्युत्पन्नपक्षेऽनेन प्रातिपदिकसंज्ञा भवति । व्युत्पत्तौ तु कृदन्तत्वादेवोत्तरसूत्रेण सिद्धम् । प्रातिपदिकत्वात् 'ङ्याप्प्रातिपदिकात्', स्वौजसमौट्०' (४-१-१।२) इति स्वाद्युत्पत्तिः ।

### कृत्तद्धितसमासाश्च (१-२-४६)

कृत्तद्धितसमासाः । च । कृच्च तद्धितश्च समासश्च कृत्तद्धितसमासाः (इतरेतरद्वन्द्वः) । कृदन्तास्तद्धितान्ताः समासाश्च प्रातिपदिकसंज्ञा भवन्ति । कृदन्ताः-कारकः । हारकः । कर्त्ता । हर्त्ता । धातोर्विहितौ ण्वुल्तृच्प्रत्ययौ 'कृदतिङ्' (३-१-९३) इत्यनेन कृत्संज्ञकौ । तद्धितान्ताः, औपगवः, कापटवः । 'प्राग्दीव्यतोऽण्'(४-१-८३) 'तस्यापत्यम्' (४-१-९२) इत्यपत्यार्थे विहितोऽण्प्रत्ययस्तद्धितसंज्ञकः । समासाः राजपुरुषः, ब्राह्मणकम्बलः । 'सहसुपा' (२-१-४), 'षष्ठी' (२-२-८) इति तत्पुरुषसमासः । सर्वत्र प्रकृतसूत्रेण प्रातिपदिकसंज्ञायां सत्यां स्वादिप्रत्ययोत्पत्तिर्भवति समासे विभक्तिलुक्च ।

### ह्रस्वो नपुंसके प्रातिपदिकस्य (१-२-४७) -४८

ह्रस्वः । नपुंसके । प्रातिपदिकस्य । नपुंसकलिङ्गेऽर्थे वर्त्तमानस्याजन्तस्य

---

कुण्डम् । पीठम् (चौकी) । यह अव्युत्पन्नपक्ष में प्रतिपदिक संज्ञा का विधान है । व्युत्पन्न पक्ष में आगामी १।२।४६ वें सूत्र से प्रातिपदिक संज्ञा विहित है । प्रातिपदिक संज्ञा करने का प्रयोजन सु-ओ-जस् इत्यादि प्रत्ययों की उत्पत्ति होना है । 'प्रातिपदिकम्' ४६वें सूत्र तक चलता है ॥ ४५ ॥

**कृत्तद्धितसमासाश्च (१-२-४६)**

कृत्तद्धितसमासाः १।३ । च (अ०) । कृतद्धितसमासाः में इतरेतरद्वन्द्व समास है । कृदन्त, तद्धितान्त और समास की भी प्रातिपदिक संज्ञा होती है । कृदन्त—कारकः । हारकः । कर्त्ता । हर्त्ता । यहाँ प्रथम दो उदाहरणों में कृ और हृ धातुओं से ण्वुल् कृत्प्रत्यय हुआ है, और अन्तिम दो में इन्हीं धातुओं से तृच् या तृन् प्रत्यय-कृत् संज्ञक हुये हैं । तद्धित-औपगवः । कापटवः । यहाँ क्रमशः उपगु, कपटु प्रातिपदिकों से अपत्यार्थ में तद्धित अण् प्रत्यय हुआ है । समास—राजपुरुषः । ब्राह्मणकम्बलः । यहाँ राजा का पुरुष, ब्राह्मण का कम्बल इस विग्रह में 'षष्ठी' इस सूत्र से तत्पुरुष समास हुआ है । इन सब उदाहरणों में (कृदन्तों तद्धितान्तों और समासों की) प्रातिपदिक संज्ञा होने पर उनसे स्वादिप्रत्ययों की उत्पत्ति होती है ॥ ४६ ॥

**ह्रस्वो नपुंसके प्रातिपदिकस्य (१-२-४७)**

ह्रस्वः १।१ । नपुंसके ७।१ । प्रातिपदिकस्य ६।१ । नपुंसकलिङ्ग में

प्रातिपदिकस्य ह्रस्व आदेशो भवति। अतिरि कुलम्। अतिनु कुलम्। रायमतिक्रान्तं, नावमतिक्रान्तमिति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (२-२-१८ वार्त्तिकम्) इति तत्पुरुषसमासे कृते अतिरै, अतिनौ इति जाते प्रकृतसूत्रेण ह्रस्वत्वम्। तत्र 'एच इक्०' इति परिभाषया इकारोकारौ।

### गोस्त्रियोरुपसर्जनस्य (१-२-४८) -४९

गोस्त्रियोः। उपसर्जनस्य। गौश्च स्त्री च गोस्त्रियौ तयोः (इतरेतरद्वन्द्वः)। उपसर्जनगोशब्दान्तस्य, उपसर्जनस्त्रीप्रत्ययान्तान्तस्य च प्रातिपदिकस्य ह्रस्वो भवति। चित्रगुः। शबलगुः। चित्रागावो यस्येति विग्रहे 'अनेकमन्यपदार्थे' (२-२-२४) इति बहुव्रीहिसमासे, सुपो धातुप्रातिपदिकयोः' (२-४-७१) इति सुप्लुकि, 'सप्तमीविशेषणे बहुव्रीहौ' (२-२-३५) इति विशेषणवाचिनश्चित्रशब्दस्य शबलशब्दस्य वा पूर्वनिपाते चित्रगो शबलगो इति जाते प्रकृतसूत्रेण ह्रस्वत्वम्। 'एच इग्घ्रस्वादेशे' (१-१-४८) इति उकारादेशः। निष्कौशाम्बिः। निर्वाराणसिः। अतिखट्वः। अतिमालः। कौशाम्ब्या निष्क्रान्तः, वाराणस्याः निष्क्रान्तः, खट्वामतिक्रान्तः मालामतिक्रान्तः इति विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्याः (२-२-१८ वा०)। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (२-२-१८

---

वर्त्तमान अजन्त प्रातिपदिक को ह्रस्व होता है। अतिरिकुलम्। अतिनुकुलम्। रै (=धन) का अतिक्रमण (=उल्लंघन) करने वाला कुल अतिरि और नौ (नाव) का अतिक्रमण (उल्लंघन) करने वाला कुल अतिनु कहा जाता है। यहाँ 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' वार्त्तिक से तत्पुरुष समास हुआ। उसकी प्रातिपदिक संज्ञा होने से प्रकृत सूत्र से रै को इकार तथा नौ को उकार ह्रस्वादेश हो गया॥ ४७॥

### गोस्त्रियोरुपसर्जनस्य (१-२-४८)

गोस्त्रियोः ६।२। उपसर्जनस्य ६।१। गोस्त्रियोः में इतरेतर द्वन्द्व समास है। पूर्वसूत्र से ह्रस्व की अनुवृत्ति आ रही है। उपसर्जन गोशब्दान्त तथा उपसर्जन स्त्रीप्रत्ययान्त प्रातिपदिक को ह्रस्वादेश होता है। चित्रगुः। शबलगुः। निष्कौशाम्बिः। निर्वाराणसिः। अतिखट्वः। अतिमालः। चित्रित गौ वाला चित्रगुः और चितकबरी गौ वाला शबलगुः कहलाता है। यहाँ 'गो' के ओकार को ह्रस्व विधान करने पर 'एच इग्घ्रस्वादेशे' से इक् प्रत्याहारस्थ उकार स्थानकृत आन्तर्य से हो जाता है। इसी प्रकार निष्क्रान्तः

वा०) इति समासे कृते, प्रातिपदिकसंज्ञायां सुब्लुकि 'एकविभक्ति चाऽपूर्वनिपाते' (१-२-४४) इत्युत्तरपदस्योपसर्जनसंज्ञायां प्रकृतसूत्रेण ह्रस्वत्वम् । (वा०) ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः । बहुश्रेयसीः विद्यमानश्रेयसी ।

## लुक् तद्धितलुकि (१-२-४९) -५०

लुक् । तद्धितलुकि । तद्धितस्य लुक् तद्धितलुक्, तस्मिन् (ष०त०) । तद्धितलुकि सत्युपसर्जनस्य स्त्रीप्रत्ययस्यापि लुग् भवति । पञ्चेन्द्रः । दशेन्द्रः । पञ्चशष्कुलिः । आमलकम् । बकुलम् । बदरम् । कुवलम् । पञ्चेन्द्राण्यो देवता अस्येति स्थिते 'तद्धितार्थोत्तरपदसमाहारे च' (२-१-५०) इति तत्पुरुष समासे कृते, विभक्तिलुकि, नलोपे 'गुणे च' साऽस्यदेवता' (४-२-२३) इत्यण्प्रत्यये, संख्यापूर्वो द्विगुः' (२-१-५१) इतिद्विगुसंज्ञायाम्, द्विगोर्लुगनपत्ये (४-१-८८) इत्यणो लुकि सति प्रकृतसूत्रेण 'इन्द्र वरुण०' (४-१-४६) इति विहितस्य स्त्रीप्रत्यय ङीषः संन्नियोगशिष्टपरिभाषया आनुगागमस्य च लुक् । ततः स्वाद्युत्पत्तिः । एवं दशेन्द्रोऽपि । पञ्चभिः शष्कुलीभिः क्रीतइत्यत्र पूर्ववत् समासे 'तेन क्रीतम्' (५-१-३६) इति ठक्प्रत्यये कृते अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' (५-१-२८) इति ठको लुकि सति प्रकृतसूत्रेण 'षिद्गौरादिभ्यश्च' (४-१-४१) इति

---

कौशाम्ब्याः/वाराणस्याः, अतिक्रान्तः खट्वाम्/मालाम् । इन विग्रहों में स्त्रीप्रत्ययान्त कौशाम्बी, वाराणसी, खट्वा और माला को ह्रस्व इकार और ह्रस्व अकार आदेश प्रकृत सूत्र से हुआ ॥ ४८ ॥

## लुक् तद्धितलुकि (१-२-४९)

लुक् १।१ । तद्धितलुकि ७।१ । तद्धितलुकि में षष्ठी तत्पुरुष समास है। तद्धित के लुक् होने पर उपसर्जन स्त्री प्रत्यय का भी लुक् होता है। पञ्चेन्द्रः । दशेन्द्रः । पञ्चशष्कुलिः । आमलकम् । बकुलम् । बदरम् । कुवलम् । पञ्च इन्द्राण्यो देवता अस्य=पञ्चेन्द्रः । इस विग्रह में पञ्च और इन्द्राण्यः पदों में द्विगुतत्पुरुष समास हुआ । यहां पर साऽस्य देवता से अण् प्रत्यय हुआ । उसका 'द्विगोर्लुगनपत्ये' से लुक् हो गया । तत्पश्चात् प्रकृतसूत्र से उपसर्जन रूप स्त्री प्रत्यय ङीष् का आनुगागम सहित लुक् हो गया । तब तद्धितान्त मानकर उसकी प्रातिपदिक संज्ञा और सु प्रत्यय आकर पञ्चेन्द्रः पदसिद्ध हुआ । इसी प्रकार दशेन्द्रः में भी समझना चाहिये । पञ्चभिः शष्कुलीभिः क्रीतम्=पञ्चशष्कुलिः (५ पूरियों से क्रय किया गया) । इस

विहितस्य ङीषः स्त्रीप्रत्ययस्य लुक् प्राप्तः, किन्तु इकारान्तप्रयोगदर्शनात् 'सूच्याद्यर्थमथापि वा' (१-२·५० वा०) इति भाष्यवार्तिकाच्च पञ्चसूचिरितिवत् शष्कुलेरपि स्त्रीप्रत्ययस्य ह्रस्वेकारादेशः[1]। आमलक्याः फलमित्यत्र 'नित्यं वृद्धशरादिभ्यः' (४-३-१४४) इति मयट्कृते 'फले लुक्' (४-३-१६१) इति यस्य लुकि, प्रकृतसूत्रेण गौरादित्वाद्विहितस्य ङीषोऽपि लुक्। ततः क्लीबे सौ 'अतोऽम्' (७-१-२४) इत्यमादेशे पूर्वरूपैकादेशे च आमलकमिति साधु। एवं बकुलमित्याद्यपि सिद्धम्।

### इद् गोण्याः (१-२-५०)

**इद। गोण्याः। गोणीशब्दस्य तद्धितलुकि सति इकारान्तादेशो भवति।**

---

विग्रह में 'तेन क्रीतम्' से ठक् प्रत्यय हुआ और उसका 'अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' से लुक् हो गया। तब 'लुक्तद्धितलुकि' से शष्कुली के स्त्रीप्रत्यय ङीष् का भी लुक् हो गया। पश्चात् उसे इत्वादेश हो गया। आमलक्याः फलम्=आमलकम्। इस उदाहरण में 'नित्य वृद्धशरादिभ्यः' से प्राप्त मयट् प्रत्यय का 'फले लुक्' सूत्र से लुक् हो गया। तब प्रकृत सूत्र से आमलकी के स्त्री-प्रत्यय ङीष् का भी लुक् हो गया। अनन्तर अकारान्त आमलक शब्द का नपुंसकलिंग प्रथमाविभक्ति एकवचन में सुँ को अमादेशादि होकर आमलकम् रूप सिद्ध हुआ। इसी प्रकार बकुलम्, कुवलम् में भी समझना चाहिये ॥ ४९ ॥

### इद् गोण्याः (१-२-५०)

इद १।१। गोण्याः ६।१। गोणी शब्द को तद्धितलुक् होने पर

---

१. अत्र 'पञ्चशष्कुल' इति पदमञ्जरीस्थमुदाहरणम्। 'पञ्चशष्कुलम्' इति च प्रत्यग्रमष्टाध्यायीभाष्य (प्रथमावृत्ति) स्थम्। काशिकान्यासयोस्तु पञ्चशष्कुलिरित्येवास्ति। सूत्रार्थदृष्ट्या यद्यपि पञ्चशष्कुलः, पञ्चशष्कुलमिति प्रयोगी संगच्छेते तथापि पञ्चशष्कुलिरित्यपि साधुरेव। न्यासकारस्तु 'इद्गोण्याः' इत्यत्र काशिकामनुसृत्य 'इदिति' योगविभागम् स्वीकृतवान् तच्च पञ्चसूचिर्दशसूचिरिति सूचिविषयमेवामंस्त। परं तेन 'पञ्चशष्कुलिः' इति प्रयोगः कथं सिद्धयतीति नोक्तवान्। अस्मन्मते तूक्तभाष्यवार्त्तिके आदिशब्दप्रयोगाच्छष्कुलेरित्त्वं सिद्धं भवतीति साधुरेव स प्रयोगः।

पञ्चगोणिः । दशगोणिः । पञ्चभिर्गोणीभिः क्रीतः (पटः) इत्यत्र पूर्ववत् समासे, ढक्प्रत्यये, तस्य लुकि सति 'जानपदकुण्डगोण०' (४-१-४२) इति विहितस्य ङीषः स्त्रीप्रत्ययस्य स्थाने ह्रस्वेकारादेशः ।

## लुपि युक्तवद् व्यक्तिवचने (१-२-५१) -५२

लुपि । युक्तवद् । व्यक्तिवचने । व्यक्तिश्च वचनञ्च व्यक्तिवचने (इतरेतरद्वन्द्वः) । व्यक्तिर्लिङ्गम् । वचनं संख्या, एकद्विबहुत्वानि । 'व्यक्तिवचने' इति लिङ्गसंख्ययोः संज्ञा पूर्वाऽऽचार्याणाम् । लुपि सति व्यक्तिवचने युक्तवत् प्रकृत्यर्थवद्भवतः । तद्धितप्रत्ययोत्पत्तेः पूर्वं प्रकृत्यर्थस्य ये लिङ्गसंख्ये ते तद्धितप्रत्ययस्य लुपि सत्यपि भवतः । पञ्चालाः । कुरवः, मगधाः । मत्स्याः । अङ्गाः । वङ्गाः । सुह्माः । पुण्ड्राः । पञ्चालाः क्षत्रियाः पुंल्लिगा बहुवचनविषयाः । तेषां निवासो जनपदः[1]— इति पञ्चालादिशब्देभ्यो विहितस्य तद्धिताण्प्रत्ययस्य 'जनपदे लुप्' (४-२-८१) इति लुप् । तस्मिन्सति प्रकृतिवल्लिगवचने भवतः ।

(वा० १) —हरीतक्यादिषु व्यक्तिः । हरीतक्याः फलानि हरीतक्यः फलानि ।

---

इकारान्तादेश होता है । पञ्चभिः गोणीभिः क्रीतः=पञ्चगोणिः पटः । दशगोणिः । (पांच या दश गायों से विनिमय द्वारा क्रय किया गया । वस्त्र आदि पञ्चगोणिः, दशगोणि कहा जाता है । पातञ्जल महाभाष्य में गौ का अपभ्रंश गोणी कहा गया है । गढ़वाल मण्डल में आज भी गायों को गोणी कहा जाता है ।) यहाँ पर 'अध्यर्धपूर्वद्विगोर्लुक्०' से ढक् प्रत्यय का लुक् हुआ । तदनन्तर पूर्वसूत्र से स्त्रीप्रत्यय ङीष् का भी लुक् प्राप्त हो रहा था, उसको प्रकृत सूत्र ने ह्रस्व इकारादेश कर दिया ॥ ५० ॥

### लुपि युक्तवद् व्यक्तिवचने (१-२-५१)

लुपि ७।१ । युक्तवद् (अ०) । व्यक्तिवचने ७।१ । व्यक्तिवचने में इ० द्वन्द्व समास है । प्रत्यय का लुप् होने पर व्यक्ति (लिङ्ग) और वचन (संख्या) प्रकृत्यर्थवत् होते हैं । पञ्चालाः, कुरवः, मगधाः, मत्स्याः, अङ्गाः, वङ्गाः, सुह्माः, पुण्ड्राः । पञ्चालानां (तत्संज्ञकक्षत्रियाणाम्) निवासो जनपदः= पञ्चालाः । यहाँ पर निवासार्थ में विहित अण् प्रत्यय का 'जनपदे लुप्' से

---

१. 'सोऽस्य निवासः' (४-३-८९) इत्यनेन 'प्राग्दीव्यतोऽण्' (४-१-८३) इत्यधिकारादण्प्रत्ययः ।

(वा० २)—खलतिकादिषु वचनम् । खलतिकस्य पर्वतस्यादूरभवानि वनानि खलतिकं वनानि ।

### विशेषणानां चाजातेः (१-२-५२)

विशेषणानाम् । च । अजातेः । न जातिरजातिस्तस्याः (नञ्तत्पुरुषः) । लुबर्थस्य यानि विशेषणानि तेषामपि युक्तवद् व्यक्तिवचने भवतो जातिं वर्जयित्वा । पञ्चाला रमणीयाः, बह्वन्नाः, बहुक्षीरघृताः, बहुमाल्यफलाः । गोदौ रमणीयौ बह्वन्नौ बहुक्षीरघृतौ बहुमाल्यफलौ । यथा विशेष्यपञ्चालशब्दस्य लिङ्गवचने तथा विशेषणस्य रमणीयादेरपि ।

(वा०)—मनुष्यलुपि प्रतिषेधो वक्तव्यः । चञ्चाभिरूपः, वध्रिका दर्शनीयः ।

### तदशिष्यं संज्ञाप्रमाणत्वात् (१-२-५३) -५७

तद् । अशिष्यम् । संज्ञाप्रमाणत्वात् । शासितुं शक्यं शिष्यम् न शिष्यमशिष्यम् (न०त०) संज्ञानं संज्ञा लौकिको व्यवहारः । संज्ञायाः प्रमाणं संज्ञाप्रमाणं (ष० त०) । तस्य भावस्तस्मात् । तदिति सर्वनाम्ना युक्तवद्भावःपरिगृह्यते । तद्युक्तवद्भावोऽशिष्यः । कुतः ? संज्ञाप्रमाणत्वात् लौकिकव्यवहाराधीनत्वात् तस्य । पञ्चालाः वरणाः । जनपदादीनां संज्ञा एतास्तत्र लिङ्गवचने शब्दानां न यत्नप्रतिपाद्ये स्वभावसिद्धे हि ते ।

---

लुप् हो गया । तब प्रकृत सूत्र से पञ्चाल शब्द पुंल्लिग बहुवचन में ही प्रयुक्त हुआ । ऐसे ही कुरवः आदि में भी समझें ॥ ५१ ॥

### विशेषणानां चाजातेः (१-२-५२)

विशेषणानाम् ६।३ । च (अ०) । अजातेः ६।१ । अजातेः में नञ्तत्पुरुष समास है । लुबर्थ के जो विशेषण हैं, उनमें भी युक्तवत् (=विशेष्यवत्) लिंग-वचन होते हैं, जाति को छोड़कर । पञ्चाला रमणीयाः, बह्वन्नाः, बहुक्षीरघृताः, बहुमाल्य फलाः । गोदौ रमणीयौ बह्वन्नौ बहुक्षीरघृतौ बहुमाल्यफलौ । यहां पञ्चालादि विशेष्यवत् रमणीयादि विशेषण भी समान लिंग वचन हैं ॥ ५२ ॥

### तदशिष्यं संज्ञाप्रमाणत्वात् (१-२-५३)

तद् १।१ । अशिष्यम् १।१ । संज्ञाप्रमाणत्वात् ५।१ । अशिष्यं में नञ्तत्पुरुष तथा संज्ञा० में षष्ठीतत्पुरुष है । अथवा यह युक्तवद्भाव अविधेय है, क्योंकि पाञ्चालाः आदि जनपदों की संज्ञायें हैं और उनके लिङ्गवचन भी स्वभाव सिद्ध हैं ॥ ५३ ॥

### लुब्योगाप्रख्यानात् (१-२-५४)

लुप् । योगाऽप्रख्यानात् । न प्रख्यानमप्रख्यानम् (न०त०)। योगस्याप्रख्यानं योगाप्रख्यानं तस्मात् (ष०त०)। 'जनपदे लुप्' (४-२-८१) इत्यादि लुब्विधायकं सूत्रमध्यशिष्यं कुतः ? योगस्य=सम्बन्धस्य अप्रख्यानात्=अप्रतीतत्वात् । पञ्चालाः वरणाः इति देशविशेषस्य संज्ञाः। नहि निवाससम्बन्धादेव पञ्चालाः, वृक्षयोगादेव वरणा इति व्यवहारः, तत्राशक्यं लुब्विधानम् ।

### योगप्रमाणे च तदभावेऽदर्शनं स्यात् (१-२-५५)

योगप्रमाणे । च । तदभावे । अदर्शनम् । स्यात् । योगस्य प्रमाणं योगप्रमाणं तस्मिन् (ष०त०)। न भावोऽभावः (न०त०), तस्याभावस्तदभावः, (ष० त०)। न दर्शनमदर्शनम् (न० त०)। यदि पञ्चालादिशब्दानां योगस्य (=निवासादिसम्बन्धस्य) प्रामाण्यं स्यात् तदा निवासादिसम्बन्धाऽभावे तेषां प्रयोगादर्शनं स्यात् । परं योगाऽभावेऽपि प्रयोगो दृश्यते तेनावसीयते नैते योगशब्दाः किं तर्हि ? रूढिरूपेण प्रवृत्ता इति । तदेवं योगप्रमाणमध्यशिष्यम् ।

### प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् (१-२-५६) -५७

प्रधानप्रत्ययार्थवचनम् । अर्थस्य । अन्यप्रमाणत्वात् । प्रधानं च प्रत्ययश्च

---

### लुब्योगाप्रख्यानात् (१-२-५४)

लुप् । १।१ । योगाप्रख्यानात् ५।१ । योगाप्रख्यानात् में नञ्तत्पुरुषगर्भ षष्ठीतत्पुरुष समास है। 'जनपदे लुप्' इत्यादि लुप् का विधान करने वाले सूत्र को भी नहीं कहना चाहिये, क्योंकि पञ्चालाः, वरणाः इत्यादि में न केवल निवास सम्बन्ध या वृक्ष योग से ही व्यवहार होता है. प्रत्युत अन्य रीति से जनपदादि की संज्ञा होने से भी होता है ।। ५४ ।।

### योगप्रमाणे च तदभावेऽदर्शनं स्यात् (१-२-५५)

योगप्रमाणे ७।१ । च (अ०)। तदभावे ७।१ । अदर्शनम् १।१ । स्यात् (क्रियापदम्)। योगप्रमाणे में ष० तत्पुरुष, तदभावे में न० तत्पुरुषगर्भ ष० तत्पुरुष तथा अदर्शनम् में नञ्तत्पुरुष समास है। यदि 'पञ्चालाः' इत्यादि शब्दों में निवासादि सम्बन्ध का प्रामाण्य होता तो उनके अभाव में उनका प्रयोग नहीं हो पाता । किन्तु तब भी प्रयोग होता है । अतः पञ्चालाः आदि शब्द यौगिक न होकर रुढि हैं, ऐसा जानना चाहिये ।। ५५ ।।

### प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् (१-२-५६)

प्रधानप्रत्ययार्थवचनम् १।१ । अर्थस्य ६।१ । अन्यप्रमाणत्वात् ५।१ । प्रधान

प्रधानप्रत्ययौ (इतरेतरद्वन्द्वः)। अर्थस्य वचनमर्थवचनम्-अर्थाभिधानं (ष० त०)। प्रधानप्रत्यययोरर्थवचनं प्रधानप्रत्ययार्थवचनम् (ष०त०)। अन्यस्य प्रमाणमन्यप्रमाणं (ष० त०), तस्य भावस्तस्मात्। प्रधानं समासान्तर्गतं पदं प्रत्ययस्तव्यदादिः। 'प्रधानोपसर्जने प्रधानार्थं सह ब्रूतः' 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इत्येवं मन्यमानान् पाणिनिराचार्यः प्रत्याचष्टे तदेतदशिष्यमिति। कुत एतत्? अर्थस्याभिधेयस्यान्यप्रमाणत्वात् लोकत एव सिद्धेः। यैरपि व्याकरणं नाधीतं तेऽपि 'राजपुरुषमानय' 'औपगवमानय' इत्युक्ते राजविशिष्टं पुरुषमेवानयन्ति न राजानं नापि पुरुषमात्रम्। उपगुविशिष्टमपत्यमेवानयन्ति नोपगुं नाप्यपत्यमात्रं न चोभौ। तस्माल्लोकतोऽर्थावगतेः शास्त्रेणाशक्यं लक्षणं कर्तुम्।

## कालोपसर्जने च तुल्यम् (१-२-५७)

कालश्चोपसर्जनं च कालोपसर्जने (इ० द्व०)। तुल्यमित्यनेन पूर्वसूत्राद् अन्यप्रमाणत्वादित्यर्थोऽनुकृष्यते। कालोऽद्यतनादिः। उपसर्जनमप्रधानमित्यर्थः। काल उपसर्जनञ्चाशिष्यं लोकप्रमाणत्वादेव। अश्रुतव्याकरणा अपि इदमस्माभिरद्य कर्त्तव्यमिदं श्वः कर्त्तव्यमिदं ह्यः कृतमिति अद्यादिपदैः कालज्ञानं; वयमत्र गृहे ग्रामे वोपसर्जनमिति उपसर्जनपदेनाप्रधानार्थज्ञानं च कुर्वन्ति। तत्र नार्थः 'आन्याय्यादुत्थानादान्याय्याच्च संवेशनात् एषोऽद्यतनः कालः।' 'अह-

---

···वचनम् में द्वन्द्वगर्भ षष्ठी तत्पुरुष तथा अन्यप्रमाणत्वात् में षष्ठीतत्पुरुष समास है। प्रधान और उपसर्जन दोनों पद प्रधानार्थ को साथ-साथ कहते हैं। प्रकृति और प्रत्यय मिलकर एक अर्थ को कहते हैं—इत्यादि मानने वालों को आचार्य पाणिनि प्रत्याख्यान करते हैं कि ऐसा मानना ठीक नहीं, क्योंकि अर्थ तो लोक व्यवहार से ही सिद्ध है। व्याकरण न जानने वाले भी राजपुरुषः, औपगवः इत्यादि पदों से यथार्थ बोध करते ही हैं। अतः जब लोक से ही अर्थ जाना जा सकता है तो व्याकरण शास्त्र से लक्षण बनाने की क्या आवश्यकता? ॥ ५६ ॥

## कालोपसर्जने च तुल्यम् (१-२-५७)

कालोपसर्जने १।२। च (अ०)। तुल्यम् १।१। कालोपसर्जने में इ० द्वन्द्व समास है। अद्यतन, श्वस्तन, ह्यस्तन इत्यादि कालभेद तथा उपसर्जन (=अप्रधानार्थ) को भी शास्त्र द्वारा विहित नहीं किया जा सकता। वह भी तो तुल्यरीति से लोकव्यवहार से ही जाना जाता है। जैसे इदमस्माभि-

रुभयतोऽर्द्धरात्रमेषोऽद्यतनः कालः' इत्येवं कालपरिभाषया, 'अप्रधानमुपसर्जनमि' त्युपसर्जनपरिभाषया च ।

## जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् (१-२-५८)-५९, ६०, -६२

जात्याख्यायाम् । एकस्मिन् । बहुवचनम् । अन्यतरस्याम् । जातेराख्या जात्याख्या तस्याम् (ष० त०) । जातिर्नामायमेकोऽर्थः । तदभिधाने एकवचनमेव प्राप्तमत इदमुच्यते । जात्याख्यायामेकस्मिन्नर्थे बहुवचनं (बहुत्वम्) विकल्पेन भवति । सम्पन्नो यवः, सम्पन्ना यवाः । सम्पन्नो व्रीहिः, सम्पन्ना व्रीहयः । पूर्ववया ब्राह्मणः प्रत्युत्थेयः, पूर्ववयसो ब्राह्मणाः प्रत्युत्थेयाः । यत्र पक्ष एकत्वं तत्र 'द्व्येकयोर्द्विवचनैकवचने' (१-४-२२) इत्येकवचनम् । यत्र पुनः बहुत्वं तत्र 'बहुषु बहुवचनम्' (१-४-२१) इति बहुवचनम् ।

(वा०)—संख्याप्रयोगे प्रतिषेधो वक्तव्यः । एको व्रीहिः सम्पन्नः सुभिक्षं करोति ।

## अस्मदो द्वयोश्च (१-२-५९)

अस्मदः । द्वयोः । च । अस्मदोऽर्थेऽस्यैकत्वे द्वित्वे च बहुवचनमन्यतरस्यां

---

रद्य कर्त्तव्यमिदं श्वः कर्त्तव्यमिदं ह्यः कृतम् । वयमत्र गृहे ग्रामे वा उपसर्जनम् । यहाँ अद्य, श्वः, ह्यः, उपसर्जनम् के अर्थ के लिए शास्त्रविधान अनावश्यक है ।। ५७ ।।

### जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् (१-२-५८)

जात्याख्यायाम् ७।१ । एकस्मिन् ७।१ । बहुवचनम् १।१ । अन्यतरस्याम् ७।१ । जात्याख्यायाम् में षष्ठी तत्पुरुष समास है । बहूनां वचनं = बहुवचनम् भी ष० तत्पुरुष है । जाति एकवस्तु होती है, अतः उसमें एकवचन ही प्राप्त था, वहाँ, पक्ष में, बहुवचन विकल्प से विहित किया गया है । सम्पन्नो यवः, सम्पन्ना यवाः । सम्पन्नो व्रीहिः, सम्पन्ना व्रीहयः । पूर्ववया ब्राह्मणः प्रत्युत्थेयः । पूर्ववयसो ब्राह्मणाः प्रत्युत्थेयाः । एकत्व अर्थ में एकवचन तथा बहुत्व में बहुवचन विभक्ति होती है । यहाँ से एकस्मिन् की ५९ वें सूत्र तक, बहुवचन की ६०वें सूत्र तक तथा अन्यतरस्याम् की अनुवृत्ति ६२वें सूत्र तक जाती है ।। ५८ ।।

### अस्मदो द्वयोश्च (१-२-५९)

अस्मदः ६।१ । द्वयोः ७।२ । च (अ०), अस्मद् के एकत्व और द्वित्व में बहुवचन विकल्प से होता है । अहं ब्रवीमि, वयं ब्रूमः । आवां ब्रूवः, वयं

भवति । अहं ब्रवीमि, वयं ब्रूमः । आवां ब्रूवः, वयं ब्रूमः ।

(वा०) —सविशेषणस्य प्रतिषेधो वक्तव्यः । अहं देवदत्तो ब्रवीमि । अहं गार्ग्यो ब्रवीमि । अहं पटुर्ब्रवीमि ।

### फल्गुनीप्रोष्ठपदानां च नक्षत्रे (१-२-६०)

फल्गुनीप्रोष्ठपदानां । च । नक्षत्रे । फल्गुन्यौ च प्रोष्ठपदे च फल्गुनी-प्रोष्ठपदास्तासां फल्गुनीप्रोष्ठपदानाम् (इ० द्व०) । फल्गुन्योर्द्वयोः प्रोष्ठपद-योश्च द्वयोर्बहुवचनमन्यतरस्यां भवति । कदापूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः । कदा पूर्वेप्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः ।

### छन्दसि पुनर्वस्वोरेकवचनम् (१-२-६१) -६२

छन्दसि । पुनर्वस्वोः । एकवचनम् । छन्दसि विषये पुनर्वस्वोर्द्वयोरे-कवचनमन्यतरस्यां भवति । पुनर्वसुर्नक्षत्रमदितिर्देवता । पुनर्वसूनक्षत्रमदिति-र्देवता ।

### विशाखयोश्च (१-२-६२)

विशाखयोः । च । छन्दसि विषये विशाखयोरेकवचनमन्तरस्यां भवति ।

---

ब्रूमः । यहाँ अहम् और आवाम् के अर्थ में ही विकल्प से वयम् हुआ है ॥ ५९ ॥

#### फल्गुनीप्रोष्ठपदानां च नक्षत्रे (१-२-६०)

फल्गुनीप्रोष्ठपदानाम् ६।३ । च (अ०) । नक्षत्रे ७।१ । फल्गुनी० में इ० द्वन्द्व समास है । दो फल्गुनी और दो प्रोष्ठपदा नक्षत्रों में विकल्प से बहुवचन होता है । कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः । कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः । पूर्व और उत्तर भेद से फल्गुनी और प्रोष्ठपदा (भाद्रपदा) के दो-दो भेद होते हैं । उनमें बहुवचन का विकल्प से विधान है ॥ ६० ॥

#### छन्दसि पुनर्वस्वोरेकवचनम् (१-२-६१)

छन्दसि ७।१ । पुनर्वस्वोः ६।२ । एकवचनम् १।१ । वेद विषय में पुनर्वसु नक्षत्र के द्वित्व अर्थ में विकल्प से एकवचन होता है । पुनर्वसुर्नक्षत्र-मदितिर्देवता । पुनर्वसू नक्षत्रमदितिर्देवता । 'छन्दसि' आगे चलेगा ॥ ६१ ॥

#### विशाखयोश्च (१-२-६२)

विशाखयोः ६।२ । च (अ०) । वेद विषय में विशाखा नक्षत्र के

विशाखा नक्षत्रमिन्द्राग्नी देवता । विशाखे नक्षत्रमिन्द्राग्नी देवता ।

**तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् (१-२-६३)**

तिष्यपुनर्वस्वोः । नक्षत्रद्वन्द्वे । बहुवचनस्य । द्विवचनम् । नित्यम् । तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू तयोः (इ० द्व०) । नक्षत्राणां द्वन्द्वो नक्षत्रद्वन्द्वस्तस्मिन् । (ष० त०) । तिष्य एकः, पुनर्वसू द्वौ तयोर्द्वन्द्वे बहुवचनं प्राप्तं तत्र नित्यं द्विवचनं विधीयते । उदितौ तिष्य-पुनर्वसू दृश्यते ।

**सरूपाणामेकशेष एकविभक्तौ (१-२-६४)** -७३

सरूपाणाम् । एकशेषः । एकविभक्तौ । समानं रूपं येषां ते सरूपास्तेषाम् (बहुव्रीहिः) । 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूप०' (६-३-८३) इति समानस्य स आदेशः । एकस्य शेष एकशेषः (ष० त०) । एका चासौ विभक्तिः— एकविभक्तिः (कर्मधारयः) तस्याम् । सरूपाणां शब्दानामेकविभक्तौ परत एकशेषो भवति । वृक्षश्च वृक्षश्च=वृक्षौ । वृक्षश्च वृक्षश्च वृक्षश्च=वृक्षाः । विभक्तिरेकाऽस्ति शब्दाश्च बहवः सरूपास्तत्रैकः शब्द शिष्यतेऽन्ये निवर्त्तन्ते तस्यामेव विभक्तौ परतः । तत्र द्वयोरेकशेषश्चेत् तस्माच्छब्दाद् द्विवचनविभक्तिरायाति तदधिकैकशेषे पुनः बहुवचनमेव । 'वृक्षौ' इत्यत्र 'प्रथमयोः पूर्व-

---

द्वित्व में भी विकल्प से एकवचन होता है । विशाखा नक्षत्रमिन्द्राग्नी देवता । विशाखे नक्षत्रमिन्द्राग्नी देवता ।। ६२ ।।

**तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् (१-२-६३)**

तिष्यपुनर्वस्वोः ६।२ । नक्षत्रद्वन्द्वे ७।१ । बहुवचनस्य ६।१ । द्विवचनम् १।१ । नित्यम् १।१ । तिष्य० में इ० द्वन्द्व और नक्षत्रद्वन्द्वे में ष० तत्पुरुष है । तिष्य (पुष्य) नक्षत्र एक है और पुनर्वसु दो हैं । उनके द्वन्द्व समास में बहुवचन प्राप्त था । उसमें नित्य ही द्विवचन का विधान किया जाता है । उदितौ तिष्यपुनर्वसू दृश्येते ।। ६३ ।।

**सरूपाणामेकशेष एक विभक्तौ (१-२-६४)**

सरूपाणाम् ६।३ । एकशेषः १।१ । एकविभक्तौ ७।१ । सरूपाणाम् में बहुव्रीहि, एकशेष में ष० त० और कर्मधारय (दोनों संगत) तथा एकविभक्तौ में कर्मधारय समास है । समान रूप वाले शब्दों का एकविभक्ति परे रहते एकरूप शेष रह जाता है और अन्यों का लोप हो जाता है । वृक्षश्च, वृक्षश्च=वृक्षौ । वृक्षश्च, वृक्षश्च, वृक्षश्च=वृक्षाः । दो समान रूप

सवर्णः' (६-१-१०२) इति प्राप्तः पूर्वसवर्णदीर्घैकादेशो 'नादिचि' (६-१-१०४) इत्यनेन प्रतिषिद्ध्यते। ततो 'वृद्धिरेचि' (६-१-८८) इति वृद्धिरेकादेशः।

**वृद्धो यूना तल्लक्षणश्चेदेवविशेषः (१-२-६५) -६६, -६६, -६९**

वृद्धः। यूना। तल्लणः। चेत्। एव। विशेषः। वृद्धयुवप्रत्ययौ लक्षणौ निमित्तावस्य स तल्लक्षणः वृद्धयूनोः सह वचने वृद्धः शिष्यते युवा निवर्त्तते, वृद्धयुवनिमित्तकमेव यदि विशेषो=वैरूप्यं भवति। वृद्धमिति पूर्वाचार्यकृता संज्ञा गोत्रस्य-अपत्यमन्तर्हितं वृद्धमिति। गार्ग्यश्च गार्ग्यायणश्च=गार्ग्यौ। वात्स्यश्च वात्स्यायनश्च वात्स्यौ। 'गर्गादिभ्यो यञ्' (४-१-१०५) इति गर्गस्य यदपत्यं पौत्रप्रभृति (गोत्रम्) तद् गार्ग्यनाम्नाभिधीयते, तदेवात्र वृद्धपदव्यपदेश्यम्। तदेव पौत्रप्रभृत्यपत्यं 'जीवति तु वंश्ये युवा' (४-१-१६३) इति वंश्ये अभिजनसम्बन्धिनि पित्रादौ जीवति सति युवसंज्ञं भवति। 'गोत्राद्यून्यस्त्रियाम्' (४-१-९४), 'यञिञोश्च' (४-१-१०१) इति गोत्रवाचिनो यञन्ताद् गार्ग्यशब्दादपत्यार्थे फक् प्रत्यये कृते फस्यायनादेशे गार्ग्यायण इति जायते। तेन समानायामपि प्रकृतौ वृद्धयुवप्रत्यययोर्विशेषो वैरूप्यमागतम्। अथ च गार्ग्यायणो वात्स्यायन इति युवप्रत्ययान्ते पदे, ते निवर्तेते। सामर्थ्यात् पौत्रप्रभृतेर्यदपत्यं (प्रपौत्रम्) तस्य युवसंज्ञा भवति।

---

वाले शब्दों के एकशेष में द्विवचन और तीन या उससे अधिक समान रूप वाले शब्दों के एकशेष में बहुवचन की विभक्ति का प्रयोग होगा। यहाँ से एकशेष की अनुवृत्ति पदान्त तक है॥ ६४॥

**वृद्धो यूना तल्लक्षणश्चेदेवविशेषः (१-२-६५)**

वृद्धः १।१। यूना ३।१। तल्लक्षणः १।१। चेत् (अ०)। एव (अ०) विशेषः १।१। वृद्ध (=गोत्र) प्रत्यय और युवप्रत्यय लक्षण हो जिसके वह तल्लक्षण (बहुव्रीहि) ही विशेष हो तो वृद्ध और युवा प्रत्ययों के साथ-साथ प्रयोग में वृद्धप्रत्यय शेष रहता है और युवप्रत्यय निवृत्त हो जाता है। गार्ग्यश्च, गार्ग्यायणश्च=गार्ग्यौ। वात्स्यश्च, वात्स्यायनश्च=वात्स्यौ। वृद्धापत्य या गोत्रापत्य में गर्ग और वत्स शब्दों से 'गर्गादिभ्यो यञ्' से यञ् प्रत्यय होकर गार्ग्य, वात्स्य ये शब्द रूप बने। उधर 'जीवति तु वंश्ये युवा' सूत्र से गार्ग्यादि से युवप्रत्यय फक् (आयन) आकर गार्ग्यायण, वात्स्यायन रूप बने। अतः गार्ग्य-गार्ग्यायण, वात्स्य-वात्स्यायन में वृद्ध (गोत्र) संज्ञक शब्द का एकशेष हो गया तो गार्ग्यौ, वात्स्यौ शब्दरूप बने॥ ६५॥

## स्त्री पुंवच्च (१-२-६६)

स्त्री । पुंवत् । च । स्त्रीवृद्धा (गोत्रप्रत्ययान्ता स्त्री) यूना सह वचने शिष्यते पुंस इवास्याः कार्यं भवति । गार्गी च गार्ग्यायणश्च=गार्ग्यौ । वात्सी च वात्स्यायनश्च वात्स्यौ । दाक्षी च दाक्षायणश्च दाक्ष्यौ । गर्गस्य गोत्रापत्यं (पौत्री) स्त्री इत्यर्थे 'गर्गादिभ्यो यञ्' (४-१-१०५) इति यञन्ताद् गार्ग्य-शब्दाद् 'यञश्च' (४-१-१६) इति ङीप्प्रत्यये कृते 'यस्येति च' (६-४-१४८) इत्यकारलोपे 'हलस्तद्धितस्य' (६-४-१५०) इति यकारलोपे प्रथमैकवचनविभक्तौ सुलोपे गार्गी' इति पदं साधु ।

## पुमान् स्त्रिया (१-२-६७)

स्त्रिया सह वचने पुमान् शिष्यते स्त्री निवर्तते स्त्रीपुंसलक्षणश्चेद् विशेषो भवति । ब्राह्मणश्च ब्राह्मणी च=ब्राह्मणौ । कुक्कुटश्च कुक्कुटी च= कुक्कुटौ ।

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम् (१-२-६८)

भ्राता च पुत्रश्च=भ्रातृपुत्रौ (इ०द्व०) । स्वसा च दुहिता च=स्वसृ

---

### स्त्री पुंवच्च (१-२-६६)

स्त्री १।१ । पुंवत् (अ०) । च (अ०) । वृद्ध (=गोत्र) प्रत्ययान्त स्त्री लिंग शब्द युव प्रत्ययान्त के साथ बोले जाने पर शेष रहता है और उसका रूप पुंल्लिगवत् हो जाता है तथा युवप्रत्ययान्त निवृत्त हो जाता है, यदि उन दोनों में वृद्ध-युवप्रत्ययनिमित्तक ही भेद हो अन्य सब समान हो । गार्गी च गार्ग्यायणश्च=गार्ग्यौ । वात्सी च वात्स्यायनश्च=वात्स्यौ । दाक्षी च दाक्षायणश्च=दाक्ष्यौ । गर्ग की गोत्रापत्य पौत्री गार्गी, वत्स की वात्सी और दक्ष की दाक्षी कहलाती है ।। ६६ ।।

### पुमान् स्त्रिया (१-२-६७)

पुमान् १।१ । स्त्रिया ३।१ । समान रूप वाले स्त्रीलिंग शब्द के साथ पुंल्लिग शब्द बोला जाने वाला हो तो पुंल्लिग शेष रहता है और स्त्रीलिंग निवृत्त हो जाता है । ब्राह्मणश्च ब्राह्मणी च=ब्राह्मणौ । कुक्कुटश्च कुक्कुटी च=कुक्कुटौ ।। ६७ ।।

### भ्रातृपुत्रौ स्वसृदुहितृभ्याम् (१-२-६८)

भ्रातृपुत्रौ १।२ । स्वसृदुहितृभ्याम् ३।२ । दोनों समस्त पद इतरेतर

दुहितरौ ताभ्याम् (इ०द्व०)। भ्रातृपुत्रौ यथासंख्यं स्वसृदुहितृभ्यां सह वचने शिष्येतेऽन्यौ निवर्त्तेते। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च=पुत्रौ। 'भ्रातरौ' इति औविभक्तौ परतो भ्रातृशब्दस्य 'ऋतो ङि सर्वनामस्थानयोः' (७-३-११०) इत्युकारान्ताङ्गस्य गुणे, रपरत्वे च रूपम्।

नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् (१-२-६९) -७१

नपुंसकम्। अनपुंसकेन। एकवत्। च। अस्य। अन्यतरस्याम्। न नपुंसकम् अनपुंसकम् तेन (न०त०)। नपुंसकमनपुंसकेन सह वचने शिष्यते स्त्रीपुंसौ निवर्त्तेते एकवच्च नपुंसकस्य कार्यं भवत्यन्यरस्यां तल्लक्षणश्चेदेव विशेषः। शुक्लश्च कम्बलः, शुक्ला च बृहतिका शुक्लं च वस्त्रं तदिदं शुक्लम्; तानीमानि शुक्लानि। एकत्वपक्षे एकवचनमितरत्र बहुवचनम्।

पिता मात्रा (१-२-७०)

पितृशब्दो मातृशब्देन सह वचने शिष्यतेऽन्यतरस्याम्। माता च पिता चेत्येकशेषपक्षे पितरौ, इतरत्र मातापितरौ। 'मातापितरौ' इत्यत्र 'आनङ् ऋतो

---

द्वन्द्व हैं। भ्राता तथा पुत्र शब्द क्रमशः स्वसा (बहिन) और दुहिता (पुत्री) के साथ बोले जा रहे हों तो भ्राता और पुत्र शब्द समान विभक्ति में, शेष रहते हैं, स्वसा और दुहिता निवृत्त हो जाते हैं। भ्राता च स्वसा च= भ्रातरौ। पुत्रश्च दुहिता च=पुत्रौ। संख्या न्यूनाधिक होने पर भी यही नियम रहेगा॥ ६८॥

नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् (१-२-६९)

नपुंसकम् १।१। अनपुंसकेन ३।१। एकवत् (अ०)। च (अ०)। अस्य ६।१। अन्यतरस्याम् ७।१। अनपुंसकेन में नञ्तत्पुरुष समास है। नपुंसकलिंग में वर्त्तमान शब्द नपुंसकेतरलिंग वाले शब्द के साथ प्रयुक्त होने पर समान रूप वाला हो तो नपुंसकलिंग वाला शेष रहता है, अन्य निवृत्त हो जाते हैं, और नपुंसक लिंग शब्द को विकल्प से एकवचन होता है। शुक्लश्च कम्बलः, शुक्ला च बृहतिका, शुक्लं च वस्त्रम्=तदिदं शुक्लम्। तानीमानि शुक्लानि॥ ६९॥

पिता मात्रा (१-२-७०)

पिता १।१। मात्रा ३।१। पिता शब्द का माता शब्द के साथ प्रयोग होने में विकल्प से एकशेष होता है। पक्षान्तर में दोनों का साथ-साथ भी

द्वन्द्वे' (६-३-२५) इत्युत्तरपदे परतः पूर्वपदान्तर्कारस्यानङादेशः। तस्मिन् सति नकारस्य 'नलोपः प्रातिपदिकान्तस्य' (८-२-७) इति लोपः।

## श्वशुरः श्वश्र्वा (१-२-७१)

श्वशुरशब्दः श्वश्रूसहवचने शिष्यते विकल्पेन। श्वश्रूश्च श्वशुरश्च=श्वशुरौ, श्वश्रूश्वशुरौ।

## त्यदादीनि सर्वैर्नित्यम् (१-२-७२)

त्यदादीनि। सर्वैः। नित्यम्। त्यद् शब्द आदिर्येषां तानीमानि त्यदादीनि शब्दरूपाणि (बहुव्रीहिः)। त्यदादीनि शब्दरूपाणि सर्वैस्त्यदादिभिरन्यैश्च सह-वचने नित्यं शिष्यन्तेऽन्ये निवर्त्तन्ते। स च यश्च यौ। यश्च कश्च कौ। स च देवदत्तश्च तौ। यश्च देवदत्तश्च यौ।

(वा०)—त्यदादीनां मिथो यद्यत्परं तत्तच्छिष्यते। इति वार्तिकेन परशेषोऽत्र बोद्धव्यः।

---

प्रयोग होता है। माता च पिता च=पितरौ। माता पितरौ। इस प्रकार पितरौ इस द्विवचनान्त पद का अर्थ माता और पिता होता है। प्रकरण भेद से पिता और पिता का भ्राता (ताऊ, चाचा) मिलकर भी पितरौ कहे जा सकते हैं। माता-पितरौ में पूर्वपद को आनङ्तादेश हुआ है॥ ७०॥

## श्वशुरः श्वश्र्वा (१-२-७१)

श्वशुरः १।१। श्वश्र्वा ३।१। श्वशुर शब्द का श्वश्रू के साथ प्रयोग होने पर एक शेष विकल्प से होता है। श्वश्रूश्च श्वशुरश्च=श्वशुरौ। श्वश्रूश्वशुरौ॥ ७१॥

## त्यदादीनि सर्वैर्नित्यम् (१-२-७२)

त्यदादीनि १।३। सर्वैः ३।३। नित्यम् १।१। त्यदादीनि में बहुव्रीहि समास है। त्यद् शब्द जिन शब्दों (सर्वनामसंज्ञक सर्वादिगण पाठ में पठितों) के आदि में है, वे त्यदादि शब्द सब शब्दों (सर्वनामों तथा अन्य संज्ञावाची शब्दों) के साथ बोले जाने पर नित्य ही शेष रहते हैं, और अन्य शब्द निवृत्त हो जाते हैं। स च यश्च=यौ। यश्च कश्च=कौ। स च देवदत्तश्च=तौ। यश्च देवदत्तश्च=यौ। यहाँ त्यदादि सर्वनामों के सहवचन में तो बाद में पढ़ा गया शेष रहता है; और त्यदादि तथा अत्यदादि के सहवचन में त्यदादि ही शेष रहता है—यह समझना चाहिये॥ ७२॥

## ग्राम्यपशुसंघेष्वतरुणेषु स्त्री (१-२-७३)

ग्राम्यपशुसंघेषु । अतरुणेषु । स्त्री। ग्रामे भवा ग्राम्याः। 'ग्रामाद्यखञौ' (४-२-९३) इति यप्रत्ययः। ग्राम्याश्च ते पशवश्च ग्राम्यपशवस्तेषां संघा ग्राम्यपशुसंघास्तेषु (पूर्वत्र कर्मधारय उत्तरत्र ष० त०) । न विद्यन्ते तरुणा येषु तेऽतरुणास्तेषु (बहुव्रीहिः) । अविद्यमानतरुणेषु ग्राम्यपशुसंघेषु स्त्रीलिंग-शब्दः शिष्यतेऽन्यो निवर्त्तते। पुमान् स्त्रिया' (१-२-६७) इत्यस्यापवादोऽयं योगः। गाव इमाः। अजा इमाः।

(वा०)—अनेकशफेष्विति वक्तव्यम्। इह मा भूत —अश्वा इमे।

इति प्रथमाध्यायस्य द्वितीय पादः।

———

---

## ग्राम्यपशुसंघेष्वतरुणेषु स्त्री (१-२-७३)

ग्राम्यपशुसंघेषु ७।३ । अतरुणेषु ७।३ । स्त्री १।१ । ग्राम्यपशुसंघेषु में कर्मधारय गर्भ षष्ठीतत्पुरुष समास है; और अतरुणेषु में बहुव्रीहि। तरुणों से रहित ग्राम्य पशुओं के संघ (झुंड) में (उन पशुओं के जाति नामों का साथ-साथ प्रयोग हो तो) स्त्रीलिंगवाची शब्द शेष रहता है तथा अन्य (पुल्लिग) शब्दों की निवृत्ति हो जाती है। गाव इमाः। अजा इमाः। यहाँ गावः शब्द और अजाः शब्द स्त्रीलिंग के बोधक हैं और उनसे क्रमशः गाय-बैल, बकरी-बकरे सबका ग्रहण होता है यह सूत्र पशुविषय में 'पुमान् स्त्रिया' सूत्र का अपवाद समझना चाहिए ।। ७२ ।।

"यह लघुकाशिका में प्रथम अध्याय का द्वितीय पाद पूर्ण हुआ ।।

———

# प्रथमाध्यायस्य तृतीयः पादः

## भूवादयो धातवः (१-३-१)

भूवादयः । धातवः । भूश्च वाश्च भूवौ, भूवावादी येषां ते भूवादयः । (द्वन्द्वगर्भो बहुव्रीहिः) । 'भू' इत्येवमादयः 'वा' इत्येवं प्रकारकाः क्रियावचनाः शब्दा धातुसंज्ञा भवन्ति । वाशब्दो मङ्गलार्थश्च प्रकारार्थश्च । 'वा=गति-गन्धनयोः' इति क्रियार्थवाचित्वाद् वाशब्दस्य तत्सदृशो भूशब्दोऽपि सत्तार्थको गृह्यते न तु पृथिव्यर्थवाची । भू—भवति । एध-एधते । स्पर्द्ध स्पर्द्धते । भू (सत्तायाम्) इत्यादेः प्रकृतसूत्रेण धातुसंज्ञा, धातोः (३-१-९१) इत्यधिकृत्य 'वर्त्तमाने लट्' (३-२-१२३), 'लस्य' (३-४-७७), 'तिप्तसझि०' (३-४-७८), 'लः कर्मणि च०' (३-४-६९) इति कर्त्तरि वर्त्तमानकाले क्रियार्थे तिबादिप्रत्ययोत्पत्तौ, तेषां 'लः परस्मैपदम्' (१-४-९९), 'तङानावात्मनेपदम्' (१-४-१००) इति परस्मैपदात्मनेपदविभागे, 'अनुदात्तङित आत्मनेपदम्' (१-३-१२) इत्यनुदात्तेद्भ्यामेधस्पर्द्धाभ्यां 'तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः' (१-४-१०१), 'तान्येकवचनद्विवचनबहुवचनान्येकशः (१-४-१०२), 'शेषे प्रथमः' (१-४-१०८), 'द्व्येकयोर्द्विवचनैकवचने' (१-४-२२) इति प्रथमपुरुषैकवचने तप्रत्यये

---

## प्रथमाऽध्याय का तृतीय पाद

### भूवादयो धातवः (१-३-१)

भूवादयः १।३ । धातवः १।३, भूवादयः में द्वन्द्वगर्भ बहुव्रीहि समास है। भू (सत्तायाम्) वा (गतिगन्धनयोः)—इत्यादि क्रियावाचक शब्दों की धातु संज्ञा होती है। भवति । एधते । स्पर्द्धते' । 'भू सत्तायाम्' यह धातुपाठ के आरम्भ की परस्मैपदी धातु है और 'एधँ वृद्धौ', 'स्पर्द्धँ संघर्षे' ये तदनन्तर पठित आत्मनेपदी धातुओं के दो उदाहरण हैं। भू, एध्, स्पर्द्ध आदि की प्रकृत सूत्र से धातु संज्ञा होने का फल यह है कि धातु (धातोः ३-१-९१) के अधिकार क्षेत्र में विहित प्रत्यय लकारादि लाकर अभीष्ट शब्द रूप बनाये जा सकें। जैसे 'भवति' प्रयोग' में भू धातु से वर्त्तमान काल में लट् प्रत्यय और लकार को प्रथम पुरुषैकवचन में तिबादेश, कर्त्तृ वाच्य में

'शेषात् कर्त्तरि परस्मैपदम्' (१-३-७८) इति भूधातोश्च परस्मैपदे प्रथम-पुरुषैकवचने तिप्प्रत्यये 'तिङ्शित्सार्वधातुकम्' (३-४-११३) इति तयोः सार्व-धातुकसंज्ञायां तस्मिन् परतो धातोः 'कर्त्तरि शप्' (३-१-६८) इति शपि, अनुबन्धलोपे भू+अ+ति इत्यवस्थायां 'भू' इत्येतस्य यस्मात् प्रत्ययविधि०' (१-४-१३) इत्यंगसंज्ञायां 'सार्वधातुकार्धधातुकयोः' (७-३-८४) इत्युकारा-न्ताङ्गस्य गुणे सत्योकारादेशे 'एचोऽयवायावः' (६-१-७८) इत्यवादेशे 'भवति' इति रूपमुपपन्नम्। एध+अ+त इत्यत्र तकारोत्तरवर्तिनोऽकारस्य 'अचोऽन्त्या-दि टि' (१-१-६४) इति टिसंज्ञायां 'टित आत्मनेपदानां टेरेः' (३-४-७९) इति टेरेकादेशे हृस्वरसंयोगे च एधते इति सिद्धम्। एवं 'स्पर्द्धते' इत्यादावपि बोध्यम्।

## उपदेशेऽजनुनासिक इत् (१-३-२) -८

उपदेशे। अच्। अनुनासिकः। इत्। उपदेशे योऽनुनासिकोऽच् स इत्संज्ञो भवति। पाणिनिमुनिप्रणीताष्टाध्यायीधातूणादिगणलिङ्गानुशासनपाठा इहोपदेशपदार्थाः। एधँ, स्पर्द्धँ इत्यादौ अनुनासिकाच इत्संज्ञा भवति। सैषा संज्ञा 'तस्य लोपः' (१-३-९) इति लोपार्थम्। नन्वपठितानां कथमानुनासिक्य-

---

शप् विकरण, अनुबंध लोप, अंग को गुण, अवादेश होने पर 'भवति' प्रयोग निष्पन्न होता है, उसी प्रकार आत्मनेपदी एध और स्पर्द्ध धातुओं से वर्तमान काल में लट् लकार के स्थान में आत्मेनपद प्रथम पुरुष एकवचन में त आदेश, शप् विकरण, अनुबन्ध लोप अंगोपधा गुण और प्रत्यय के टि अंश को एत्वादेश होकर एधते, स्पर्द्धते रूप बनें। इन धातुरूपों की सिद्धि का प्रकार सूत्र निर्देशपूर्वक मूल संस्कृत पाठ में दर्शाया गया है। विस्तारमय से पुनः नहीं लिखा। अतः उसे ऊपर की संस्कृतवृत्ति में देखा जा सकता है।

### उपदेशेऽजनुनासिक इत् (१-३-२)

उपदेशे ७।१। अच् १।१। अनुनासिकः १।१। इत् १।१। उपदेश में जो अनु-नासिक अच् हो उसकी इत्संज्ञा होती है। उपदेश से अभिप्राय पाणिनि मुनि के द्वारा रचित और प्रोक्त अष्टाध्यायी धातुपाठ, उणादिकोष, गणपाठ तथा लिङ्गानुशासन सूत्रों से है। जैसे एधँ, स्पर्द्धँ में अनुनासिक अच् अकार की इत्संज्ञा होती है। तब उस इत्संज्ञक वर्ण की 'तस्यलोपः' सूत्र से लोप हो जाता है। कहीं पर आजकल अनुनासिक चिन्ह लिखा हुआ न भी

प्रतिपत्तिः ? तत्राह 'प्रतिज्ञानुनासिक्याः पाणिनीयाः' इति प्रतिज्ञयाऽऽनुनासिक्य-मेषां ते प्रतिज्ञानुनासिक्याः। यत्रैवानुनासिक्यं पाणिनीयाः प्रतिजानते, परम्परया आचार्याः स्मरन्ति तत्रैव तदपठ्यमानमपि भवति नान्यत्र'[1]।

हलन्त्यम् (१-३-३) -४

हल्। अन्त्यम्। अन्ते भवमन्त्यम्। उपदेशे यदन्तं हल् तदित्संज्ञं भवति। 'हल्' इत्यनेन हयवरट्सूत्रस्यहकारमारभ्य हल्सूत्रस्थलकार पर्यन्तो वर्णसमुदायो गृह्यते। एष हल्प्रत्याहारः प्रकृतसूत्रे हस्य ल्=हल् (इत्संज्ञो भवति); इति हल्सूत्रस्थलकारस्येत्संज्ञाकरणाद् 'आदिरन्त्येन सहेता' (१-१-७१) इति नियमेन सिद्धो वेदितव्यः। सत्येवं प्रत्याहारे नेतरेतराश्रय-दोषो भवति। 'अ इ उ ण्' इत्यत्र णकारोऽन्त्यो हलुपदेशे, स इत्संज्ञोऽनेन

---

दिखाई दे तो इत्संज्ञा लोप कार्य को देखकर अनुनासिकत्व का अच्विशेष में प्रतिज्ञा या अनुमान कर लेना चाहिये। इस बात के लिये 'प्रतिज्ञानु-नासिक्याः पाणिनीयाः' यह कथन पूर्ववैयाकरण किया करते हैं। यहाँ से 'उपदेशे' और 'इत्' की अनुवृत्ति' ८वें सूत्र तक जाती है॥ २॥

हलन्त्यम् (१-३-३)

हल् १।१। अन्त्यम् १।१। उपदेशावस्था में जो अन्त में होने वाला हल् (व्यंजन) हो, उसकी इत्संज्ञा होती है, जैसे अ इ उ ण् सूत्र में णकार अन्तिम हल् होने से उसकी इत् संज्ञा हुई तो अण् यह प्रत्याहार बना। इसी प्रकार 'ऋ लृक्' में ककार, 'एओङ् में ङकार और 'ऐ औच्'' में चकार के इत्संज्ञक होनेसे आदि अकार के साथ अक्' इत्यादि प्रत्याहार निष्पन्न हुए। 'हल्' यह स्वयं प्रत्याहार है। हल् सूत्र का विग्रह हस्य ल् है, जो षष्ठी तत्पुरुष समास है। अर्थ हुआ 'ल्' इत्संज्ञक है। तब 'आदिरन्त्येन सहेता' परिभाषा से हयवरट्सूत्रस्थ हकार को आदि मानकर अन्तिम इत्संज्ञक लकार के साथ जो

---

१. वस्तुतः स्वरानुनासिक्यमेतत् पपाठ भगवान् पाणिनिरुपदेशकाले, किन्तु पश्चाल्लुप्तं तल्लेखकादिप्रमादात्। तदुक्तं पदमञ्जरीकारेण—"सूत्र-कारेण तावद् विवक्षिताः सर्वेऽनुनासिकाः पठिताः, 'डुलभँष् प्राप्तौ' लेखकैस्तु संकीर्णा लिखिताः, तत्र स्मृतिपरम्परया निर्णयमित्यर्थः।" (न्यासपदमञ्जरीसहिता काशिकावृत्तिः, संस्करणं १९६५ ई०, पृ० ३९४)।

भवति। 'ऋ लृक्' इत्यत्र ककारः, 'ए ओ ङ्' इति ङकारः, 'ऐ औ च्' इति च चकार इत्संज्ञकः।

### न विभक्तौ तुस्माः (१-३-४)

तुश्च स् च मश्च तुस्माः (इ० द्व०)। विभक्तौ वर्तमाना अन्त्य-हलस्तवर्गसकारमकारा इत्संज्ञका न भवन्ति। तवर्गः—वृक्षात्। प्लक्षात्। "टाङसिङसामिनात्स्याः' (७-१-१२) इति ङसेरादादेशे तस्य स्थानिवत्त्वात् 'विभक्तिश्च' (१-४-१०४) इति विभक्तिसंज्ञायां तस्येत्संज्ञाप्रतिषेधात् लोपो न भवति। सकारः—ब्राह्मणाः। पचतः। पचथः। जस्तस्थसां विभक्तीनां सकारा नेतः। मकारः—अपचताम्। अपचतम्। 'तस्थस्थमिपां तान्तन्तामः' (३-४-१०१) इति तस्थसोः स्थाने ताम्तमावादेशौ। तयोः स्थानिवत्त्वाद् विभक्तिसंज्ञायां सत्यां मकारो नेत्।

### आदिर्ञिटुडवः (१-३-५)

आदिः। ञिटुडवः। ञिश्च टुश्च डुश्च ञिटुडवः (इ० द्व०)। आदि-

---

प्रत्याहार बना वह 'हल्' कहलाया और उसमें सम्पूर्ण व्यञ्जनों का समावेश हो जाता है। सूत्र के दोनों पदों की अनुवृत्ति ४र्थ सूत्र तक जाती है॥ ३॥

### न विभक्तौ तुस्माः (१-३-४)

न (अ०) विभक्तौ ७।१। तुस्माः १।३। तुस्माः में इ० द्वन्द्व समास है। विभक्ति में रहने वाले उपदेश के अन्त्य तवर्गस्थ वर्ण सकार और मकार की इत्संज्ञा नहीं होती है। तवर्ग—वृक्षात् प्लक्षात्। यहाँ वृक्ष और प्लक्ष प्रातिपदिकों से पञ्चमी विभक्ति के एकवचन में 'ङसि' के स्थान में होने वाले 'आत्' आदेश का अन्तिम वर्ण तकार 'हलन्त्यम्' से इत्संज्ञा को प्राप्त था, किन्तु प्रकृत सूत्र से उसका निषेध हो जाता है। सकार—ब्राह्मणाः, पचतः। पचथः। यहाँ प्रातिपदिक ब्राह्मण शब्द से प्रथमा बहुवचन में जस् प्रत्यय, पच धातु के लट् प्रथमपुरुषद्विवचन में तस् प्रत्यय तथा मध्यम-पुरुषद्विवचन में थस् प्रत्यय में अन्तिम सकार की इत् संज्ञा नहीं होती, अतः उसे रुत्व और विसर्ग हो जाता है। मकार—अपचताम्। 'अपचतम्'। यहाँ लङ् में पचधातु से तस् को तम् आदेश होने पर मकार की इत्संज्ञा नहीं हुई॥ ४॥

### आदिर्ञिटुडवः (१-३-५)

आदिः १।१। ञिटुडवः १।३। ञिटुडवः में इ० द्वन्द्व समास है। उपदेश-

शब्दः प्रत्येकमभिसम्बद्ध्यते । उपदेशे समुदायानामादितो वर्त्तमाना 'ञि-टु-डु' इत्येते इत्संज्ञा भवन्ति । ञि-ञिमिदा=मिन्नः । ञिधृषा=धृष्टः । ञिक्ष्विदा=क्ष्विण्णः । ञिइन्धी=इद्धः । सर्वत्रेह ञिरित्संज्ञकः । ततो 'ञीतः क्तः' (३-२-१८७) इति क्तप्रत्ययस्तस्य निष्ठासंज्ञायां दान्ताद्धातोः 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' (८-२-४२) इति नत्वम् । षान्तात्तु 'ष्टुना ष्टुः' (८-४-४१) इति निष्ठातकारस्य टकारादेशः । धान्ताद् 'झषस्तथोर्धोऽधः' (८-२-४०) इति तकारस्य धकारः पूर्वधकारस्य च 'झलां जश् झशि' (८-४-५३) इति दकारः । टु-टुवेपृ=(कम्पने) वेपथुः । टुओश्वि= गतिवृद्ध्योः) श्वयथुः । इह 'टु' इत्येतस्येत्संज्ञायां लोपे च वेपादेर्धातोः 'ट्वितोऽथुच्' (३-३-८९) इत्यथुच्-प्रत्ययः । डु डुपचष् (पाके) पक्त्रिमम् । डुवप्=(बीजसन्ताने) उप्त्रिमम् । डुकृञ्-(करणे) कृत्रिमम् । 'डु' इत्येतस्येत्संज्ञायां लोपे च जाते पचादेर्धातोः 'ड्वितः क्त्रिः' (३-३-८८) इति क्त्रिप्रत्ययः, 'क्त्रेर्मम्नित्यम् (४-४-२०) इति मप् च ।

## षः प्रत्ययस्य (१-३-६) -८

उपदेशे प्रत्ययस्यादिः षकार इत्संज्ञो भवति । नर्त्तकी । रजकी । 'शिल्पिनि ष्वुन्' (३-१-१४५) इति नृत्यादिधातोर्विहितस्य ष्वुन्प्रत्ययस्य षकारस्येत्संज्ञायां लोपे च 'युवोरनाकौ' (७-१-१) इति वोरकादेशः । स्त्रियां 'षिद्गौरादिभ्यश्च' (४-१-४१) इति ङीष्प्रत्ययः । वुन्प्रत्ययस्यार्धधातुकसंज्ञायां

---

में समुदाय के आदि में वर्त्तमान ञि, टु, डु शब्दों की इत्संज्ञा होती है । ञि-ञिमिदा (स्नेहने)=मिन्नः । ञिधृषा (प्रागल्भ्ये)=धृष्टः । ञिक्ष्विदा=क्ष्विण्णः । ञिइन्धी (दीप्तौ)=इद्धः । ञि की इत्संज्ञा होने से 'ञीतःक्तः' से क्त प्रत्यय और नत्वादि कार्य होकर उक्त रूप बनें । टु-टुवेपृ (कम्पने)-वेपथुः । टुओश्वि (गतिवृद्ध्योः)-श्वयथुः । 'टु' की इत्संज्ञा होने से 'ट्वितोऽथुच्' से अथुच् प्रत्यय हुआ है । डु-डुपचष् (पाके)—पक्त्रिमम् । डुकृञ् (करणे)—कृत्रिमम् । डुवप् (बीजसन्ताने)-उप्त्रिमम् । 'डु' की इत्संज्ञा होने पर 'ड्वितः क्त्रिः' से क्त्रिप्रत्यय और क्त्रेर्मम्नित्यम्' से मप् प्रत्यय हुआ है ।। ५ ।।

### षः प्रत्ययस्य (१-३-६)

षः १।१। प्रत्ययस्य ६।१। उपदेश में प्रत्यय के आदि षकार की इत्संज्ञा होती है । नर्त्तकी । रजकी । 'शिल्पिनि ष्वुन्' से नृती तथा रञ्ज धातुओं से ष्वुन् प्रत्यय हुआ तो षकार की प्रकृत सूत्र से इत्संज्ञा होने पर

'पुगन्तलघूपधस्य च' (७-३-८६) इत्युपधागुणः। रञ्जेरनुनासिक लोप उपसंख्यायते।

## चुटू (१-३-७)

चुश्च टुश्च=चुटू (इ० द्व०)। उपदेशे प्रत्ययस्यादी चुटू इत्संज्ञौ भवतः। चवर्गः-कौञ्जायनः। 'गोत्रे कुञ्जादिभ्यश्चफञ्' (४-१-९८) इति कुञ्जादिभ्यो विधीयमानस्य च्फञ्प्रत्ययस्यादिचकारस्येत्संज्ञा। ञकारस्य हलन्त्यमितीत्संज्ञा, उभयोर्लोपे, फस्य 'आयनेयी०' (७-१-२) इत्यायनादेशे 'तद्धितेष्वचामादेः' (७-२-११७) इत्युकारस्य वृद्धौ सौ रुत्वविसर्गयोः कौञ्जायन इति। छस्योक्तसूत्रेणैवेयादेशे नेत्संज्ञा। जस्य जसादिस्थस्येत्संज्ञा भवत्येव ब्राह्मणा इति। 'झस्य झोऽन्तः' (७-१-३) इत्यन्तादेशान्नेत्संज्ञा। ञकारस्यापीत्संज्ञा 'शण्डिकादिभ्यो ञ्यः' (४-३-९२) इति ञ्यादिप्रत्ययेषु भवत्येव। तत्र 'यस्येति च' (६-४-१४८) इत्यकारलोपे पूर्ववदाद्यज्वृद्धौ शाण्डिक्य इति। टवर्गः—'चरेष्टः' (३-२-१६) इत्यधिकरणोपपदे चर् (गतिभक्षणयोः) धातोष्टप्रत्यये तस्येत्संज्ञायां लोपे च सति 'टिड्ढाणञ्०' (४-१-१५) इति ङीपि 'कुरुचरी' इति पदमुपपन्नम्। ठस्य 'ठस्येकः' (७-३-५०) इतीकादेशान्नेत्संज्ञा। डस्येत्संज्ञा भवत्येव तेन 'सप्तम्यां जनेर्डः' (३-२-९७) इति विहितस्य डप्रत्यय-

---

वु को अकादेश और स्त्रीलिंग में षिद्गौरदिभ्यश्च' से ङीष् प्रत्यय हुआ। प्रत्ययस्य की अनुवृत्ति ८वें सूत्र तक जाती है॥ ६॥

## चुटू (१-३-७)

चुटू १।२। इ० द्वन्द्व समास है। उपदेश में प्रत्यय के आदि में रहने वाले चवर्ग, टवर्ग वर्णों की इत्संज्ञा होती है। चवर्गः—कौंजायनः। कुञ्जशब्द से गोत्रापत्य में 'कुंजादिभ्यश्चफञ्' से च्फञ् प्रत्यय हुआ। चकार ञकार की इत्संज्ञा, फकारादि को आयनादि आदेश होकर कौंजायनः बना। छकार को ईयादेश होता है, अतः उसकी और झकार को अन्तादेश होने से उसकी भी इत्संज्ञा नहीं होती। ब्राह्मणाः शब्द में ब्राह्मण से प्रथमा बहुवचन में जस् प्रत्यय होने पर जकार की इत्संज्ञा और पूर्वसवर्णदीर्घादिकार्य हुए। शाण्डिक्यः 'शाण्डिकादिभ्योञ्यः' से 'ञ्य' प्रत्यय होने पर ञकार की इत्संज्ञादि होकर इष्टरूप बना। टवर्ग—कुरुषु चरतीति = कुरुचरी। यहाँ पर कुरुउपपद रहते चर (गतिभक्षणयोः) धातु से 'चरेष्टः' से टप्रत्यय हुआ और जब वह टकार इत् हुआ तो 'टिड्ढाणञ्०' सूत्र से स्त्रीलिंग में ङीप् प्रत्यय कुरुचरी रूप बना। ठ को इकादेश 'ठस्येकः' सूत्र से हो गया।

स्थस्य डकारस्य लोपे उपसरजो, मन्दुरज इत्यादि समुपपद्यते। ढस्यैयादेशा-न्नेत्संज्ञा। णस्य तु भवत्येव तेन 'अन्नाण्णः' (४-४-८५) इत्यत्र णकारलोपे 'आन्नम्' इत्यादि पदं सिद्धयति। पृथग्योगकरणमस्य विधेरनित्यत्वज्ञाप-नार्थम्।

## लशक्वतद्धिते (१-३-८)

लशकु। अतद्धिते : लश्च शश्च कुश्च=लशकु (स० द्व०)। न तद्धि-तोऽतद्धितस्तस्मिन् (न० त०)। उपदेशे लकारशकारकवर्गाः अतद्धित प्रत्ययस्या-दितोवर्त्तमाना इत्संज्ञा भवन्ति। चयनम्, जयनम्। 'ल्युट् च' (३-३-११५) इति नपुंसके भावे धातोर्विहितस्य ल्युट्प्रत्ययस्यादिलकारः प्रकृतसूत्रेणेत्संज्ञकः, तस्य लोपे 'युवोरनाकौ' (७-१-१) इति युस्थानेऽनादेशेऽन्त्यस्य हल इतसंज्ञायां लोपे, प्रत्ययस्यार्धधातुकसंज्ञायामंगस्य 'सार्वधातुकार्धधातुकयोः' (७-३-८४) इति गुणेऽयादेशे सौ चयनं जयनमिति। श—भवति, पचति। 'कर्त्तरि शप्' (३-१-६८) इति सार्वधातुके तिपि विहितस्य शपः शकारस्येत्संज्ञायां लोपे च भवति पचतीति। कु—भुक्तः, भुक्तवान्। 'निष्ठा' (३-२-१०२) इति भूतकाले विहितयोः क्तक्तवत्वोरादिककारस्येत्संज्ञायां लोपे च 'चोः कुः' (८-२-३०) इति जकारस्य कुत्वे सौ भुक्तः इति। उपधादीर्घे नुमागमे संयोगान्तलोपे च

---

डकार की इत् संज्ञा 'सप्तम्यांजनेर्डः' से विहित होने पर हुई। ढकार को एयादेश होने से इत्संज्ञा नहीं होती। आन्नम्—यहां पर 'अन्नाण्णः' से विहित णप्रत्यय की इत्संज्ञा होती है ॥ ७ ॥

## लशक्वतद्धिते (१-३-८)

लशकु १।१। अतद्धिते ७।१। पूर्वपद में समाहारद्वन्द्व और उत्तरपद में नञ्तपुरुष समास है। उपदेश में तद्धित से भिन्न प्रत्ययों के आदि में वर्त्तमान लकार् शकार और कवर्गीय वर्ण इत्संज्ञक होते हैं। लकार—चयनम्। जयनम्। चि और जि धातुओं से नपुंसक लिंग भाव में विहित ल्युट् प्रत्यय के लकार की प्रकृतसूत्र से इत्संज्ञा हुई; टकार की 'हलन्त्यम्' से इत्संज्ञा हुई। उनका लोप होने तथा 'यु' को अनादेश और अंग को गुण-अयादेश होने पर नपुंसक सु विभक्ति में चयनम, जयनम् रूप बने। श—भवति। पचति। भू, पच् धातुओं से लट् प्रथम पुरुषैकवचन में तिप् आदेश के बाद जब 'कर्त्तरिशप्' से शप् विकरण हुआ तो उसके शकार की प्रकृत सूत्र से इत्संज्ञा और लोप हुआ। कु—भुक्तः, भुक्तवान्। भुज् धातु से भूतकाल में

भुक्तवानिति। प्रियंवदः, वशंवदः। 'प्रयवशे वदः खच्' (३-२-३८) इति विहितस्य खचः खकारस्येत्संज्ञायां लोपे च 'अरुर्द्विषदजन्तस्य मुम्' (६-३-६७) इति पूर्वपदस्य मुमागमः। ग्लास्नुः, जिष्णुः भूष्णुः। 'ग्लाजिस्थश्च ग्स्नुः' (३-२-१३९) इति विहितस्य ग्स्नुप्रत्ययस्यादिगकारस्येत्संज्ञायां लोपे च रूपाणि। भङ्गुरम् 'भञ्जभासमिदो घुरच्' (३-२-१६१) इति विहितस्य घुरच्प्रत्ययस्यादिघकारस्येत्संज्ञायां लोपे च 'चजोः कुः घिण्यतोः' (७-३-५२) इति कुत्वे क्लीबे सौ रूपम्। वृक्षात्। वृक्षस्य। 'टाङसिङसामिनात्स्याः' (७-१-१२) इति ङकारस्येत्त्वे च सति ङसेरादादेशे वृक्षात्-इति ङसः स्यादेशे वृक्षस्यइति च रूपं साधु।

## तस्य लोपः (१-३-९)

यस्येत्संज्ञा विहिता पूर्वसूत्रेषु तस्य लोपो भवति। उदाहरणानि तत्र स्थान्येवेहापि।

## यथासंख्यमनुदेशः समानाम् (१-३-१०)

यथासंख्यम्। अनुदेशः। समानाम्। यथासंख्यमिति संख्यामनतिक्रम्य यथाक्रममित्यर्थः। 'अव्ययं विभक्ति०' (२-१-६) इत्यव्ययीभावसमासः। अनुदेशः पश्चादुच्चारणम्। समानां समं पठितानामुद्देशिनामनुदेशिनां च

---

क्त, क्तवतु प्रत्यय हुए तो ककार की इत्संज्ञा और लोप होने तथा जकार को कुत्वादेश होने पर ये रूप बने। प्रियंवदः, वशंवदः। यहाँ 'प्रियवशेवदः खच्' से वदधातु को खच् प्रत्यय तथा खकार की इत्संज्ञा और लोप होने एवं पूर्वपद को मुमागम होने पर ये रूप बने। ग्लास्नुः जिष्णुः, भूष्णुः। यहाँ ग्लै, जि, भू धातुओं से ग्स्नु प्रत्यय और गकार की इत्संज्ञा और लोप हुआ। भङ्गुरम्: भञ्ज धातु से हुए 'घुरच्' प्रत्यय में घकार की इत्संज्ञा और लोप हुआ। वृक्षात्, वृक्षस्य में ङसि, ङस् के ङकार की इत्संज्ञा हुई॥ ८॥

### तस्य लोपः (१-३-९)

तस्य ६।१। लोपः १।१। जिस जिस वर्ण की ऊपर के सूत्रों से इत्संज्ञा की गई, उस उसका लोप होता है। इसके उदाहरण पूर्वोक्त ही हैं॥ ९॥

### यथासंख्यामनुदेशः समानाम् (१-३-१०)

यथासंख्यम्(अ०) अनुदेशः १।१। समानाम् ६।३। 'यथासंख्यम्' अव्ययीभाव समास है। समान संख्या में पठित उद्देशी और अनुदेशियों का सम्बन्ध यथाक्रम होता है। यह परिभाषा सूत्र है। जैसे 'तूदीशलातुर०' इत्यादि

**सम्बन्धो यथाक्रमं भवति। 'तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः' (४-३-९४) इति प्रथमात् तूदीशब्दात् प्रथमो ढक् प्रत्ययस्तेन तौदेय इति। द्वितीयाच्छलातुर शब्दाद् द्वितीयश्छण् प्रत्ययस्तेन शालातुरीय इति। तृतीयाद् वर्मतीशब्दात् तृतीयो ढञ्प्रत्ययस्तेन वार्मतेय इति। चतुर्थात् कूचवारशब्दात् चतुर्थो यक् प्रत्ययस्तेन कौचवार्य इति पदं निष्पन्नम्।**

## स्वरितेनाधिकारः (१-३-११)

**स्वरितेन। अधिकारः। स्वरितेन तन्नामकेन वर्णगुणेन (चिह्नेन[1]) अधिकारो भवति। सूत्रेषु प्रयुक्तं स्वरितगुणयुक्तं वर्णपदरूपमुत्तरत्र सूत्रेषू-पतिष्ठत इत्यर्थः। विनियोगोऽधिकारपदार्थः। अन्वर्थं च निर्वचनम्-अधिकं**

---

सूत्र में प्रातिपदिक और प्रत्यय समान संख्या में पठित हैं। अतः प्रथम तूदी शब्द से प्रथम ढक् प्रत्यय, द्वितीय शलातुर शब्द से द्वितीय छण् प्रत्यय, तृतीय वर्मती से तृतीय ढञ्, चतुर्थ कूचवार से चतुर्थ यक् प्रत्यय होने पर क्रमशः तौदेयः, शालातुरीयः, वार्मतेयः, कौचवार्यः ये शब्द निष्पन्न हुए॥ १०॥

### स्वरितेनाधिकारः (१-३-११)

स्वरितेन १।३। अधिकारः १।१। स्वरित नामक वर्ण के गुण (चिह्न विशेष) से अधिकार (अधिक कार्य) होता है। 'प्रत्ययः (३-१-१) धातोः (३-१-९१), 'ङ्याप्प्रातिपदिकात्' (४-१-१), 'अङ्गस्य' (६-४-१), 'भस्य'

---

१. स्वरितचिह्नमेवात्राभिप्रेतं स्यान्नस्वरितस्वरस्तथात्वे व्यभिचार-दर्शनात्। तथाहि "न धातुलोप आर्धधातुके" (१-१-४) इत्यत्र पठितं नञ्पदमुत्तरत्रानुवर्त्तते किन्तु स्वरितस्वरस्तस्य नैव लक्षणसिद्धः। "इको यणचि" (६-१-७७) इत्यतोऽचिपदमुत्तरत्रानुकृष्यते परं तस्यादेः स्वरितस्वरः पाणिनीयसूत्रैरसिद्ध एव। एवमेव "रषाभ्यां नो णः समानपदे" (८-४-१) इत्यत्र नकारस्याधिकृतत्वात्स्वरितत्वं प्राप्नोति तेन च 'अचश्च' (१-३-२८) इति परिभाषयोक्तार्थस्याचारितार्थ्यं दोषः सूत्रकारोपर्य्यापततीति। अतएव "स्वरितेन चिह्नेनाधिकारस्योप-लक्षणीयत्वात् स इह हल्स्वपि स्वरितासञ्जनाद् विज्ञायते।" इति न्यासीयपाठोऽपि स्वरितचिह्नस्योपोद्बलकः संगच्छते। एत देवानु-सृत्याऽस्माभिरपीह ग्रन्थे सूत्रकाराभिप्रायव्यञ्जका अधिकाराः स्वरित-चिह्नेनोपदर्शिताः।

कार्यम्, अधिकः कारः²=अधिकारः इति । 'प्रत्ययः' (३-१-१), 'धातोः (३-१-९१), 'ङ्याप्रातिपदिकात्' (४-१-१), 'अङ्गस्य' (६-४-१), 'भस्य' (६-४-१२९) 'पदस्य' (८-१-१६), इति । कियन्तमवधिमधिकारोऽनुवर्त्तते ? इत्येतत्तु व्याख्यानतोऽवबोध्यम् ।

### अनुदात्तङित आत्मनेपदम् (१-३-१२) -७७

अनुदात्तङितः । आत्मनेपदम् । अनुदात्तश्च ङ् चानुदात्तङौ (इ० द्व०) तावितौ यस्य सोऽनुदात्तङित् तस्मात् (बहुव्रीहिः) । अनुदात्तेतो ङितश्च धातोरात्मनेपदं[3] भवति । धातोरविशेषण विधास्यमानेषु परस्मैपदात्मनेपद-प्रत्ययेषु नियमोऽनेन क्रियते । अनुदात्तेत्-आस (उपवेशने) आस्ते । वस (आच्छादने)-वस्ते । ङित् षूङ् (प्राणिगर्भ विमोचने)-सूते । शीङ् (शये)-शेते । 'कार्यकालं संज्ञापरिभाषम्' इति वचनात् 'तङानावात्मनेपदम्' (१-४-१००) इत्यत्रोपस्थितं द्रष्टव्यम् । टित आत्मनेपदानां टेरे' (३-४-७९) इत्येत्वम् । धात्वादेः षः सः' (६-१-६४) इति सत्वम् 'शीङः सार्वधातुके गुणः' (७-४-२१) इति गुणे शेते इति ।

---

(६-४-१२९) 'पदस्य' (८-१-१६) इत्यादि सूत्र अधिकार सूत्र कहे जाते हैं; क्योंकि इनका कार्यक्षेत्र अधिक होता है। किस सूत्र का अधिकार या अनुवृत्ति कहाँ तक रहेगी, इसे व्याख्या से समझा जा सकता हैवह समान विषय के परिवर्तित होने पर नहीं रहते । ॥ ११ ॥

### अनुदात्तङित आत्मनेपदम् (१-३-१२)

अनुदात्तङितः ५।१। आत्मनेपदम् १।१। पूर्वपद में द्वन्द्व गर्भ बहुव्रीहि समास है। जिस धातु का अनुदात्त स्वर और ङकार इत्संज्ञक हो, उससे आत्मनेपद संज्ञक (तङ् और आन) प्रत्यय होते हैं। अनुदात्तेत्-आस-आस्ते, वस-वस्ते। ङित्-षूङ्-सूते। शीङ्-शेते। यहाँ 'त' प्रत्यय के आत्मनेपद संज्ञक होने से उसके 'टि' अंश को 'टित आत्मनेपदानां टेरे' से एत्वादेश हो गया। 'आत्मनेपदम्' का अधिकार ७७वें सूत्र तक जाता है ॥ १२ ॥

---

२. महाभाष्यम् (१-३-११) ।

३. सामर्थ्याद्धातोरितिसम्बध्यते। आत्मनेपदसंज्ञको तङानौ हि लकाराणामा-देशौ ते च लकारा धातुतो विहिता इति ।

## भावकर्मणोः (१-३-१३)

भावश्च कर्म च भावकर्मणी तयोः (इ० द्व०)। भावे कर्मणि चात्मनेपदं भवति। भावे-ग्लायते भवता। सुप्यते भवता। आस्यते भवता। कर्म्मणि-क्रियते कटः। ह्रियते भारः। कर्मकर्त्तरि लूयते केदारः स्वयमेव। 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३-४-६९) इति भावकर्मणोर्विहितानां लकाराणां सामान्येन तिबादय आदेशा विधास्यन्ते, तत्रायं नियमः क्रियते। तत्र च भावकर्मवाचिनि प्रत्यये परतः शबपवादः 'सार्वधातुके यक्' (३-१-६७) इति यक् प्रत्ययो भवति धातोः। कित्वं गुणादिप्रतिषेधार्थम्। क्रियते, ह्रियते-इत्यत्र 'रिङ् शयग्लिङ्क्षु' (७-४-२८) इत्यंगस्यर्कारस्य रिङादेशो बोध्यः।

## कर्त्तरि कर्मव्यतिहारे (१-३-१४) -१६

कर्मणो[1] व्यतिहारः कर्मव्यतिहारस्तस्मिन् (ष० त०)। यत्रान्यसम्बन्धिनीं क्रियामन्यः करोतीतरसम्बन्धिनीं चेतरः स कर्मव्यतिहारः क्रियाविनिमय इति यावत्। तत्र कर्त्तरि धातोरात्मनेपदं भवति व्यतिलुनते। व्यतिपुनते। व्यती उपसर्गौ व्यतिहारार्थद्योतकौ। तत्पूर्वकाभ्यां लूपूधातुभ्यां कर्त्तरि वर्त्तमाने

---

### भावकर्मणोः (१-३-१३)

भावकर्मणोः ७।२। यहाँ इ० द्वन्द्व समास है। भाव तथा कर्म की विवक्षा में धातु से आत्मनेपद प्रत्यय होते हैं। भाव में—ग्लायते भवता। सुप्यते भवता। आस्यते भवता। कर्म में—क्रियते कटः। ह्रियते भारः। कर्मकर्त्ता में—लूयते केदारः स्वयमेव। 'लः कर्मणि च०' इत्यादि सूत्र से सामान्य रूप से जो तिबादि लादेश विहित होते हैं, उनके सम्बन्ध में यह नियम सूत्र है। भाव तथा कर्मवाची तङ्-आन प्रत्ययों के परे रहते धातु से शप् आदि विकरण का अपवाद 'सार्वधातुके यक्' से यक् प्रत्यय होता है॥ १३॥

### कर्त्तरि कर्मव्यतिहारे (१-३-१४)

कर्त्तरि ७।१। कर्मव्यतिहारे ७।१। उत्तरपद में षष्ठीतत्पुरुष समास है। जहाँ एक दूसरे के कार्य को एक दूसरे करें, उसे कर्मव्यतिहार कहते हैं। वह क्रियाविनिमय भी कहलाता है। उसमें धातु के कर्त्ता में रहते हुए भी उससे आत्मनेपद प्रत्यय होते हैं। व्यतिलुनते, व्यतिपुनते। यहाँ व्यतिहार

---

१. कर्मेत्यकृत्रिमस्य ग्रहणं न तु कृत्रिमस्य (पारिभाषिकस्य) कर्त्तुरीप्सिततमं कर्म (१-४-४९) इत्यस्य।

लटि प्रत्यये परतः 'क्र्यादिभ्यः श्ना' (३-१-८१) इति श्नाविकरणे कृते शिति 'प्वादीनां ह्रस्वः' (७-३-८०) इति ह्रस्वे, 'आत्मनेपदेष्वनतः' (७-१ ५) इति झस्यादादेशे तस्य 'सार्वधातुकमपित्' (१-२-७) इति ङित्वात् 'श्नाभ्यस्तयोरातः' (६-४-११२) इत्याकारलोपे टेरेत्वे च सिद्धे रूपे ।

## न गतिहिंसार्थेभ्यः (१-३-१५) -१६

गतिश्च हिंसा च गतिहिंसे (इ० द्व०), तेऽर्थे येषां ते गतिहिंसार्थास्तेभ्यः (बहु०) । गत्यर्थेभ्यो हिंसार्थेभ्यश्च धातुभ्यः कर्मव्यतिहारे आत्मनेपदं न भवति । गत्यर्थेभ्यः—व्यतिगच्छन्ति । व्यतिसर्पन्ति । हिंसार्थेभ्यः—व्यतिहिंसन्ति । व्यतिघ्नन्ति । 'इषुगमियमां छः' (७-३-७७) इति गमेर्मकारस्य छकारः । 'इदितो नुम्धातोः' (७-१-५८) इति हिंसेर्नुमागमः । व्यतिघ्नन्तीत्यत्र हनो 'गमहनजनखनघसां लोपः क्ङित्यनङि' (६-४-९८) इत्युपधालोपः, 'हो हन्तेर्ञ्णिन्नेषु' (७-३-५४) इति हस्य घत्वम् ।

(वा० १)—प्रतिषेधे हसादीनामुपसंख्यानम् । व्यतिहसन्ति, व्यतिजल्पन्ति, व्यतिपठन्ति । (वा० २)—हरतेरप्रतिषेधः संप्रहरन्ते राजानः ।

## इतरेतरान्योन्योपपदाच्च (१-३-१६)

इतरेतरान्योन्योपपदात् । च । इतरश्चेतरश्च=इतरेतरम् (स० द्व०) अन्यश्चान्यश्च-अन्योन्यम् (स० द्व०) निपातनादोत्वम् । इतरेतरञ्चान्योन्यञ्च

---

के द्योतक वि+अति=व्यती उपसर्ग है, कर्त्ता के द्योतक लू-पू धातुओं से श्ना विकरण है । और लट् प्रथम पुरुषैकवचन के त के टि भाग को एत्वादेश हो गया । कर्मव्यतिहारे की अनुवृत्ति १६ वें सूत्र तक जाती है ॥ १४ ॥

### न गतिहिंसार्थेभ्यः (१-३-१५)

न (अ०) गतिहिंसार्थेभ्यः ५।३ । उत्तर पद में द्वन्द्व गर्भ बहुव्रीहि समास है । गत्यर्थक और हिंसार्थक धातुओं से कर्मव्यतिहार में आत्मनेपद नहीं होता । गत्यर्थ—व्यतिगच्छन्ति । व्यतिसर्पन्ति । हिंसार्थक-व्यतिहिंसन्ति । व्यतिघ्नन्ति । यहाँ से 'न' की अनुवृत्ति १६ वें सूत्र तक जाती है ॥ १५ ॥

### इतरेतरान्योन्योपपदाच्च (१-३-१६)

इतरेतरान्योन्योपपदात् १।३ । च (अ०) इतरे० में द्वन्द्वगर्भ बहुव्रीहि समास है । इतरेतर उपपद और अन्योन्य शब्द जिस धातु के उपपद हों,

=इतरेतरान्योन्यम् (स० द्व०) तदुपपदं[2] यस्य स इतरेतरान्योन्योपपद-स्तस्मात् (बहु०)। इतरेतरोपपदाद् अन्योन्योपपदाच्च धातोः कर्मव्यतिहारे आत्मनेपदं न भवति। इतरेतरस्य व्यतिलुनन्ति। अन्योन्यस्य व्यतिलुनन्ति।

(वा०)—परस्परोपपदाच्चेति वक्तव्यम्। परस्परस्य व्यतिलुनन्ति।

## नेर्विशः (१-३-१७)

नेः। विशः। न्युपसर्गात् परस्माद् विश (प्रवेशने) धातोरात्मनेपदं भवति। निविशते, निविशन्ते। 'शेषात् कर्त्तरि परस्मैपदम्' (१-३-७८) इति प्राप्ते आत्मनेपदविधानम्।

## परिव्यवेभ्यः क्रियः (१-३-१८)

परिश्च विश्चावश्च परिव्यवास्तेभ्यः (इ० द्व०)। एतेभ्य उपसर्गेभ्यः परस्मात् डुक्रीञ् (द्रव्यविनिमये) धातोरात्मनेपदं भवति। परिक्रीणीते। विक्रीणते। अवक्रीणीते। 'ई हल्यघोः' (६-४-११३) इति श्नाप्रत्ययस्येकारा-देशः।

---

उससे कर्मव्यतिहार में आत्मनेपद नहीं होता। इतरेतरस्य व्यतिलुनन्ति। अन्योन्यस्य व्यतिलुनन्ति। वार्त्तिक काल से परस्परस्य व्यतिलुनन्ति भी सिद्ध होता है।

## नेर्विशः (१-३-१७)

नेः ५।१। विशः ५।१। निपूर्वक विश धातु से आत्मनेपद होता है। निविशते, निविशन्ते ॥ १७ ॥

## परिव्यवेभ्यः क्रियः (१-३-१८)

परिव्येभ्यः ५।३। क्रियः ५।१। परिव्यवेभ्यः में इ० द्वन्द्व समास है। परि, वि, अव उपसर्गों से परे क्री (डुक्रीञ् =द्रव्यविनिमये) धातु से आत्मनेपद प्रत्यय होते हैं। परिक्रीणीते। विक्रीणीते। अवक्रीणीते। 'क्र्यादिभ्यः श्ना' से सार्व-धातुक विषय में शबपवाद श्ना विकरण तथा 'ई हल्यघोः' से श्ना के आकार को ईकारादेश होकर ; अट्कुप्वाङ्० इत्यादि से णत्व, एवं 'त' के टि को एत्वादेश होकर परिक्रीणीते इत्यादि रूप निष्पन्न हुए ॥ १८ ॥

---

२. उपपदमिति योगिकोऽर्थ उपोच्चारितमुपपदमिति न तु रूढः पारिभाषिको वा 'तत्रोपपदं सप्तमीस्थम्' (३-१-९२) इति।

### विपराभ्यां जेः (१-३-१९)

विश्च परश्च विपरी ताभ्याम् (इ० द्व०) विपरोपसर्गादुत्तरस्माज्जि (जये) धातोरात्मनेपदं भवति। विजयते। पराजयते।

### आङो दोऽनास्यविहरणे (१-३-२०) -२१

आङः। दः। अनास्यविहरणे। आस्यस्य विहरणम्=आस्यविहरणम् (ष० त०) नआस्यविहरणम्=अनास्यविहरणम्, तस्मिन् (न० त०)। आङ्-पूर्वकाद् ददातेरनास्यविहरणे वर्तमानादात्मनेपदं भवति। विद्यामादत्ते। डुदाञ् (दाने) धातोर्लटि ते 'जुहोत्यादिभ्यः श्लुः' (२-४-७५) इति शपः श्लौ, 'श्लौ' (६-१-१०) इति द्वित्वे, 'पूर्वोऽभ्यासः' (६-१-४) इति कृतद्विर्वचनस्य पूर्वावयवस्याभ्याससंज्ञायां तस्य 'ह्रस्वः' (७-४-५९) इति ह्रस्वे, अकारलोपे 'खरि च' (८-४-५५) इति दकारस्य तकारे टेरेत्वे च 'आदत्ते' इति पदं साधु।

(वा० १) आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः। विपादिकां व्याददाति, कूलं व्याददाति। (वा० २) स्वाङ्गकर्मकाच्चेति वक्तव्यम्। इह मा भूत्—व्याददते पिपीलिकाः पतंगस्य मुखम्।

### क्रीडोऽनुसंपरिभ्यश्च (१-३-२१)

क्रीडः। अनुसम्परिभ्यः च। अनुश्च सञ्च, परिश्च अनुसम्परयस्तेभ्य

---

#### विपराभ्यां जेः (१-३-१९)

विपराभ्याम् ५।२। जेः ५।१। विपराभ्याम् में इ० द्वन्द्व समास है। वि, परा उपसर्गपूर्वक जिधातु से आत्मनेपद होता है। विजयते। पराजयते ॥ १९ ॥

#### आङो दोऽनास्यविहरणे (१-३-२०)

आङः ५।१। दः ५।१। अनास्यविहरणे ७।१। अनास्य० में षष्ठीतत्पुरुष-गर्भ नञ्तत्पुरुष समास है। 'आङ्' उपसर्ग पूर्वक दानार्थक दा धातु से आस्य-विहरण (मुख खोलने) अर्थ से भिन्न अर्थ में आत्मनेपद प्रत्यय होता है। विद्यामादत्ते (अर्थात् विद्या को ग्रहण करता है।) दा धातु के जुहोत्यादि गणपठित होने से शप् का श्लु, द्विर्वचन, अभ्यास कार्यादि होकर लट् प्रथम पुरुषैकवचन में टि को एत्व होकर आदत्ते रूप बना। आङ् की अनुवृत्ति २१वें सूत्र में भी जाती है ॥ १२१ ॥

#### क्रीडोऽनुसम्परिभ्यश्च (१-३-२१)

क्रीडः ५।१। अनुसम्परिभ्यः ५।३। च (अ०)। अनुसम्परिभ्यः में इ०द्वन्द्व

(इ० द्व०)। अनुसंपर्युपसृष्टात् आङ्पूर्वाच्च क्रीड् (विहारे) धातोरात्मनेपदं भवति। अनुक्रीडते। संक्रीडते। परिक्रीडते। आक्रीडते।

(वा० १)—समोऽकूजने इति वक्तव्यम्। संक्रीडन्ति शकटानि (वा० २)—आगमेः क्षमायामात्मनेपदं वक्तव्यम्। क्षमा उपेक्षा, कालहरणमिति यावत्। आगमयस्व तावन्माणवकम्। (वा० ३)—शिक्षेर्जिज्ञासायाम्। विद्यासु शिक्षते। (वा० ४)—आशिषि नाथः। सर्पिषो नाथते, मधुनो नाथते। (वा० ५)—हरतेर्गतिताच्छील्ये। पैतृकमश्वा अनुहरन्ते, मातृकं गावोऽनुहरन्ते। (वा० ६)—किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्। हर्षे—अपस्किरते वृषभो हृष्टः। जीविकायाम्—अपस्किरते कुक्कुटो भक्षार्थी। कुलायकरणे—अपस्किरते श्वाऽऽश्रयार्थी। (वा० ७)—आङि नुप्रच्छ्योरुपसंख्यानम्। आनुते शृगालः, आपृच्छते गुरुम्। (वा० ८)—शप उपलम्भन इति वक्तव्यम्। वाचा शरीरस्पर्शनमुपलम्भनम्। देवदत्ताय शपते, यज्ञदत्ताय शपते।

### समवप्रविभ्यः स्थः (१-३-२२) -२६

सञ्चावश्च प्रश्च विश्च समवप्रवयस्तेभ्यः (इ० द्व०)। समादिपूर्वात् ष्ठा (गतिनिवृत्तौ) धातोरात्मनेपदं भवति। सन्तिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते।

(वा०)—आङः स्थः प्रतिज्ञान इति वक्तव्यम्। अस्तिं सकारमातिष्ठते। आगमौ गुणवृद्धी आतिष्ठते।

### प्रकाशनस्थेयाख्ययोश्च (१-३-२३)

प्रकाशनस्थेयाख्ययोः। च। प्रकाशनं च स्थेयाख्या च=प्रकाशनस्थेयाख्ये,

---

समास है। क्रीड खेलनार्थक धातु से अनु, सम्, परि, आङ् उपसर्ग पूर्व होने पर आत्मनेपद होता है। अनुक्रीडते। संक्रीडते। परिक्रीडते। आक्रीडते ॥ २१ ॥

**समवप्रविभ्यः स्थः (१-३-२२)**

समवप्रविभ्यः ५।३। स्थः ५।१। सम्, अव, प्र, वि पूर्वक स्था धातु से आत्मनेपद होता है। सन्तिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते। यहाँ से 'स्था' की अनुवृत्ति २६वें सूत्र तक जाती है ॥ २२ ॥

**प्रकाशनस्थेयाख्ययोश्च (१-३-२३)**

प्रकाशनस्थेयाख्ययोः ७।१। च (अ०)। प्रकाशन० इत्यादि में इ० द्वन्द्व

तयोः (इ० द्व०)। स्वाभिप्रायकथनं प्रकाशनम्। विवादपदनिर्णेतुराख्या। तत्र वर्त्तमानात् स्थाधातोरात्मनेपदं भवति। प्रकाशने – तिष्ठते कन्या छात्रेभ्यः। तिष्ठते वृषली ग्रामपुत्रेभ्यः। स्थेयाख्यायाम्—त्वयि तिष्ठते। मयि तिष्ठते।

### उदोऽनूर्ध्वकर्मणि (१-३-२४)

उदः। अनूर्ध्वकर्मणि। उर्ध्वं च तत्कर्म चोर्ध्वकर्म (क० धा०)। नोर्ध्वकर्मानूर्ध्वकर्म (न०त०)। अनूर्ध्व कर्मणि वर्तमानाद् उत्पूर्वकस्थाधातोरात्मनेपदं भवति। कर्मशब्दोऽत्र क्रियावाची। गेहे उत्तिष्ठते। कुटुम्बे उत्तिष्ठते। तदर्थं यतत इत्यर्थः।

(वा०) उद ईहायामिति वक्तव्यम्। इह मा भूत्। अस्माद् ग्रामात् शतमुत्तिष्ठति। शतमुत्पद्यत इत्यर्थः।

### उपान्मन्त्रकरणे (१-३-२५) -२६

उपात्। मन्त्रकरणे। मन्त्रस्यकरणं मन्त्रकरणं तस्मिन् (ष० त०)। मन्त्रद्वारेणानुष्ठानं। मन्त्रकरणं तस्मिन् गम्यमाने उपपूर्वात् स्थाधातोरात्मनेपदं भवति। ऐन्द्र्या गार्हपत्यमुपतिष्ठते। आग्नेय्या आग्नीध्रमुपतिष्ठते। 'सास्य देवता' (४-२-२४) इतीन्द्रशब्दादणि, अग्नेर्ढक् (४-२-३३) इत्यग्नि-

---

समास है। अपने अभिप्राय को कहना प्रकाशन, तथा विवादपद के निर्णायक का कथन स्थेयाख्या कहलाती है। प्रकाशन तथा स्थेयाख्या में विद्यमान स्था धातु से आत्मनेपद प्रत्यय होता है प्रकाशन—तिष्ठते कन्या छात्रेभ्यः। तिष्ठते वृषली ग्रामपुत्रेभ्यः। स्थेयाख्या त्वयि तिष्ठते। मयि तिष्ठते॥ २३॥

### उदोऽनूर्ध्वकर्मणि (१-३-२४)

उदः ५।१। अनूर्ध्वकर्मणि ७।१। अनूर्ध्व० इत्यादि में कर्मधारयगर्भ-नञ्तत्पुरुष समास है। उठने (खड़े होने) के अर्थ से भिन्न अर्थ में स्था धातु से आत्मनेपद होता है। गेहे उत्तिष्ठते। कुटुम्बे उत्तिष्ठते। अर्थात् घर/कुटुम्ब के लिये यत्न करता है॥ २४॥

### उपान्मन्त्रकरणे (१-३-२५)

उपात् ५।१। मन्त्रकरणे ७।१। मन्त्रकरणे में षष्ठी तत्पुरुष समास है। मन्त्रोच्चारण द्वारा किया जाने वाला अनुष्ठान मन्त्रकरण कहलाता है। मन्त्रकरण अर्थ गम्यमान होने पर उपपूर्वक स्था धातु से आत्मनेपद होता है। ऐन्द्र्या गार्हपत्यमुपतिष्ठते। आग्नेय्या आग्नीध्रमुपतिष्ठते। यहाँ ऐन्द्री और

शब्दाच्च ढकि आद्यज्वृद्धौ, ढस्यैयादेशे, 'टिड्ढाणञ्०' (४-१-१५) इति ङीपि ऐन्द्री (ऋक्), आग्नेयीति शब्दौ सिद्धौ। इन्द्रदेवताकामग्निदेवताकामृचं पठित्वा गार्हपत्यादिकमग्निमुपतिष्ठत इत्यर्थः।

(वा० १)—उपाद्देवपूजासंगतिकरणमित्रीकरणपथिष्विति वक्तव्यम्। देवपूजायाम्—आदित्यमुपतिष्ठते। संगतिकरणे—रथिकानुपतिष्ठते। मित्रीकरणे—महामात्रानुपतिष्ठते। पथि—अयं पन्थाः स्रुघ्नमुपतिष्ठते। (वा० २)—वा लिप्सायामिति वक्तव्यम्। भिक्षुको ब्राह्मणकुलमुपतिष्ठते, उपतिष्ठतीति वा।

### अकर्मकाच्च (१-३-२६) -२६

अकर्मकात्। च अविद्यमानं कर्म यस्य तदकर्मकं, तस्मात् (बहुव्रीहिः)। अकर्मकक्रियावाचिन उपपूर्वकस्थाधातोरात्मनेपदं भवति। यावद्भुक्तमुपतिष्ठते। यावदोदनमुपतिष्ठते। भुक्तमिति 'नपुंसके भावे क्तः' (३-३-११४) क्तप्रत्ययः।

### उद्विभ्यां तपः (१-३-२७)

उच्च विश्च उद्वी, ताभ्याम् (इ० द्व०) उद्विपूर्वात् तप (सन्तापे) धातोरकर्मकक्रियावचनादात्मनेपदं भवति। उत्तपते। वितपते। दीप्यते इत्यर्थः।

(वा०)—स्वांगकर्मकाच्चेति वक्तव्यम्। उत्तपते पाणिम्। वितपते पाणिम्। उत्तपते पृष्ठम्। वितपते पृष्ठम्।

---

आग्नेयी क्रमशः इन्द्रदेवता वाली और अग्निदेवता वाली ऋचा के विशेषण शब्द हैं, उनसे गार्हपत्य और आग्नीध्र अग्नि का उपस्थान करने के ये उदाहरण हैं। यहाँ से उपशब्द की अनुवृत्ति २६वें सूत्र तक जाती है ॥२५॥

**अकर्मकाच्च (१-३-२६)**

अकर्मकात् ५।१। च (अ०)। अकर्मकात् शब्द में बहुव्रीहि समास है। अकर्मक क्रियावाची उपपूर्वक स्था धातु से आत्मनेपद होता है। यावद्भुक्तमुपतिष्ठते। यावदोदनमुपतिष्ठते। अर्थात् जब तक भोजन है, जब तक भात है—तब तक उपस्थित रहता है। अकर्मकात् की अनुवृत्ति २६ वें सूत्र तक जाती है॥ २६॥

**उद्विभ्यां तपः (१-३-२७)**

उद्विभ्याम् ५।२। तपः ५।१। उद्विभ्याम् में इ० द्वन्द्व समास है। उद् और वि पूर्वक तप धातु से, जो कि अकर्मक हो आत्मनेपद होता है। उत्तपते। वितपते। अर्थात् चमकता है॥ २७॥

## आङो यमहनः (१-३-२८)

आङः । यमहनः । यमश्च हन् च यमहन् तस्मात् (स० द्व०) । आङ्-पूर्वकाभ्यां यमहनधातुभ्यामकर्मकाभ्यामात्मनेपदं भवति । आयच्छते । आयच्छेते । आयच्छन्ते । आहते । आघ्नाते । आघ्नते । 'इषुगमियमां छः' (७-३-७७) इति यमः (उपरमार्थस्य) मकारस्य छकारादेशः । 'छे च' इति तुगागमः । श्चुत्वे तस्य चः । आघ्नाते इति हन् (हिंसागत्योः) धातोराताम्परतो 'गमहन-जनखनघसां लोपः क्ङित्यनङि' (६-४-९८) इत्युपधालोपे 'हो हन्तेर्ञ्णिन्नेषु' (७-३-५४) इति हस्य घत्वम् ।

(वा०)—स्वांगकर्मकाच्चेति वक्तव्यम् । आयच्छते पाणिम् । आहते शिरः ।

## समो गम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिभ्यः (१-३-२९)

समः । गम्यृच्छि ······ विदिभ्यः । गमिश्च ऋच्छिश्च प्रच्छिश्च स्वरतिश्च अर्तिश्च श्रुश्च विदिश्च गम्यृश्छ······विदयस्तेभ्यः (इ० द्व०) सम्पूर्व-काद् गम्यादेर्धातोरकर्मकादात्मनेपदं भवति । संगच्छते । समृच्छते । संपृच्छते । संस्वरते । सङ्कल्पा अस्य समरन्त । संश्रृणुते । संवित्ते । 'पाघ्राध्मा०' (७-३-७८) इति सूत्रेण शितिपरतोऽर्त्तेः (गत्यर्थस्य) ऋच्छादेशे समृच्छत इति । समुपसृष्टादर्त्तेरेव लुङि झे झस्यान्तादेशे च्लौ, च्लेः 'सर्त्तिशास्त्यर्त्तिभ्यश्च' (३-१-५६) इत्यङादेशे 'बहुलं छन्दस्यमाङ्योगेऽपि' (६-४-७५) इत्याडागमा-भावे समरन्तेति । श्रु (श्रवणे) धातोः सम्पूर्वात् 'श्रुवः श्रृ च' (३-१-७४) इति

---

### आङो यमहनः (१-३-२८)

आङः ५।१ । यमहनः ५।१ । यमहनः में स० द्वन्द्व समास है । आङ्पूर्वक अकर्मक यम और हन धातुओं से आत्मनेपद होता है। आयच्छते, आयच्छेते, आयच्छन्ते । आहते, आघ्नाते, आघ्नते । प्रथम क्रियापदों को फैलाने अर्थ में और द्वितीय को टकराने अर्थ में समझना चाहिये ।। २८ ।।

### समो गम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिभ्यः (१-३-२९)

समः ५।१ । गम्यृच्छि···विदिभ्यः ५।३ । गम्यृच्छि० इत्यादि में इ० द्वन्द्व समास है । सम् पूर्वक अकर्मक गम्, ऋच्छ्, पृच्छ्, स्वृ, ऋ, श्रु और विद् धातुओं से आत्मनेपद होता है । संगच्छते । समृच्छते । संपृच्छते । संस्वरते । सङ्कल्पा अस्य समरन्त । संशृणुते । संवित्ते । यहाँ 'इषुगमि यमां छः' से गम् को छकारान्तादेश होकर संगच्छते, 'पाघ्रा०' इत्यादि से ऋ धातु को ऋच्छा-

'शृ' आदेशः श्नुश्च विकरणः । संवित्ते इति विदः=(ज्ञाने आदादिकस्य लुग्विकरणस्य रूपम् ।

(वा०)—दृशेश्चेति वक्तव्यम् । सम्पश्यते ।

निसमुपविभ्यो ह्वः (१-३-३०) -३१

निसमुपविभ्यः । ह्वः । निश्च सञ्च उपश्च विश्च निसमुपवयस्तेभ्यः (इ० द्व०) । न्यादिपूर्वकाद् ह्वयतेः (स्पर्धाशब्दार्थस्य) धातोरात्मनेपदं भवति । निह्वयते । संह्वयते । उपह्वयते । विह्वयते ।

(वा०) —उपसर्गादस्यत्यूह्योर्वा वचनम् । निरस्यति, निरस्यते । समूहते, समूहति ।

स्पर्द्धायामाङः (१-३-३१)

स्पर्द्धायाम् । आङः । स्पर्धार्थे वर्त्तमानादाङ्पूर्वकह्वयतेर्धातोरात्मनेपदं भवति । मल्लो मल्लमाह्वयते । छात्रश्छात्रमाह्वयते । स्पर्द्धमानस्तस्याह्वानं करोतीत्यर्थः ।

गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः (१-३-३२) -३५

गन्धनञ्च अवक्षेपणञ्च सेवनञ्च साहसिक्यञ्च प्रतियत्नश्च प्रकथनञ्च उपयोगश्च गन्धनावक्षेपण ·····उपयोगास्तेषु (इ० द्व०) । गन्धनाद्यर्थेषु

---

देश होकर समृच्छते और 'श्रुवः शृ च' से श्रु के शृ आदेश होकर संशृणुते रूप निष्पन्न हुए हैं ।। २९ ।।

निसमुपविभ्यो ह्वः (१-३-३०)

निसमुपविभ्यः ५।३। ह्वः ५।१। निसमुप० में इ० द्वन्द्व समास है । नि, सम्, उप, वि पूर्वक ह्वेञ् (स्पर्धा शब्दार्थक) धातु से आत्मनेपद होता है । निह्वयते । संह्वयते । उपह्वयते । यहां से 'ह्वः' की अनुवृत्ति ३१ वें सूत्र तक जाती है ।। ३० ।।

स्पर्द्धायामाङः (१-३-३१)

स्पर्द्धायाम् ७।१ । आङः ५।१ । स्पर्द्धा अर्थ में वर्त्तमान आङ्पूर्वक ह्वेञ् धातु से आत्मनेपद होता है । मल्लो मल्लमाह्वयते । छात्रश्छात्रमाह्वयते ।

गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः (१-३-३२)

गन्धनावक्षेपण···प्रकथनोपयोगेषु ७।३ । कृञः ५।१ । गन्धन० इत्यादि में इ० द्वन्द्व समास है । गन्धन, अवक्षेपण, सेवन, साहसिक्य, प्रतियत्न,

वर्त्तमानात् करोतेर्धातोरात्मनेपदं भवति । गन्धने-उत्कुरुते, उदाकुरुते-सूचयतीत्यर्थः । अवक्षेपणे श्येनोवर्त्तिकामुदाकुरुते-भर्त्सयतीत्यर्थ । सेवने-गणकानुपकुरुते, महामात्रानुपकुरुते-सेवते इत्यर्थः । साहसिक्ये-परदारान् प्रकुरुते तेषु सहसा प्रवर्त्तते इत्यर्थः । प्रतियत्ने एधोदकस्योपस्कुरुते; काण्डं गुडस्योपस्कुरुते । तस्य सतो गुणान्तराधानं करोतीत्यर्थः । षष्ठीसुटौ करोतेः प्रतियत्न एव विधीयेते । प्रकथने-गाथः प्रकुरुते । जनापवादान प्रकुरुते प्रकर्षेण कथयतीत्यर्थः । उपयोगे-शतं प्रकुरुते, सहस्रं प्रकुरुते-धर्मार्थं शत विनयुङ्क्त इत्यर्थः । कुरुते इति कृञस्ते-प्रत्यये 'तनादिकृञ्भ्य उः' (३-१-७९) इत्युप्रत्यये तस्मिन् परत ऋकारस्य गुणे रपरत्वे च 'अत उत् सार्वधातुके' (६-४-११०) इत्यकारस्योकारादेशे रूपमिति ।

## अधेः प्रसहने (१-३-३३)

प्रसहने वर्त्तमानादधिपूर्वकात् कृञ आत्मनेपद भवति । प्रसहनमपराजयः । तमधिचक्रे । तमभिबभूव । न तेन पराजित इत्यर्थः । कृञोऽध्युपसृष्टात् परोक्षे लिटि आत्मनेपदे प्रथमपुरुषैकवचने त प्रत्यये तस्य 'लिटस्तझयोरेशिरेच' (३-४-८१) इत्येत्वे, यणादेशे 'लिटि धातोरनभ्यासस्य' (६-१-८) इति 'धातोर्द्वित्वेऽभ्यासकार्ये' 'कुहोश्चुः' (७-४-६२) इति चुत्वे च अधिचक्रे इति । अधिपूर्वाद् भूधातोर्लिटि तिपि 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति णलादेशे 'भुवो वुग् लुङ्लिटोः' (६-४-८८) इति वुगागमे, 'द्वित्वेऽभ्यासकार्ये

---

प्रकथन और उपयोग अर्थों में कृ धातु से आत्मनेपद होता है। गन्धन-उत्कुरुते, उदाकुरुते (=निन्दा करता है)। अवक्षेपण-श्येनो वर्त्तिकामुदाकुरुते (=झपटता है)। सेवन—गणकानुपकुरुते । महामात्रानुपकुरुते । साहसिक्य—परदारान् प्रकुरुते। प्रतियत्न एधोद कस्योपस्कुरुते । काण्डं गुडस्योपकुरुते (=अन्य गुणों का आधान करता है=)। प्रकथन—गाथः प्रकुरुते । जनापवादान् प्रकुरुते (=प्रकर्ष रूप से कहता है)। उपयोग—शतं प्रकुरुते, सहस्रं प्रकुरुते (= सौ का, हजार का विनियोग करता है)। यहाँ से 'कृञः' की अनुवृत्ति ३५ वें सूत्र तक जाती है। कृञ् के ञित् होने से कर्त्रभिप्राय-क्रिया फल आत्मनेपद होता ही था। यह अकर्त्रभिप्राय के लिए है ॥ ३२ ॥

### अधेः प्रसहने (१-३-३३)

अधेः ५।१ । प्रसहने ७।१ । प्रसहन (अपराजय) अर्थ में अधिपूर्वक कृ धातु से आत्मनेपद होता है। तमधिचक्रे। तमभिबभूव। (उसको पराजित किया)। यह विधि भी अकर्त्रभिप्रायार्थ है। अधिचक्रे यह अधिपूर्वक कृञ्

'भवतेरः' (७-४-७३) इति अभ्यासोकारस्य अत्वे, भकारस्य जश्त्वे च अधिबभूवेति साधु ।

### वेः शब्दकर्मणः (१-३-३४) -३५

शब्दः कर्म (कारकम्) यस्य य शब्दकर्मा तस्य (बहुव्रीहिः) । विपूर्वात् कृञः शब्दकर्मण आत्मनेपदं भवति । क्रोष्टा विकुरुते स्वरान् । ध्वाङ्क्षो विकुरुते स्वरान् ।

### अकर्मकाच्च (१-३-३५)

अकर्मकात् । च । विपूर्वकादकर्मकक्रियावचनात् कृञ आत्मनेपदं भवति । विकुर्वते सैन्धवाः (शोभनं वल्गन्ति) । ओदनस्य पूर्णाश्छात्रा विकुर्वते (निष्फलं चेष्टन्ते) 'विकुर्वते' इति विपूर्वककृञो लटि झे 'आत्मनेपदेष्वनतः' (७-१-५) इति झस्य अदादेशः ।

### सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः (१-३-३६) -३७

सम्माननमित्यत्र इतरेतरद्वन्द्वसमासः । सम्माननं =पूजनम् । उत्सञ्जनम् =उत्क्षेपणम् । आचार्यकरणम्=आचार्यक्रिया । ज्ञानं =प्रमेयनिश्चयः

---

धातु का लिट् प्रथमपुरुषैकवचन आत्मनेपद का रूप है ।। ३३ ।।

#### वेः शब्दकर्मणः (१-३-३४)

वेः ५।१ । शब्दकर्मणः ५।१ । शब्दकर्म में बहुव्रीहि समास है । वि पूर्वक कृञ् धातु से शब्द करने अर्थ में आत्मनेपद होता है । क्रोष्टा विकुरुते स्वरान् । ध्वाङ्क्षो विकुरुते स्वरान् । यहाँ से वि की अनुवृत्ति ३५ वें सूत्र तक जाती है ।। ३४ ।।

#### अकर्मकाच्च (१-३-३५)

अकर्मकात् ५।१ । च (अ०) । अकर्मकात् में न० त० समास है । वि पूर्वक अकर्मक कृञ् धातु से आत्मनेपद होता है । विकुर्वते सैन्धवाः । ओदनस्य पूर्णाश्छात्रा विकुर्वते (=बिगड़ जाते हैं) ।

#### सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः (१-३-३६)

सम्माननोत्सञ्जन···व्ययेषु ७।३ । निय ५।१ । सम्मान० इत्यादि में इ० द्वन्द्व समास है । सम्मानन (=पूजन), उत्संजन (=ऊपर को फेंकना),

भृतिः=वेतनम् । विगणनम=ऋणादेर्निर्यातनम् । व्ययः=धर्म्मादिषु विनियोगः । एतेषु सम्माननाद्यर्थेषु णीञ् (प्रापणे) धातोरात्मनेपदं भवति । सम्माननने-नयते चार्वी (बुद्धिराचार्यो वा) लोकायते । उत्सञ्जने-माणवकमुदानयते आचार्यकरणे-माणवकमुपनयते । ज्ञाने-नयते चार्वी लोकायते (तत्र प्रमेयं निश्चिनोतीत्यर्थः) । भृतौ-कर्मकरानुपनयते । विगणने-मन्द्राः करं विनयन्ते । व्यये-शतं विनयते । सहस्रं विनयते ।

## कर्त्तृस्थे चाशरीरे कर्माणि (१-३-३७)

कर्त्तृस्थे । च । अशरीरे । कर्मणि । कर्त्तरि-तिष्ठतीति कर्त्तृस्थस्तस्मिन् (उपपदसमासः) । सुपि स्थः (३-२-४) इति कप्रत्ययः । न शरीरमशरीरं तस्मिन् (न० त०) । कर्त्तृस्थे कर्म्मण्यशरीरे सति नयतेरात्मनेपदं भवति । क्रोधं विनयते । मन्युं विनयते ।

## वृत्तिसर्गतायनेषु क्रमः (१-३-३८) -३९, -४३

वृत्तिश्च सर्गश्च तायनं च वृत्तिसर्गतायनानि तेषु (इ० द्व०) । वृत्तिः=अप्रतिबन्धः । सर्गः=उत्साहः । तायनं=स्फीतता । वृत्यादिष्वर्थेषु क्रमु=

---

आचार्य करण (=आचरण शील बनाना), ज्ञान (=प्रमेय का निश्चय करना), भृति (=वेतन देकर अधीनस्थ करना), विगणन (=ऋणादि को चुकाना), व्यय (=धर्म, इत्यादि कार्यों में लगाना) अर्थों में 'नी' धातु से आत्मनेपद होता है । सम्मानन—नयते चर्वी लोकायते । उत्संजन—माणावकमुदानयते । आचार्यकरण—माणावकमुपनयते । ज्ञान—नयते चार्वी लोकायते । भृति—कर्मकरानुपनयते । विगणन—मन्द्राः करं विनयन्ते । व्यय—शतं विनयते । सहस्रं विनयते । यहाँ से 'नियः' की अनुवृत्ति ३७वें सूत्र तक जाती है ।। ३६ ।।

### कर्त्तृस्थे चाशरीरे कर्मणि (१-३-३७)

कर्तृस्थे ७।१ । च (अ०) । अशरीरे ७।१ । कर्मणि ७।१ । 'कर्त्तृस्थे' में उपपदतत्पुरुष तथा 'अशरीरे' में नञ् तत्पुरुष समास है । शरीर भिन्न कर्म के कर्त्ता में होने पर नी धातु से आत्मनेपद होता है । क्रोधं विनयते । मन्युं विनयते (=क्रोध को शान्त करता है) ।। ३७ ।।

### वृत्तिसर्गतायनेषु क्रमः (१-३-३८)

वृत्तिसर्गतायनेषु ७।३ । क्रमः ५।१ । वृत्ति० इत्यादि में इ० द्वन्द्व समास है । वृत्ति (=निर्बाध गति), सर्ग (=उत्साह), तायन (=विस्तार

(पादविक्षेपे) धातोरात्मनेपदं भवति । ऋक्ष्वस्य क्रमते बुद्धिः । यजुःष्वस्य क्रमते बुद्धिः । (न प्रतिहन्यते इत्यर्थः) । सर्गे=व्याकरणाध्ययनाय क्रमते । तायने-अस्मिन् शास्त्राणि क्रमन्ते ।

### उपपराभ्याम् (१-३-३९)

उपश्च परा च उपपरौ ताभ्याम् (इ० द्व०) । वृत्त्यादिष्वर्थेषूपपरापूर्वकात् क्रमतेरात्मनेपदं भवति । उपक्रमते । पराक्रमते ।

### आङ उद्गमने (१-३-४०)

आङः । उद्गमने । आङ्पूर्वकात् क्रमतेरुद्गमने (ज्योतिषामुदये) अर्थे आत्मनेपदं भवति । आक्रमते आदित्यः । आक्रमते चन्द्रमाः । आक्रमन्ते ज्योतींषि । (वा०)—ज्योतिरुद्गमन इति वक्तव्यम् । इह मा भूत्—आक्रामति धूमो हर्म्यतलात् ।

### वेः पादविहरणे (१-३-४१)

पादयोर्विहरणं पादविहरणं तस्मिन् (ष० त०) । पादविहरणे वर्त्तमानात् । क्रमतेरात्मनेपदं भवति । सुष्ठु विक्रमते । साधु विक्रमते । अश्वादीनां गतिविशेषो विक्रमणमुच्यते ।

---

होना) अर्थों में क्रम् धातु से आत्मनेपद होता है । वृत्ति—ऋक्ष्वस्य क्रमते बुद्धिः । यजुःष्वस्य क्रमते बुद्धिः । सर्ग—व्याकरणाध्ययनाय क्रमते । तायन—अस्मिन् शास्त्रणि क्रमन्ते । यहाँ से वृत्ति० की अनुवृत्ति ३९वें सूत्र तक तथा क्रमः की ४३वें सूत्र तक जाती है ।। ३८ ।।

### उपपराभ्याम् (१-३-३९)

उपपराभ्याम् ५।२ । यह इ० द्वन्द्व समास है । वृत्यादि अर्थों में उप-परा-पूर्वक क्रम् धातु से आत्मनेपद होता है । उपक्रमते । पराक्रमते ।। ३९ ।।

### आङ उद्गमने (१-३-४०)

आङ ५।१ । उद्गमने ७।१ । आङ् पूर्वक क्रम धातु से उदय होने अर्थ में आत्मनेपद होता है । आक्रमते आदित्यः । आक्रमते चन्द्रमाः । आक्रमन्ते ज्योतींषि ।। ४० ।।

### वेः पादविहरणे (१-३-४१)

वेः ५।१ । पादविहरणे ७।१ । पादविहरणे में षष्ठी तत्पुरुष समास है । पादविहरण अर्थ में वर्त्तमान क्रम धातु से आत्मनेपद होता है । सुष्ठु विक्रमते । साधु विक्रमते (=अच्छी चाल से चलता है) ।। ४१ ।।

### प्रोपाभ्यां समर्थाभ्याम् (१-३-४२)

प्रश्चोपश्च प्रोपौ ताभ्याम् (इ० द्व०)। समर्थाभ्यामिति आदिकर्मणि तुल्यार्थाभ्यामित्यर्थः। प्रोपाभ्यां परतः क्रमतेरात्मनेपदं भवति। प्रक्रमते भोक्तुम्। उपक्रमते भोक्तुम्।

### अनुपसर्गाद्वा (१-३-४३)

अनुपसर्गाद्। वा। अविद्यमान उपसर्गो यस्मिन् स अनुपसर्गस्तस्मात् बहुव्रीहिः)। उपसर्गरहितात् क्रमेरात्मनेपदं वा भवति। क्रमते। क्रामति। 'क्रमः परस्मैपदेषु' (७-३-७६) इति परस्मैपदपक्षे दीर्घत्वम्।

### अपह्नवे ज्ञः (१-३-४४) -४६

अपह्नवेऽपलापेऽर्थे वर्त्तमानाज्ज्ञा = (अवबोधने) धातोरात्मनेपदं भवति। शतमपजानीते। सहस्रमपजानीते। 'जानीते' इति ज्ञाधातोर्लटिप्रथम-पुरुषैकवचने ते प्रत्यये परतः क्र्यादिभ्यः श्ना' (३-१-८१) इति श्नाविकरणे 'ज्ञाजनोर्जा' (७-३-७९) इति जाऽऽदेशे, 'ई हल्यघोः' (६-४-११३) इतीत्वे टेरेत्वे च रूपम्।

### अकर्मकाच्च (१-३-४५)

अकर्मकात्। च। अकर्मकाज्ज्ञ आत्मनेपदं भवति। सर्पिषो जानीते।

---

### प्रोपाभ्यां समर्थाभ्याम् (१-३-४२)

प्रोपाभ्याम् ५।२। समर्थाभ्याम् ५।२। प्रोपाभ्याम् में इ० द्वन्द्व समास है। समानार्थक प्र-उप-पूर्वक क्रम धातु से आत्मनेपद होता है। प्रक्रमते भोक्तुम्। उपक्रमते भोक्तुम्॥ ४२॥

### अनुपसर्गाद्वा (१-३-४३)

अनुपसर्गात् ५।१। वा (अ०)। अनुपसर्गात् में बहुव्रीहि समास है। उपसर्गरहित क्रम धातु से विकल्प से आत्मनेपद होता है। क्रमते। क्रामति। क्रमः परस्मैपदेषु से क्रामति में दीर्घ हुआ॥ ४३॥

### अपह्नवे ज्ञः (१-३-४४)

अपह्नवे ७।१। ज्ञः ५।१। अपह्नव=अपलाप अर्थ में वर्त्तमान ज्ञा धातु से आत्मनेपद होता है। शतमापजानीते। सहस्रमपजानीते। यहाँ से 'ज्ञः' की अनुवृत्ति ४६ वें सूत्र तक जाती है॥ ४४॥

### अकर्मकाच्च (१-३-४५)

अकर्मकात् ५।१। च (अ०)। अकर्मक ज्ञा धातु से आत्मनेपद होता

मधुनो जानीते। 'ज्ञोऽविदर्थस्य करणे' (२-३-५१) इति करणे कारके षष्ठी विभक्तिः। सर्पिषा मधुना वा करणेन प्रवर्तत इत्यर्थः।

### सम्प्रतिभ्यामनाध्याने (१-३-४६)

सम्प्रतिभ्याम्। अनाध्याने। सम् च प्रतिश्च सम्प्रति ताभ्याम् (इ० द्व०)। न आध्यानम् आध्यानम् तस्मिन् (न० त०)। संप्रतिपूर्वकाज्ज्ञोऽनाध्यानेऽस्मरणेऽर्थे आत्मनेपदं भवति। शतं संजानीते। सहस्रं संजानीते। शतं प्रतिजानीते। सहस्रं प्रतिजानीते।

### भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः (१-३-४७) -५०

'भासनो प ········मन्त्रणेषु' इत्यत्रेतरेतरद्वन्द्वसमासः। भासनादिष्वर्थेषु वद (=व्यक्तायां वाचि) धातोरात्मनेपदं भवति। भासने (=दीप्तौ) वदते चार्वी लोकायते। उपसंभाषायाम् (=उपसान्त्वने) कर्मकरानुपवदते। ज्ञाने-वदते चार्वी लोकायते। यत्ने (=उत्साहे) क्षेत्रे वदते, गेहे वदते। विमतौ (=नानामतौ) क्षेत्रे विवदन्ते, गेहे विवदन्ते। उपमन्त्रणे (=रहस्युपच्छन्दने) कुलभार्यामुपवदते। परदारानुपवदते।

---

है। सर्पिषो जानीते। मधुनो जानीते। यहाँ करणकारक में षष्ठी विभक्ति है। घृत या मधु से प्रवृत्त होता है—यह उदाहरणों का अर्थ है॥ ४५॥

### सम्प्रतिभ्यामनाध्याने (१-३-४६)

सम्प्रतिभ्याम् ५।२। अनाध्याने ७।१। 'सम्प्रतिभ्याम्' में इ० द्वन्द्व तथा 'अनाध्याने' में नञ्तत्पुरुष समास है। सम्-प्रति-पूर्वक ज्ञा धातु से अनाध्यान अर्थात् अस्मरण अर्थ में आत्मनेपद होता है। शतं संजानीते। सहस्रं संजानीते। शतं प्रतिजानीते। सहस्रं प्रतिजानीते॥ ४६॥

### भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः (१-३-४७)

भासनोप···उपमन्त्रेणषु ७।३। वदः ५।१। भासन० इत्यादि में इ० द्वन्द्व समास है। भासन (चमकना), उपसंभाषा (उपशान्त करना), ज्ञान, यत्न (उत्साह), विमति (मतभेद होना) तथा उपमन्त्रण (एकान्त में बात करना) अर्थों में वद धातु से आत्मनेपद होता है। भासन—वदते चार्वी लोकायते। उपसंभाषा—कर्मकरानुपवदते। ज्ञान—वदते चार्वी लोकायते। यत्न—क्षेत्रे वदते, गेहे वदते। विमति—क्षेत्रे विवदन्ते, गेहे विवदन्ते। उपमन्त्रणा—कुलभार्यामुपवदते, परदारानुपवदते। 'वदः' की अनुवृत्ति ५०वें सूत्र तक जाती है॥ ४७॥

## व्यक्तवाचां समुच्चारणे (१-३-४८) -५०

व्यक्तवाचाम् । समुच्चारणे । व्यक्ता वाग् येषां ते व्यक्तवाचस्तेषाम् (बहुव्रीहिः) । समुच्चारणे (सहोच्चारणे) गम्यमाने व्यक्तवाचां वदतेरात्मनेपदं भवति । सम्प्रवदन्ते ब्राह्मणाः । सम्प्रवदन्ते क्षत्रियाः ।

## अनोरकर्मकात् (१-३-४९)

अनोः । अकर्मकात् । व्यक्तवाग्विषयादकर्मकक्रियावचनादनुपूर्वाद् वदतेरात्मनेपदं भवति । अनुवदते कठः कलापस्य । अनुवदते मौद्गः पैप्पलादस्य । यथा कलापोऽधीयानो वदति तथा कठ इत्यर्थः ।

## विभाषा विप्रलापे (१-३-५०)

व्यक्तवाचां विप्रलापात्मके समुच्चारणे वदो विभाषाऽऽत्मनेपदं भवति । विप्रवदन्ते सांवत्सराः । विप्रवदन्ति सांवत्सराः । विप्रवदन्ते मौहूर्त्ताः, विप्रवदन्ति मौहूर्त्ताः । युगपत् परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः ।

## अवाद्ग्रः (१-३-५१) -५२

अवात् । ग्रः । अवपूर्वाद् गॄ (=निगरणे) धातोरात्मनेपद भवति ।

---

**व्यक्तवाचां समुच्चारणे (१-३-४८)**

व्यक्तवाचाम् ६।३ । समुच्चारणे ७।१ । 'व्यक्तवाचाम्' में बहुव्रीहि समास है । व्यक्तवाणी वालों के एक साथ उच्चारण करने में वदधातु से आत्मनेपद होता है । सम्प्रवदन्ते ब्राह्मणः । सम्प्रवदन्ते क्षत्रियाः । यह सूत्र ५० वें सूत्र तक अनुवृत्त होता है । ४८ ॥

**अनोरकर्मकात् (१-३-४९)**

अनोः ५।१ । अकर्मकात् ५।१ । अकर्मकात् में नञ्तत्पुरुष समास है । व्यक्तवाग् विषयक अकर्मक क्रियावाची अनुपूर्वक वद धातु से आत्मनेपद होता है । अनुवदते कठः कलापस्य । अनुवदते मौद्गः पैप्पलादस्य ॥ ४९ ॥

**विभाषा विप्रलापे (१-३-५०)**

विभाषा १।१ । विप्रलापे ७।१ । व्यक्तवाणी वालों के विप्रलापात्मक समुच्चारण (परस्पर विरोधी कथन) होने पर वद धातु से आत्मनेपद होता है । विप्रवदन्ति सांवत्सराः, विप्रवदन्ते सांवत्सराः । विप्रवदन्ते मौहूर्त्ताः, विप्रवदन्ति मौहूर्त्ताः ॥ ५० ॥

**अवाद् ग्रः (१-३-५१)**

अवात् ५।१ । ग्रः ५।१ । अव पूर्वक गॄ धातु से आत्मनेपद होता है ।

अवगिरते । अवगिरेते । अवगिरन्ते । लटि ते परतः 'तुदादिभ्यः शः' (३-१-७७) । इति शविकरणे 'ऋत इद्धातोः' (८-१-१००) इतीत्वे रपत्वे च रूपम् । द्विवचने तु 'आतो ङितः' (७-२-७१) इत्याकारस्येयादेशो 'लोपो व्योर्वलि' (६-१-६६) इति यलोपश्च विशेषः । बहुवचने पुनर्झोऽन्तादेशः पररूपत्वं च ।

समः प्रतिज्ञाने (१-३-५२)

सम्पूर्वकाद्गिरतेः प्रतिज्ञानेऽभ्युपगमेऽर्थे आत्मनेपदं भवति । शतं संगिरते । नित्यं शब्दं संगिरते ।

उदश्चरः सकर्मकात् (१-३-५३) -५४

उदः । चरः । सकर्मकात् । कर्मणा सहितं सकर्मकं तस्मात्-स्वार्थे-कन्प्रत्ययः । तेन सहेति तुल्ययोगे' (२-२-२८) इति बहुव्रीहि समासः । 'वोपसर्जनस्य' (६-३-८२) इति सहस्य सादेशः । उत्पूर्वात्चर (=गतिभक्षणयोः) धातोः सकर्मकक्रियावचनादात्मनेपदं भवति । गेहमुच्चरते । कुटुम्बमुच्चरते । गुरुवचनमुच्चरते । उत्क्रम्य गच्छतीत्यर्थः ।

समस्तृतीयायुक्तात् (१-३-५४) -५५

समः । तृतीयायुक्तात् । तृतीयया युक्तस्तृतीयायुक्तस्तस्मात् (तृ०त०) ।

---

अवगिरते, अवगिरेते, अवगिरन्ते 'ग्रः' की अनुवृत्ति ५२ वें सूत्र तक जाती है ।। ५१ ।।

समः प्रतिज्ञाने (१-३-५२)

समः ५।१ । प्रतिज्ञाने ७।१ । सम्पूर्वक गॄ धातु से प्रतिज्ञान (स्वीकार करने) अर्थ में आत्मनेपद होता है । शतं संगिरते । नित्यं शब्दं संगिरते ।। ५२ ।।

उदश्चरः सकर्मकात् (१-३-५३)

उदः ५।१ । चरः ५।१ । सकर्मकात् ५।१ । सकर्मकात् में बहुव्रीहि समास है । उद्पूर्वक सकर्मक क्रिया वाची चरधातु से आत्मनेपद होता है । गेहमुच्चरते । कुटुम्बमुच्चरते । गुरुवचनमुच्चरते (उत्क्रमण कर चलता है) । 'चरः' की अनुवृत्ति ५४ वें सूत्र तक जाती है ।। ५३ ।।

समस्तृतीयायुक्तात् (१-३-५४)

समः ५।१ । तृतीयायुक्तात् ५।१ । तृतीया० इत्यादि में तत्पुरुष समास है । तृतीया विभक्ति से युक्त उपपद के रहते सम्पूर्वक चर धातु से आत्मने-

कर्त्तृकरणे कृता बहुलम् (२-१-३२) इति समासः। सम्पूर्वाच्चरतेस्तृतीया-युक्तादात्मनेपदं भवति। अश्वेन सञ्चरते।

दाणश्च सा चेच्चतुर्थ्यर्थे (१-३-५५)

दाणः। च। सा। चेत्। चतुर्थ्यर्थे। चतुर्थ्या अर्थश्चतुर्थ्यर्थस्तस्मिन् (ष० त०)। सम्पूर्वात्तृतीयायुक्ताद् दाण् (=दाने) धातोरात्मनेपदं भवति, सा यदि तृतीया चतुर्थ्यर्थे भवति। दास्या सम्प्रयच्छते। वृषल्या सम्प्रयच्छते। 'अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवति', इति वार्त्तिकेनात्र तृतीयाविभक्तिः। 'पाघ्राध्मास्थाम्नादाण्०' (७-३-७८) इति दाणो यच्छादेशः।

(वा०)--अशिष्टव्यवहारेतृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम्। दास्याः सम्प्रयच्छते, वृषल्याः सम्प्रयच्छते। कामुकः सन् दास्यै ददातीत्यर्थः।

उपाद्यमः स्वकरणे (१-३-५६)

उपात्। यमः। स्वकरणे। स्वस्यकरणं स्वकरणं तस्मिन् (ष० त०)। पाणिग्रहणविशिष्टमिह स्वकरणपदार्थः। उपपूर्वाद्यमु (=उपरमे) धातोः स्वकरणे वर्त्तमानादात्मनेपदं भवति। भार्यामुपयच्छते।

ज्ञाश्रुस्मृदृशां सनः (१-३-५७) -५९

ज्ञाः च श्रुः च स्मृ च दृश् च=ज्ञाश्रुस्मृदृशस्तेषाम् (इ०द्व०)। ज्ञाश्रुस्मृदृशां

---

पद होता है। अश्वेन सञ्चरते यह सारा सूत्र ५५वें सूत्र तक चलता है॥ ५४॥

दाणश्च सा चेच्चतुर्थ्यर्थे (१-३-५५)

दाणः ५।१। च (अ०)। सा १।१। चेत् (अ०)। चतुर्थ्यर्थे ७।१। चतुर्थ्यर्थे में ष० तत्पुरुष है। सम्पूर्वक तृतीयायुक्त दाण धातु से आत्मनेपद होता है, यदि वह तृतीया चतुर्थी के अर्थ में हो। दास्या सम्प्रयच्छते। वृषल्या सम्प्रयच्छते। अशिष्ट व्यवहार में यहाँ चतुर्थी (सम्प्रदान) के अर्थ में तृतीया विभक्ति प्रयुक्त है॥ ५५॥

उपाद्यमः स्वकणे (१-३-५६)

उपात ५।१। यमः ५।१। स्वकरणे ७।१। स्वकरणे में ष० तत्पुरुष है। उपपूर्वक यम धातु से स्वकरण (अपना बनाने के) अर्थ में आत्मनेपद होता है। भार्यामुपयच्छते (विवाह में भार्या को स्वीकार करता है)॥ ५६॥

ज्ञाश्रुस्मृदृशांसनः (१-३-५७)

ज्ञाश्रुस्मृदृशाम् ६।३। सनः ५।१। ज्ञा० इत्यादि में इ० द्वन्द्व समास

सन्नन्तानामात्मनेपदं भवति। ज्ञा-धर्मं जिज्ञासते। श्रु-गुरुं शुश्रूषते। स्मृ-नष्टं सुस्मूर्षते। दृश्-नृपं दिदृक्षते। ज्ञातुमिच्छतीति विग्रहे ज्ञाधातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (१-३-७) इति सन्प्रत्यये, 'सनाद्यन्ता धातवः' (३-१-३२) इति धातुसंज्ञायां 'सन्यङोः' (६-१-९) इति द्वित्वे, हलादिशेषे, 'सन्यतः' (७-४-७९) इत्यभ्यासाकारस्येत्वे 'जिज्ञास' इति शब्दरूपस्य लटि प्रकृतसूत्रेणात्मनेपदे ते प्रत्यये शपि जिज्ञासते-इति पदं साधु। शुश्रूषते-इत्यत्र सनः कित्त्वादगुणे 'अज्झनगमां सनि' (६-४-१६) इत्यंगस्य दीर्घे, द्विर्वचनेऽभ्यासह्रस्वत्वे प्रत्यय सकारस्य मूर्द्धन्ये च रूपम्। 'सुस्मूर्षते' इति स्मृ (=स्मरणे) धातोः सनि उदोष्ठ्यपूर्वस्य (७-१-१०२) इत्यृवर्णस्योत्वे रपत्वे द्वित्वेऽभ्यासकार्ये 'हलि च' (८-२-७७) इत्युपधादीर्घे मूर्धन्यादेशे रूपम्। एवं दृशिर् (=प्रेक्षणे) इत्यस्यापि सनि कित्त्वादगुणे द्वित्वे 'उरत्' (७-४-६६) इत्यभ्यासस्याकारादेशे रपरत्वे, हलादिशेषे, इत्वे, 'व्रश्चभ्रस्ज०' (८-२-३६) इति शस्य मूर्द्धन्ये 'षढोः कः सि' (८-२-४१) इति षस्य कत्वे सनः सस्य मूर्द्धन्ये च लडात्मनेपदे ते दिदृक्षते इति रूपं साधु।

नानोर्ज्ञः (१-३-५८) -५९

न। अनोः। ज्ञः। अनुपूर्वाज्जानातेः सन्नन्तादात्मनेपदं न भवति। पुत्रमनुजिज्ञासति।

प्रत्याङ्भ्यां श्रुवः (१-३-५९)

प्रतिश्च आङ् च प्रत्याङौ ताभ्याम् (इ० द्व०)। प्रत्याङ्पूर्वकात् श्रु

---

है। सन्प्रत्ययान्त ज्ञा, श्रु, स्मृ, दृश् धातुओं से आत्मनेपद होता है। ज्ञा—धर्मं-जिज्ञासते। श्रु—गुरुं शुश्रूषते। स्मृ—षष्टं सुस्मूर्षते। दृश्—नृपं दिदृक्षते। इन धातुओं से सन् प्रत्यय आने पर सन्नन्त की 'सनाद्यन्ताः०' से धातु संज्ञा और 'सन्यङोः' से प्रथम एकाजवयव को द्वित्व तथा अभ्यासकार्य होकर लट् प्रथम पुरुषैकवचन में ये रूप बने हैं। 'सनः' की अनुवृत्ति ५९वें सूत्र तक जाती है॥ ५७॥

नानोर्ज्ञः (१-३-५८)

न (अ०)। अनोः ५।१। ज्ञः ५।१। अनुपूर्वक सन्नन्त ज्ञा धातु से आत्मनेपद नहीं होता है। पुत्र मनुजिज्ञासति (पुत्र को अनुमति देना चाहता है।) न की अनुवृत्ति, ५९ वें सूत्र तक जाती है॥ ५८॥

प्रत्याङ्भ्यां श्रुवः (१-३-५९)

प्रत्याङ्भ्याम् (५।२), श्रुवः ५।१। प्रत्याङ्भ्याम् में इ० द्वन्द्व समास

(=श्रवणे) धातोः सन्नन्तादात्मनेपदं न भवति । प्रतिशुश्रूषति । आशुश्रूषति ।

## शदेः शित (१-३-६०) -६१

श् इत् यस्य स शित् तस्मात् (बहुव्रीहिः)। शित् सम्बन्धी यः शद्लृ (=शातने) धातुस्तस्मादात्मनेपदं भवति । शीयते । शीयेते । शीयन्ते । 'पाघ्रा०' इत्यादिना शवः शीयादेशः ।

## म्रियतेर्लुङ्लिङोश्च (१-३-६१)

म्रियतेः । लुङ्लिङोः । च । लुङ् च लिङ् च लुङ्लिङौ तयोः (इ० द्व०)। मृङ् (=प्राणत्यागे) धातोः शितो लुङि लङि चात्मनेपदं भवति । ङित्वादात्मनेपदे सिद्धे नियमार्थं वचनमन्यत्र माभूदिति । लिट्लुट्लृट्लृङ्क्षु लेटः सिपि च परस्मैपदमेव । म्रियते, म्रियेते, म्रियन्ते । अमृत । मृषीष्ट । लटि 'तुदादिभ्य:श' (३-१-७७) इति शे प्रत्यये 'रिङ् शयग्लिङक्षु' (७-४-२८) इति रिङादेशः । 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' (६-४-७७) इतीयङादेशः । लुङि सिचि 'उश्च' इति कित्वादगुण:, 'ह्रस्वादंगात्' (८-२-२७) इति सकार-लोपः । लिङि 'लिङः सीयुट्' (३-४-१०२), सुट्तिथोः' (३-४-१०७) इति सीयुटसुडागमौ 'लोपो व्योर्वलि' (६-१-६६) इति यलोपः ।

---

है । प्रति-आङ्-पूर्वक सन्नन्त श्रु धातु से आत्मनेपद नहीं होता है । प्रतिशु-श्रूषति । आशुश्रूषति ।। ५९ ।।

## शदेः शितः (१-३-६०)

शदेः ५।१ । शितः ५।१ । शित् में बहुव्रीहि समास है । शिद् विकरण सम्बन्धी जो शद्लृ धातु, उससे आत्मनेपद होता है । शीयते, शीयेते, शीयन्ते । यहाँ शप् विकरण में शद्धातु को 'पाघ्रा०' सूत्र से शीय् आदेश हुआ है । 'शितः' की अनुवृत्ति ६१ वें सूत्र तक जाती है ।। ६० ।।

## म्रियतेर्लुङ्लिङोश्च (१-३-६१)

म्रियतेः ५।१ । लुङ्लिङोः ६।२ । च (अ०) । 'लुङ्लिङोः' में इ० द्वन्द्व है तथा पञ्चम्यर्थं में षष्ठी विभक्ति है । मृङ् धातु से शित् विकरण में, लुङ् तथा लिङ् में आत्मेपद होता है । शित्—म्रियते, म्रियेते, म्रियन्ते । लुङ्—अमृत । लिङ्—मृषीष्ट । लट् में श विकरण में मृङ् को 'रिङ्शयग्-लिङक्षु' से रिङादेश हुआ है ।। ६१ ।।

## पूर्ववत् सनः (१-३ ६२)

पूर्वस्येव पूर्ववत् । सनः पूर्वो यो धातुरात्मनेपदी तद्वत् सन्नन्तादात्मनेपदं भवति । आसिसिषते शिशयिषते । आस्ते शेते-इत्यनुदात्तङित आत्मनेपदमुक्तम्, ताभ्यां सन्नन्ताभ्यामप्यात्मनेपदं भवति । आसिसिषते इत्यत्र 'अजादेर्द्वितीयस्य' (६-१-२) इति द्वितीयैकाजवयवस्य द्वित्वं भवति । एवं 'नेर्विशः' इत्यात्मनेपदं सन्नन्तादपि भवति —निविशते, निविविक्षते । 'आङ उद्गमने'— आक्रमते, आचिक्रंसते । 'व्रश्चभ्रस्ज' इति शस्य षत्वं, 'षढोः कः सि' इति षस्य कत्वं, 'नश्चापदान्तस्य झलि' (८-३-२४) इति मोऽनुस्वार इत्येवं विधयोऽत्र विशेषाः ।

## आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य (१-३-६३)

आम्प्रत्ययवत् । कृञः । अनुप्रयोगस्य । आम्प्रत्ययो यस्मात् सोऽयमाम्प्रत्ययः (बहुव्रीहिः) । 'तत्र तस्येव' (५-१-११५) इति वति प्रत्ययः । पश्चात्प्रयोगोऽनुप्रयोगः । अनुप्रयुक्तस्य कृञ्धातोराम्प्रत्ययवदात्मनेपदं भवति । ईक्षाञ्चक्रे । ईहाञ्चक्रे । ईक्ष (=दर्शने) इत्यस्मात्, ईह (चेष्टायाम्) इत्यस्माच्च लिटि 'इजादेश्च गुरुमतोऽनृच्छः' (३-१-३६) इत्याम्प्रत्यये, 'आमः' (२-४-८१) इति लेर्लुकि, लिटः कृत्वात् तदन्तस्य प्रातिपदिकत्वे, सौ, आमन्तस्याव्ययत्वात् सोर्लुकि, पदत्वे, 'कृञ्चानुप्रयुज्यते लिटि' (३-१-४०) इति

---

## पूर्ववत् सनः (१-३-६२)

पूर्ववत् (अ०) । सनः ५।१ । सन् प्रत्यय लाने से पूर्व जो धातु आत्मनेपदी हो, उससे भी आत्मनेपद होता है । आस्-आस्ते→आसिसिषते । शीङ्-शेते→शिशयिषते । आस् तथा शीङ् धातु क्रमशः अनुदात्तेत् तथा ङित् होने से आत्मनेपदी हैं । निविशते-निविविक्षते । आक्रमते-आचिक्रंसते । यहाँ नेर्विशः' से पूर्व धातु तथा 'आङ् उद्गमने' से उत्तर धातु आत्मनेपदी हैं ।। ६२ ।।

## आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य (१-३-६३)

आम्प्रत्ययवत् (अ०) । कृञः ६।१ अनुप्रयोगस्य ६।१ । आम्प्रत्यय में बहुव्रीहि समास है । पीछे प्रयुक्त होने वाले कृञ् धातु से आम्प्रत्यय जिससे हुआ हो ऐसी पूर्ववर्ती धातु के समान ही आत्मनेपद होता है । ईक्षाञ्चक्रे । ईहाञ्चक्रे । यहाँ ईक्ष और ईह धातुओं से 'इजादेश्च गुरुमतोऽनृच्छः' सूत्र द्वारा लिट् परे आम् प्रत्यय हुआ । और तदन्त शब्द को 'कृञ्चानुप्रयुज्यते

कुञोऽनुप्रयोगे, प्रकृतसूत्रेणात्मनपदे ते प्रत्यये तस्य एत्वे यणादेशे, धातोर्द्विर्वचने-ऽभ्यासकार्ये मोऽनुस्वारे वैकल्पिके परसवर्णे चोपपन्नं रूपम् ।

## प्रोपाभ्यां युजेरयज्ञपात्रेषु (१-३-६४)

प्रोपाभ्याम् । युजेः । अयज्ञपात्रेषु । प्रश्चोपश्च प्रोपौ ताभ्यां (इ० द्व०) । यज्ञस्य पात्राणि यज्ञपात्राणि (ष०त०) । न यज्ञपात्राणि अयज्ञपात्राणि तेषु (न० त०) । प्रोपपूर्वाद् युजिर् (=योगे) धातोरयज्ञपात्रप्रयोगविषया-दात्मनेपदं भवति । प्रयुङ्क्ते । उपयुङ्क्ते । आत्मनेपदप्रत्यये परतः कर्त्तरि 'रुधा-दिभ्यः श्नम्'(३-१-७८) इति श्नम्यनुबन्धलोपे तस्य 'सार्वधातुकमपित्' (१-२-४) इति ङित्वे तन्निमित्ते 'श्नसोरल्लोपः' (६-४-११२) इत्यकारलोपे, नस्यानुस्वारे जस्य कुत्वे, चर्त्वे, अनुस्वारस्य परसवर्णे चोपपन्ने रूपे । (वा०)—स्वराद्य-न्तोपसृष्टादिति वक्तव्यम् । उद्युंक्ते । नियुंक्ते ।

## समः क्ष्णुवः (१-३-६५)

सम्पूर्वात् क्ष्णु (=तेजने) धातोरात्मनेपदं भवति । संक्ष्णुते शस्त्रम् । संक्ष्णुवाते । संक्ष्णुवते । अस्यादादित्वाद् 'अदिप्रभृतिभ्यः शपः' (२-४-७२) इति शपो लुग् भवति ।

---

लिटि' से कृञ् का अनुप्रयोग होकर मूल ईक्षादि धातुओं के आत्मनेपदी होने से तद्वत् आत्मनेपद प्रत्यय (त→एश्) हुआ है ॥ ६३ ॥

### प्रोपाभ्यां युजेरयज्ञपात्रेषु (१-३-६४)

प्रोपाभ्याम् ५।२ । युजेः ५।१ । अयज्ञपात्रेषु० ७।३ । प्रोपाभ्यां में इ० द्वन्द्व और अयज्ञपात्रेषु में ष० त० गर्भ नञ्तत्पुरुष समास है । प्र-उप-पूर्वक युज् धातु से यज्ञपात्र से भिन्न विषय में आत्मनेपद होता है । प्रयुङ्क्ते । उपयुङ्क्ते । युज्धातु रुधादिगणी होने से उससे शप् के स्थान में श्नम् विकरण हुआ है ॥ ६४ ॥

### समः क्ष्णुवः (१-३-६५)

समः ५।१ । क्ष्णुवः ५।१ । सम्पूर्वक क्ष्णुधातु से आत्मनेपद होता है । संक्ष्णुते शस्त्रम् । संक्ष्णुवाते । संक्ष्णुवते । यहाँ धातु को अदादिगणी होने से शप्लुक् तथा अजादिप्रत्ययों में उवङादेश हुआ है । ६५ ॥

## भुजोऽनवने (१-३-६६)

भुजः। अनवने। न अवनम् अनवनं तस्मिन् (न० त०)। भुज (=पालनाभ्यवहारयोः) धातोरनवने अपालने वर्त्तमानादात्मनेपदं भवति। भुङ्क्ते। भुञ्जाते। भुञ्जते।

## णेरणौ यत्कर्म णौ चेत्स कर्त्ताऽनाध्याने (१-३-६७) -७१

णेः। अणौ। यत्कर्म। णौ। चेत्। स। कर्त्ता। अनाध्याने। न णिः अणिस्तस्मिन् (न०त०)। न आध्यानम् अनाध्यानं तस्मिन् (न०त०)। ण्यन्तादात्मनेपदं भवति यदि अणौ यत् कर्म णौ तदेव कर्त्ता भवति आध्यानं (=स्मरणं) वर्जयित्वा। आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयते हस्ती स्वयमेव। उपसिञ्चन्ति हस्तिनं हस्तिपकाः। उपसेचयते हस्ती स्वयमेव। पश्यन्ति भृत्या राजानम्। दर्शयते राजा स्वयमेव।

---

## भुजोऽनवने (१-३-६६)

भुजः ५।१। अनवने ७।१। अनवने में नञ् तत्पुरुष समास है। भुज धातु से 'पालन' से भिन्न अर्थ होने पर आत्मनेपद होता है। भुङ्क्ते, भुञ्जाते, भुञ्जते। भुज धातु पालन करने तथा खाने अर्थ में है। सो खाने अर्थ में ही उससे आत्मनेपद प्रत्यय होते हैं, और रक्षा करने अर्थ में परस्मैपद। 'भुज' के रुधादिगणी होने से उससे सार्वधातुक विषय में 'श्नम्' विकरण होता है॥ ६६॥

## णेरणौ यत्कर्म णौ चेत् सकर्त्ताऽनाध्याने (१-३-६७)

णेः ५।१। अणौ ७।१। यत् १।१। कर्म १।१। णौ ७।१। चेत् (अ०) सः १।१। कर्त्ता १।१। अनाध्याने ७।१। अणौ तथा अनाध्याने में नञ् तत्पुरुष समास है। णिजन्त धातु से आत्मनेपद होता है, यदि अण्यन्तावस्था में जो कर्म रहा हो वही ण्यन्तावस्था में कर्त्ता हो जावे आध्यान (स्मरण) को छोड़कर। आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयते हस्ती स्वयमेव। उपसिञ्चन्ति हस्तिनं हस्तिपकाः। उपसेचयते हस्ती स्वयमेव। पश्यन्ति भृत्या राजानम्। दर्शयते राजा स्वयमेव। यहाँ से 'णेः' की अनुवृत्ति ७१ वें सूत्र तक जाती है॥ ६७॥

### भीस्म्योर्हेतुभये (१-३-६८)

भीस्म्योः । हेतुभये । भीश्च स्मिश्च भीस्मी तयोः (इ०द्व०) । हेतुना भयं हेतुभयं तस्मिन् (तृ०त०) ञिभी (=भये) धातोः, स्मिङ् (=ईषद्धसने) धातोश्च ण्यन्तादात्मनेपदं भवति हेतुभये । जटिलो भीषयते । मुण्डो भीषयते । जटिलो विस्मापयते । मुण्डो विस्मापयते । 'भियो हेतुभये षुक्' (७-३-४०) इति भियो णौ षुगागमः । 'नित्यं स्मयतेः' (६-१-५७) इति स्मेर्णौ आत्वम् । 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ' (७-३-३६) इति पुगागमः ।

### गृधिवञ्च्योः प्रलम्भने (१-३-६९)

गृधिश्च वञ्चिश्च गृधिवञ्ची तयोः (इ० द्व०) । गृधु (=अभिकांक्षायाम्) धातोः, 'वञ्चु' (=प्रलम्भने-चुरादिः) धातोश्च णौ प्रलम्भने (विसंवादने) वर्त्तमानादात्मनेपदं भवति । माणवकं गर्धयते, माणवकं वञ्चयते ।

### लियः सम्माननशालीनीकरणयोश्च (१-३-७०)

लियः । सम्माननशालीनीकरणयोः । च । सम्माननं च शालीनीकरणं

---

#### भीस्म्योर्हेतुभये (१-३-६८)

भीस्म्योः ६।२ । हेतुभये ७।१ । उभयत्र क्रमशः इ० द्वन्द्व और ष० तत्पुरुष समास हैं । भी तथा स्मिङ् धातु णिजन्त होने पर उससे कारण मूलक भय द्योत्य हो तो आत्मनेपद होता है । जटिलो भीषयते । मुण्डो भीषयते । जटिलो विस्मापयते । मुण्डो विस्मापयते । णिजन्त भी धातु से षुक् आगम तथा स्मि को आत्वादेश तथा पुक् आगम हुआ है ।। ६८ ।।

#### गृधिवञ्च्योः प्रलम्भने (१-३-६९)

गृधिवञ्च्योः ६।२ । प्रलम्भने ७।१ । गृधि० में इ० द्वन्द्व समास है । और पञ्चमी के अर्थ में षष्ठी प्रयुक्त है । गृध और वञ्च धातु णिजन्त होते हुए प्रलम्भन (लालच दिलाने) अर्थ में हों तो उनसे आत्मनेपद होता है । माणवकं गर्धयते । माणवकं वञ्चयते ।। ६९ ।।

#### लियः सम्माननशालीनीकरणयोश्च (१-३-७०)

लियः ५।१ । सम्माननशालीनीकरणयोः ७।२ । च (अ०) ।

च सम्मानननशालीनीकरणे तयोः (इ० द्व०)। लीङ् (=श्लेषणे) धातोर्ण्यन्तात् सम्मनने (=पूजने), शालीनीकरणे (=न्यग्भावने) प्रलम्भने च वर्त्तमाना-दात्मनेपदं भवति। जटाभिरालापयते। श्येनो वर्त्तिकामुल्लापयते। कस्त्वा-मुल्लापयते। 'विभाषा लीयतेः' (६-१-५१) इत्यात्वे कृते पश्चात् तल्लक्षणः पुगागमो भवति।

## मिथ्योपपदात् कृञोऽभ्यासे (१-३-७१)

मिथ्योपपदात्। कृञः। अभ्यासे। मिथ्याशब्द उपपदं यस्य स मिथ्यो-पपदस्तस्मात् (बहु०)। ण्यन्तात् कृञो मिथ्योपपदात् अभ्यासे (पौनःपुन्येन करणे) आत्मनेपदं भवति। पदं मिथ्या कारयते। स्वरादिदुष्टमसकृदुच्चारय-तीत्यर्थः।

## स्वरितञितः कर्त्रभिप्राये क्रियाफले (१-३-७२) -७७

स्वरितश्च ञ् च स्वरितञौ ताविती यस्य स स्वरितञित् ततः (द्वन्द्व-गर्भो बहुव्रीहिः)। कर्त्तुरभिप्रायः कर्त्रभिप्रायस्तस्मिन् (ष०त०)। क्रियायाः फलं क्रियाफलं, तस्मिन् (ष०त०) स्वरितञिद्भ्यो धातुभ्य आत्मनेपदं भवति कर्त्तारं

---

सम्मानन० में इ० द्वन्द्व समास है। णिजन्त लीङ् धातु से सम्मानन (पूजन) और शालीनी करण (नीचा कराना) अर्थ में आत्मनेपद होता है। जटाभि-रालापयते। श्येनो वर्त्तिकामुल्लापयते। कस्त्वामुल्लापयते। यहाँ 'विभाषा लीयतेः' से लीधातु को आकारान्तादेश तथा पुगागम णिच् प्रत्यय परे हुआ है ॥ ७० ॥

## मिथ्योपपदात् कृञोऽभ्यासे (१-३-७१)

मिथ्योपपदात् ५।१। कृञः ५।१। अभ्यासे ७।१। 'मिथ्योपपदात्' में बहुव्रीहि समास। 'मिथ्या' शब्द के उपपद होने पर णिजन्त कृञ् धातु से अभ्यास अर्थ में आत्मनेपद होता है। पदं मिथ्या कारयते (स्वर इत्यादि के दोष से युक्त पद को बार-बार उच्चारण करता है) ॥ ७१ ॥

## स्वरितञितः कर्त्रभिप्राये क्रियाफले (१-३-७२)

स्वरितञितः ५।१ कर्त्रभिप्राये ७।१। क्रियाफले ७।१। स्वरितञितः में इ० द्वन्द्व गर्भ बहुव्रीहि और 'कर्त्रभिप्राये' तथा 'क्रियाफले' में ष० तत्पुरुष समास है। स्वरितेत् और ञित् धातुओं से कर्त्तृगामी क्रिया फल होने पर

चेत्क्रियाफलमभिप्रैति, क्रियायाः प्रधानभूतं फलं चेत् कर्त्तुर्लकारवाच्यस्य भवति । स्वरितेतः-यजते । पचते । ञितः-षुञ् (=अभिषवे) सुनुते । कृञ्-कुरुते ।

अपाद्वदः (१-३-७३)

अपात् । वदः । अपपूर्वाद् वद (=व्यक्तायां वाचि) धातोः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति । धनकामो न्यायमपवदते । न्यायापवादेन धनमर्जयतीत्यर्थः ।

णिचश्च (१-३-७४)

णिचः । च । णिजन्तादात्मनेपदं भवति कर्त्रभिप्राये क्रियाफले । कटं कारयते । ओदनं पाचयते । णित्वाद् 'अचो ञ्णिति' (७-२-११५) 'अत उपधायाः' (७-२-११६) इत्यंगस्य वृद्धिः ।

समुदाङ्भ्यो यमोऽग्रन्थे (१-३-७५)

समुदाङ्भ्यः । यमः । अग्रन्थे । सम् च, उत् च, आङ् च=समुदाङस्तेभ्यः (इ० द्व०) । न ग्रन्थोऽग्रन्थस्तस्मिन् (न० त०) । समुदाङ्पूर्वाद् यमु

---

आत्मनेपद होता है। स्वरितेत्—यज=यजते, पच=पचते । ञित्-षुञ्-सुनुते । कृञ्-कुरुते । 'कर्त्रभिप्राये क्रियाफले' पदों की अनुवृत्ति ७७ वें सूत्र तक जाती है ॥ ७२ ॥

अपाद् वदः (१-३-७३)

अपात् ५।१ । वदः ५।१ । अपपूर्वक वदधातु से कर्त्रभिप्राय क्रियाफल गम्यमान होने पर आत्मनेपद होता है । धनकामो न्यायमपवदते (न्याय को तिरस्कृत कर स्वयं के लिए धन कमाता है) ॥ ७३ ॥

णिचश्च (१-३-७४)

णिचः ५।१ । च (अ०) । णिजन्त धातु से भी कर्त्रभिप्राय क्रियाफल होने पर आत्मनेपद होता है। कटं कारयते । ओदनं पाचयते । (चटाई अपने लिये बनाता है । भात अपने लिये पकवाता है) ॥ ७४ ॥

समुदाङ्भ्यो यमोऽग्रन्थे (१-३-७५)

समुदाङ्भ्यः ५।३ । यमः ५।१ । अग्रन्थे ७।१ । समु० में इ० द्वन्द्व और 'अग्रन्थे में नञ्तत्पुरुष समास है। सम्-उद्-आङ्-पूर्वक यम धातु से

(=उपरमे) धातोः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति ग्रन्थविषयश्चेत् प्रयोगो न भवति। व्रीहीन् संयच्छते। भारमुद्यच्छते। वस्त्रमायच्छते। 'आङो यमहनः' इति सिद्धे सत्यारम्भः सकर्मकार्थम्।

## अनुपसर्गाज्ज्ञः (१-३-७६)

अनुपसर्गात्। ज्ञः। नोपसर्गोऽस्त्यस्यानुपसर्गस्तस्मात् (बहुव्रीहिः)। अनुपसर्गाज्जानातेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति। गां जानीते। अश्वं जानीते।

## विभाषोपपदेन प्रतीयमाने (१-३-७७)

विभाषा। उपपदेन। प्रतीयमाने। समीपे श्रूयमाणं शब्दान्तरमुपपदं तेन प्रतीयमाने कर्त्रभिप्राये क्रियाफले विभाषा आत्मनेपदं भवति। स्वं यज्ञं यजति। स्वं यज्ञं यजते। स्वं कटं करोति। स्वं कटं कुरुते। स्वं पुत्रमपवदति। स्वं पुत्रमपवदते। एवं 'स्वरितञित' इत्यारभ्य पञ्चसूत्र्यां सर्वत्र विभाषोदाहार्यम्।

---

कर्त्रभिप्राय क्रियाफल होने पर आत्मनेपद होता है, ग्रन्थ विषय को छोड़कर। व्रीहीन् संयच्छते (बटोरता है)। भारमुद्यच्छते (उठाता है)। वस्त्रमायच्छते (फैलाता है)। आङोयमहनः (१-३-२८) से आत्मनेपद विधान होते हुए पुनर्विधि सकर्मकार्थ है। उद्यच्छति चिकित्सां वैद्यः। (वैद्य चिकित्सा ग्रन्थ रचता है) इस प्रयोग में परस्मैपद ही होता है ॥ ७५ ॥

### अनुपसर्गाज्ज्ञः (१-३-७६)

अनुपसर्गात् ५।१। ज्ञः ५।१। अनु० में बहुव्रीहि समास है। उपसर्ग रहित ज्ञाधातु से कर्त्रभिप्राय क्रियाफल होने पर आत्मनेपद होता है। गां जानीते। अश्वं जानीते। (अपने गौ, अश्व को जानता है।) ॥ ७६ ॥

### विभाषोपपदेन प्रतीयमाने (१-३-७७)

विभाषा १।१। उपपदेन ३।१। प्रतीयमाने ७।१। उपपद से प्रतीत होने वाले कर्त्रभिप्राय क्रियाफल में विकल्प से आत्मनेपद होता है। स्वं यज्ञं यजते, स्वं यज्ञं यजति। स्वं कटं कुरुते, स्वं कटं करोति। स्वं पुत्रमपवदते, स्वं पुत्रमपवदति। यहाँ 'स्वं' शब्द कर्त्रभिप्राय क्रियाफल का प्रत्यायक उपपद है ॥ ७७ ॥

### शेषात् कर्त्तरि परस्मैपदम् (१-३-७८) -९३

पूर्वप्रकरणेन येभ्यो धातुभ्यो येन विशेषणेनात्मनेपदमुक्तं ततो यदन्यत् स शेषः। तत्रायं नियमः क्रियते शेषात् कर्त्तरि परस्मैपदं भवतीति। अनुदात्त-ङित आत्मनेपदमुक्तम्। आस्ते, शेते इति। ततोऽन्यत्र परस्मैपदमेव भवति-याति, वाति-इति। नेर्विश आत्मनेपदमुक्तम् निविशते-इति। ततोऽन्यत्र परस्मैपदमेव भवति-आविशति-प्रविशतीति।

### अनुपराभ्यां कृञः (१-३-७९)

अनुश्च परा च अनुपरौ ताभ्याम् (इ० द्व०) अनुपरापूर्वात् कृञः परस्मैपदं भवति-अनुकरोति। पराकरोति।

### अभिप्रत्यतिभ्यः क्षिपः (१-३-८०)

अभिश्च प्रतिश्च अतिश्च अभिप्रत्यतयस्तेभ्यः (इ० द्व०)। अभ्यादि-पूर्वात् क्षिप् (=प्रेरणे) धातोः परस्मैपदं भवति। अभिक्षिपति। प्रतिक्षिपति। अतिक्षिपति।

---

#### शेषात् कर्त्तरि परस्मैपदम् (१-३-७८)

शेषात् ५।१। कर्त्तरि ७।१। परस्मैपदम् १।१। ऊपर वर्णित धातुओं और नियमों से भिन्न विषय में धातुओं से कर्त्तृवाच्य में परस्मैपद होता है। या-याति। वा-वाति। विश-आविशति, प्रविशति। निपूर्वक विशधातु का आत्मनेपद में विधान था; वह अकेले या अन्य उपसर्ग के साथ यहाँ परस्मैपद हो गया है। यहाँ से कर्त्तरि और परस्मैपदम् की अनुवृत्ति ९३ वें सूत्र तक जाती है॥ ७८॥

#### अनुपराभ्यां कृञः (१-३-७९)

अनुपराभ्याम् ५।२। कृञः ५।१। अनु० में इ० द्वन्द्व समास है। अनु-परा-पूर्वक कृधातु से परस्मैपद होता है। अनुकरोति। पराकरोति॥ ७९॥

#### अभिप्रत्यतिभ्यः क्षिपः (१-३-८०)

अभिप्रत्यतिभ्यः ५।३। क्षिपः ५।१। अभि० में इ० द्वन्द्व समास है। अभि-प्रति-अतिपूर्वक क्षिप धातु से परस्मैपद होता है। अभिक्षिपति। प्रति-क्षिपति। अतिक्षिपति॥ ८०॥

## प्राद्वहः (१-३-८१)

प्रात्। वहः। प्रपूर्वाद् वह (=प्रापणे) धातोः परस्मैपदं भवति। प्रवहति, प्रवहतः, प्रवहन्ति।

## परेर्मृषः (१-३-८२)

परेः। मृषः। परिपूर्वात् मृष (तितिक्षायां, दिवादिः) धातोः परस्मैपदं भवति। परिमृष्यति, परिमृष्यतः, परिमृष्यन्ति।

## व्याङ्परिभ्यो रमः (१-३-८३) -८५

व्याङ्परिभ्यः। रमः। विश्च आङ् च परिश्च व्याङ्परयस्तेभ्यः (इ० द्व०) व्याङ्परिपूर्वकाद् रमु (क्रीडायाम्) धातोः परस्मैपदं भवति। विरमति, आरमति, परिरमति।

## उपाच्च (१-३-८४) -८५

उपात्। च। उपपूर्वाच्च रमतेः परस्मैपदं भवति। उपरमति।

---

## प्राद्वहः (१-३-८१)

प्रात् ५।१। वहः ५।१। प्रपूर्वक वह धातु से परस्मैपद होता है। प्रवहति, प्रवहतः, प्रवहन्ति ॥ ८१ ॥

## परेर्मृषः (१-३-८२)

परेः ५।१ मृषः ५।१। परिपूर्वक मृष धातु से परस्मैपद होता है। परिमृष्यति, परिमृष्यतः, परिमृष्यन्ति ॥ ८२ ॥

## व्याङ्परिभ्यो रमः (१-३-८३)

व्याङ्परिभ्यः ५।३। रमः ५।१। व्याङ्० में इ० द्वन्द्व समास है। वि-आङ्-परिपूर्वक रमधातु से परस्मैपद होता है। विरमति। आरमति। परिरमति। 'रमः' की अनुवृत्ति ८५ वें सूत्र तक जाती है॥ ८३ ॥

## उपाच्च (१-३-८४)

उपात् ५।१। च (अ०)। उपपूर्वक रमधातु से भी परस्मैपद होता है। उपरमति। उप की अनुवृत्ति ८५ वें सूत्र तक जाती है ॥ ८४ ॥

## विभाषाऽकर्मकात् (१-३-८५)

विभाषा । अकर्मकात् । अकर्मकक्रियावचनादुपपूर्वाद् रमतेः परस्मैपदं भवति विभाषा । यावद्भुक्तमुपरमति । यावद्भुक्तमुपरमते ।

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः (१-३-८६) -८८

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यः । णेः । बुधश्च, युधश्च, नशश्च, जन् च, इङ्च प्रुश्च द्रुश्च=स्रुश्च=बुध······स्रवस्तेभ्यः (इ० द्व०) । बुध (=अवगमने)-युध (=सम्प्रहारे) णश (=अदर्शने)-जनी (=प्रादुर्भावे) इङ् (=अध्ययने)-प्रुङ् (=गतौ)-द्रु (=गतौ)-स्रु (=स्रवणे) धातुभ्यो ण्यन्तेभ्यः परस्मैपदं भवति । बोधयति । योधयति । नाशयति । जनयति । अध्यापयति । प्रावयति । द्रावयति । स्रावयति । णिचि इगन्तांगस्य वृद्धिः, लघूपधस्य गुणः, अत उपधायाश्च वृद्धिः । जनयति । इत्यत्र 'मितां ह्रस्वः' (६-४-९२) इति ह्रस्वः । अध्यापयतीत्यत्र अधिपूर्वादिङो णिचि 'अचो ञ्णिति' (७-२-११५) इति वृद्धौ, ऐत्वे, 'क्रीङ्जीनां णौ' (६-१-४८) इत्यात्वे, यणादेशे, 'अर्ति ह्रीव्ली०' (७-३-३६) इति लटि पुगागमे तिपि शपि गुणेऽयादेशे च रूपम् ।

## निगरणचलनार्थेभ्यश्च (१-३-८७)

निगरणचलनार्थेभ्यः । च । निगरणं च चलनं च निगरणचलने तेऽर्थे

---

### विभाषाऽकर्मकात् (१-३-८५)

विभाषा १।१ । अकर्मकात् ५।१ । अकर्म० में बहुव्रीहि समास है । अकर्मक क्रियावाची उपपूर्वक रमधातु से विकल्प से परस्मैपद होता है । यावद् भुक्तम् उपरमति । यावद् भुक्तमुपरमते ।। ८५ ।।

### बुधयुधनशजनेङ् प्रुद्रुस्रुभ्यो णेः (१-३-८६)

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्य: ५।३ । णेः ५।१ । बुधयुध० इत्यादि में इ० द्वन्द्व समास है । बुध, युध, नश, जन, इङ्, प्रु, द्रु, स्रु धातुओं से णिच् प्रत्यय हो तो परस्मैपद होता है । बोधयति । योधयति । नाशयति । जनयति । अध्यापयति । प्रावयति । द्रावयति । स्रावयति ।। ८६ ।।

### निगरणचलनार्थेभ्यश्च (१-३-८७)

निगरणचलनार्थेभ्य: ५।३ । च (अ०) । निगरण० इत्यादि में द्वन्द्व

येषां ते निगरणचलनार्थास्तेभ्यः (द्वन्द्वगर्भो बहु०)। निगरणचलनार्थेभ्यश्च ण्यन्तेभ्यो धातुभ्यः परस्मैपदं भवति। निगरणार्था-निगारयति, आशयति, भोजयति। चलनार्थाः-चलयति, चोपयति, कम्पयति।

(वा०)—अदेः प्रतिषेधो वक्तव्यः। अत्ति देवदत्तः। आदयते देवदत्तेन।

### अणावकर्मकाच्चित्तवत्कर्तृकात् (१-३-८८)

अणौ। अकर्मकात्। चित्तवत्कर्तृकात्। न णिः, अणिस्तस्मिन् अणौ (न० त०)। चित्तमस्यास्तीति चित्तवत्; चित्तवत्कर्त्ता यस्मिन् स चित्तवत्कर्तृकः (बहु०)। अण्यन्तो यो धातुरकर्मकश्चित्तवत्कर्तृकश्च तस्मात् ण्यन्तात्परस्मैपदं भवति। आस्ते देवदत्तः। आसयति देवदत्तम्। शेते देवदत्तः। शाययति देवदत्तम्।

### न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः (१-३-८९)

न। पादम्याङ्यम्०····· वसः। पादम्याङ्यम० इत्यत्र समाहारद्वन्द्व समासः। पादिधातुभ्यो ण्यन्तेभ्यः परस्मैपदं न भवति। पा (=पाने)-पाययते। दमु (=उपशमे) दमयते। आङ्पूर्वो यमु (=उपरमे)-आयामयते। आङ्पूर्वो यसु (=प्रयत्ने)-आयासयते। परिपूर्वो मुह (वैचित्ये)-परिमोहयते।

---

गर्भ बहुव्रीहि समास है। निगरणार्थक और चलनार्थक णिजन्त धातुओं से परस्मैपद होता है। निगरणार्थ-निगारयति, आशयति। भोजयति। चलनार्थ-चलयति। चोपयति। कम्पयति॥ ८७॥

### अणावकर्मकाच्चित्तवत्कर्तृकात् (१-३-८८)

अणौ ७।१। अकर्मकात् ५।१। चित्तवत्कर्तृकात् ५।१। अणौ में नञ्तत्पुरुष, अकर्मकात् में तथा चित्तवत्कर्तृकात् में बहुव्रीहि समास है। अणिजन्त अवस्था में जो धातु अकर्मक और चेतनकर्त्ता वाला हो, उससे णिजन्तावस्था में परस्मैपद होता है। आस्ते देवदत्तः। आसयति देवदत्तम्। शेते देवदत्तः। शययति देवदत्तम्॥ ८८॥

### न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः (१-३-८९)

न (अ०)। पादम्याङ्यम्···वसः ५।१ पादम्याङ्यम० में स० द्वन्द्व समास है। पा (पानार्थक), दम, आङ्पूर्वक यम, आङ्पूर्वक यस, परिपूर्वक मुह, रुच, नृत, वद, वस धातु यदि णिजन्त हों तो उनसे परस्मैपद नहीं

रुच (=दीप्तौ)-रोचयते । नृती (=गात्रविक्षेपे)-नर्त्तयते । वद (=व्यक्तायां वाचि)-वादयते । वस (=निवासे)-वासयते ।

(वा०)—पादिषु धेट उपसंख्यानम् । धापयेते शिशुमेकं समीची ।

### वा क्यषः (१-३-९०) -९३

क्यष्प्रत्ययान्ताद्धातोर्वा परस्मैपदं भवति । लोहितायति, लोहितायते । पटपटायति, पटपटायते । लोहितादिडाज्भ्यः क्यष् (३-१-१३) इति वक्ष्यमाणक्यष् प्रत्ययोऽत्र गृह्यते । 'अकृत्सार्वधातुकयोर्दीर्घः (७-४-२५) इत्यंगस्य दीर्घत्वम् ।

### द्युद्भ्यो लुङि (१-३-९१)

द्युद्भ्यः । लुङि । बहुवचननिर्देशाद् द्युतादयो गृह्यन्ते । ते च द्युत=(दीप्तौ) इत्यारभ्य कृपू (=सामर्थ्ये) इति पर्यन्ता व्यपदिष्टाः । तेभ्यो लुङि वा परस्मैपदं भवति । व्यद्युतत्, व्यद्योतिष्ट । अलुठत्, अलोठिष्ट । परस्मैपदे च्लेः स्थाने 'पुषादिद्युताद्य् लृदितः परस्मैपदेषु' (३-१५५) इत्यङादेशः । ङित्वाद्गुणप्रतिषेधः ।

---

होता । पा-पाययते । दम-दमयते । आयम-आयामयते । आयास-आयासयते । परिमुह-परिमोहयते । रुच-रोचयते । नृत-नर्तयते । वद-वादयते । वस-वासयते ॥ ८९ ॥

### वा क्यषः (१-३-९०)

वा (अ०) । क्यषः ५।१ । क्यष् प्रत्ययान्त धातु से विकल्प से परस्मैपद होता है । लोहितायति, लोहितायते । पटपटायति । पटपटायते । यहाँ 'लोहितादिडाज्भ्यः क्यष्' से लोहित इत्यादि शब्दों से क्यष् प्रत्यय और 'अकृत् सार्वधातुकयोदीर्घः' से अंग को दीर्घ हुआ है । 'वा' की अनुवृत्ति ९३ वें सूत्र तक जाती है ॥ ९० ॥

### द्युद्भ्यो लुङि (१-३-९१)

द्युद्भ्यः ५।३ । लुङि ७।१ । 'द्युत्' इत्यादि धातुओं से लुङ् में विकल्प से परस्मैपद होता है । व्यद्युतत्, व्यद्योतिष्ट । अलुठत्, अलोठिष्ट । परस्मैपद-पक्ष में 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' से लुङ् में च्लि के स्थान में अङादेश हुआ है ॥ ९१ ॥

## वृद्भ्यः स्यसनोः (१-३-९२) -९२

वृद्भ्यः । स्यसनोः । स्यश्च सन् च स्यसनौ तयोः (इ० द्व०) । वृतादयो द्युताद्यन्तर्गताः पञ्च-वृतु (=वर्त्तने)-वृधु (=वृद्धौ)-शृधु (=शब्द कुत्सायाम्) स्यन्दू (=प्रस्रवणे)-कृपू (=सामर्थ्ये) इति । एतेभ्यो वृतादिभ्यः स्ये सनि च प्रत्यये परतो वा परस्मैपदं भवति । स्ये-वर्त्स्यति (लृटि), अवर्त्स्यत् (लृङि) । सनि विवृत्सति । न च भवति-वर्त्तिष्यते, अवर्तिष्यत, विवर्त्तिषते-इति । वृध्-वर्त्स्यति, अवर्त्स्यत् विवृत्सति । वर्द्धिष्यते, अवर्द्धिष्यत, विवर्द्धिषते । 'न वृद्भ्यश्चतुर्भ्यः' (८-२-५९) इति वृतादिभ्यश्चतुर्भ्यः परस्य साद्यार्धधातुकप्रत्ययस्य परस्मैपदेषु इडागमप्रतिषेधः । आत्मनेपदेऽप्रतिषेधः ।

## लुटि च क्लृपः (१-३-९३)

लुटि स्यसनोश्च कृपेः परस्मैपदं वा भवति । लुटि कल्प्ता, कल्प्तारौ, कल्प्तारः, कल्प्तासि । कल्पिता, कल्पितारौ, कल्पितारः, कल्पितासे । स्ये कल्प्स्यति, अकल्प्स्यत् । कल्पिष्यते, अकल्पिष्यत । सनि-चिक्लृप्सति ।

---

## वृद्भ्यः स्यसनोः (१-३-९२)

वृद्भ्यः ५।३ । स्यसनोः ७।२ । स्यसनोः में इ० द्वन्द्व समास है । वृत् इत्यादि ५ धातुओं से स्य और सन् परे रहने पर विकल्प से परस्मैपद होता है । वृतु वर्तने, वृधु वृद्धौ, शृधु शब्द कुत्सायाम्, स्यन्दू प्रस्रवणे, कृपू सामर्थ्ये ये पाँच धातु वृतादिगण में मानी जाती हैं । वृत्-स्य में—वर्त्स्यति वर्त्तिष्यते (लृट्) । अवर्त्स्यत्, अवर्तिष्यत (लृङ्) । सन् में—विवृत्सति, विवर्तिषते । वृध्-स्य में—वर्त्स्यति, वर्द्धिष्यते । अवर्त्स्यत्, अवर्द्धिष्यत । सन् में—विवृत्सति, विवर्द्धिषते । यहाँ परस्मैपद विषय में सादि आर्धधातुक प्रत्यय परे 'न वृद्भ्यश्चतुर्भ्यः' सूत्र से इडागम का प्रतिषेध होता है । स्यसनोः की अनुवृत्ति ९३ वें सूत्र तक जाती है ।। ९२ ।।

## लुटि च क्लृपः (१-३-९३)

लुटि ७।१ । च (अ०) । क्लृपः ५।१ । क्लृप् धातु से लुट् तथा स्य-सन् प्रत्ययों में भी विकल्प से परस्मैपद होता है । लुट्-कल्प्ता, कल्प्तारौ, कल्प्तारः । कल्प्तासि । कल्पिता, कल्पितारौ, कल्पितारः । कल्पितासे । स्य-कल्प्स्यति,

चिकल्पिषते । 'तासि च क्लृपः' (७-२-६०) इति तासौ सावौ च परस्मैपदे-ष्विट् प्रतिषेधो नात्मनेपदेषु । 'कृपो रो लः' (८-२-१८) इति लत्वम् ।

इति प्रथमाध्यायस्य तृतीयः पादः ।

---

अकल्प्स्यत्, कल्पिष्यते । अकल्पिष्यत । सन्-चिक्लृप्सति, चिकल्पिषते । यहाँ 'तासि च क्लृपः' से परस्मैपद में इट् का प्रतिषेध हुआ है ।। ९३ ।।

यह लघुकाशिकान्तर्गत प्रथम अध्याय के तृतीय पाद का हिन्दी अनुवाद पूर्ण हुआ ।

## अथ प्रथमाध्यायस्य चतुर्थः पादः

### आकडारादेका संज्ञा (१-४-१) -२-२-३८

आ। कडारात्। एका। संज्ञा। 'कडाराः कर्मधारये' (२-२-३८) इति वक्ष्यमाणसूत्रपर्यन्तमित उत्तरं यदनु क्रमिष्यते तत्रैका संज्ञा भवतीत्यधिक्रियते। भेत्ता, छेत्ता। भिद्छिदोरुपधास्येकारस्य 'ह्रस्वं लघु' (१-४-१०) लघुसंज्ञायां सत्यां तृच्तृन् तास्यार्धधातुके परतः 'पुगन्तलघूपधस्य च' (७-३-८६) इति गुणो भवति। शिक्षा, भिक्षा। शिक्ष (=विद्योपादाने)-भिक्ष (=भिक्षायामलाभे लाभे च) धात्वोरिकारस्य 'ह्रस्वं लघु' (१-४-१०) इति प्राप्ता लघुसंज्ञा 'संयोगे गुरु' (१-४-११) इति गुरुसंज्ञया परत्वाद् बाध्यते। एकासंज्ञेत्यधिकाराद् गुरुसंज्ञैव भवति न पुनर्लघुसंज्ञा। तेन 'गुरोश्च हलः' (३-३-१०३) इत्यप्रत्ययो भवति स्त्रियाम्; लघूपधलक्षणगुणश्च न भवति। ततः अदन्तत्वात् 'अजाद्यतष्टाप्' (४-१-४) इति टापि प्रत्यये, सौ, 'हलङ्याप्'

---

### प्रथम अध्याय का चतुर्थ पाद आरम्भ

### आकडारादेका संज्ञा (१-४-१)

आ (अ०)। कडारात् ५।१। एका १।१। संज्ञा १।१। 'कडाराः कर्मधारये' इस २।२।३८ सूत्र पर्यन्त यहाँ से आगे 'एक संज्ञा' का अधिकार है। भेत्ता, छेत्ता। शिक्षा, भिक्षा। अततक्षत्। अररक्षत्। यहाँ भेत्ता, छेत्ता में क्रमशः भिद्, छिद् धातुओं के उपधा इकार की लघुसंज्ञा 'ह्रस्वं लघु' (१-४-१०) सूत्र से हुई तो उनसे परे तृजादि प्रत्ययों (आर्धधातुकों) के होने पर 'पुगन्तलघूपधस्य च' सूत्र से इकार को गुणादेश होकर एकार हुआ है, शिक्षा, भिक्षा में क्रमशः शिक्ष और भिक्ष धातुओं के इकार की 'ह्रस्वं लघु' से प्राप्त लघुसंज्ञा 'संयोगे गुरु' (१-४-११) सूत्र से (जो कि अपवाद रूप पर सूत्र है, से) गुरु संज्ञा द्वारा बाधित हो गई तो 'गुरोश्च हलः' से अप्रत्यय और टाप्, सुँ आकर शिक्षा, भिक्षा ये रूप निष्पन्न हुये। अततक्षत्, अररक्षत् ये क्रमशः तक्ष (छीलने) और रक्ष (पालने) धातुओं के णिजन्त लुङ् प्रथम पुरुष के रूप हैं। यहाँ क्ष से पूर्व अकार की ह्रस्व (=लघु) होते हुये भी संयोग परत्वाद् गुरु संज्ञा होने पर 'सन्वल्लघुनि चङ्परेऽनग्लोपे' से सन्वद्-

(६-१-६८) इति सुलोपे सिद्धं रूपम्। अततक्षत्, अररक्षत्। तक्षू (=तनूकरणे)-रक्ष (=पालने) धात्वोरकारः संयोगपरत्वाद् गुरुसंज्ञः, एका संज्ञेत्यधिकाराल्लघुसंज्ञा पुनर्न भवति। तेन णौ चङि 'सन्वल्लघुनि चङ्परेऽनग्लोपे ७-४-९३) इति सन्वद्भावोऽहि न भवति।

## विप्रतिषेधे परं कार्यम् (१-४-२)

विप्रतिषेधे। परम्। कार्यम्। यत्र द्वौ प्रसङ्गावन्यार्थावेकस्मिन् युगपत् प्राप्नुतः स तुल्यबलविरोधो विप्रतिषेधः। तस्मिन् विप्रतिषेधे परं (यत् सूत्रं तस्य) कार्यं भवति। वृक्षाभ्याम्, प्लक्षाभ्याम्-इत्यत्र 'अतो दीर्घो यञि' 'सुपि च' (७-३-१०१।१०२) इत्यस्यावकाशः। वृक्षेषु, प्लक्षेषु इत्यत्र 'बहुवचने झल्येत्' (७-३-१०३) इत्यस्यावकाशः। वृक्षेभ्यः, प्लक्षेभ्यः-इत्यत्रोभयं प्राप्नोति। परं 'बहुवचने झल्येत्' इत्येतद् भवति विप्रतिषेधेन। परिभाषेयं सपादसप्ताध्याय्यां प्रवर्त्तते।

## यू स्त्र्याख्यौ नदी (१-४-३) -६

ई च ऊ च=यू (इ॰ द्व०)। अविभक्तिकोयं निर्देशः, छान्दसो वा

---

भाव नहीं हुआ। फलतः अभ्यास के अकार को इत्व नहीं होने पाया। यदि एक संज्ञा न होकर दो-दो (लघु-गुरु) संज्ञायें होतीं तो यह उक्त व्यवस्था नहीं हो पाती। अतः एक संज्ञा का विधान और अधिकार किया गया है॥ १॥

## विप्रतिषेधे परं कार्यम् (१-४-२)

विप्रतिषेधे ७।१। परम् १।१। कार्यम् १।१। भिन्न-भिन्न अर्थ वाले दो प्रसंग जब कभी एक विषय में एक साथ अपना-अपना कार्य करने के लिए आ रहे हों तो वह तुल्यबल विरोध विप्रतिषेध कहलाता है। उस विप्रतिषेध की अवस्था में किसका कार्य हो, किसका नहीं, इस पर यह परिभाषा सूत्र (और सवा सात अध्याय तक अधिकार सूत्र भी) बनाया गया है कि अष्टाध्यायी में जो पर (बाद) का सूत्र हो उसका कार्य होना चाहिए। वृक्षाभ्याम्, प्लक्षाभ्याम्। वृक्षेषु, प्लक्षेषु। वृक्षेभ्यः प्लक्षेभ्यः। यहाँ वृक्षेभ्यः, प्लक्षेभ्यः में 'सुपि च' से प्राप्त अंग दीर्घत्व की अपेक्षा बहुवचने झल्येत् जो पर सूत्र है, उसका कार्य अंग को एत्वादेश हो जाता है॥ २॥

## यू स्त्र्याख्यौ नदी (१-४-३)

यू (सूत्रों के छन्दोवत् होने से यहाँ प्रथमा द्विवचन विभक्ति सुपां

सुप्लुक्। स्त्रियं स्त्रीलिंगमाचक्षाते स्त्र्याख्यौ। मूलविभुजादित्वात् (३-२-५) कप्रत्ययः। 'उपपदमतिङ्' (२-२-१९) इति तत्पुरुषसमासः। ईकारान्तमूकारान्तं च स्त्र्याख्यं शब्दरूपं नदीसंज्ञं भवति। कुमारी, गौरी, लक्ष्मीः, शार्ङ्गरवी। ब्रह्मबन्धूः, यवागूः। ङ्यन्तेषु कुमार्यादिषु 'हल्ङ्याप्०' (६-१-६८) इति सुलोपः। अन्यत्र तदभावात् सुलोपाभावः।

नेयङुवङ्स्थानावस्त्री (१-४-४) -६

न। इयङुवङ्स्थानौ। अस्त्री। इयङ्चोवङ् च इयङुवङौ (इ० द्व०)। तौ स्थानमनयोरिति इयङुवङ्स्थानौ (बहु०)। न स्त्री अस्त्री (न० त०)। इयङुवङ्स्थानावीकारान्तोकारान्तशब्दौ स्त्रीशब्दव्यतिरिक्तौ नदीसंज्ञौ न भवतः। हे श्रीः। हे भ्रूः। श्रीभ्रूशब्दावियङुवङ्स्थानौ तयोर्नदीसंज्ञाप्रतिषेधात् 'अम्बार्थनद्योर्ह्रस्वः' (७-३-१०७) इति सम्बुद्धौ विधीयमानं ह्रस्वं न भवति।

वाऽऽमि (१-४-५) -६

वा। आमि। आमिइति षष्ठीबहुवचनं गृह्यते न सप्तम्येकवचनं ङेरा-

---

सुलुक् (७।१।३९) से लुक् समझें)। स्त्र्याख्यौ १।२। नदी १।१। यू में इ० द्वन्द्व तथा स्त्र्याख्यौ में उपपद तत्पुरुष समास है। ईकारान्त और ऊकारान्त स्त्रीलिंग वाची शब्द की नदी संज्ञा होती है। कुमारी, गौरी, लक्ष्मीः, शार्ङ्गरवी। ब्रह्मबन्धूः, यवागूः। यहाँ ङीप्प्रत्ययान्त कुमारी आदि में सुँ का लोप तथा ङीप् से भिन्न लक्ष्मीः ब्रह्मबन्धूः यवागू में सुँ को रुत्वविसर्ग हुआ है। 'आण्नद्याः' इत्यादि, नदी संज्ञा का विशेष फल कुमार्यै आदि में आडागमादि द्वारा देखा जा सकता है॥ ३॥

नेयङुवङ्स्थानावस्त्री (१-४-४)

न (अ०)। इयङुवङ्स्थानौ १।२। अस्त्री १।१। इयङुवङ्स्थानौ में द्वन्द्वगर्भ बहुव्रीहि और अस्त्री में नञ्तत्पुरुष समास है। जिन ईकारान्त ऊकारान्त स्त्रीलिंगवाची शब्दों को इयङ्-उवङ् आदेश होते हैं, उनकी नदी संज्ञा नहीं होती, स्त्री शब्द को छोड़कर। हे श्रीः। हे भ्रूः। यहाँ श्री-भ्रू शब्दों को अजादि विभक्तियों में इयङादि आदेश होते हैं, जिससे उनकी नदी संज्ञा नहीं हुई। फलतः सम्बोधन 'सुँ' में नदी संज्ञावशात् प्राप्त ह्रस्व नहीं हुआ॥ ४॥

वाऽऽमि (१-४-५)

वा (अ०)। आमि ७।१। इयङुवङ्स्थानी ईकारान्त ऊकारान्त

मिति (७-३-११६) तस्य नदीसंज्ञोत्तरकालमामादेशविधानात् । इयङुवङ्स्थानौ यू आमि परतो वा नदीसंज्ञो न भवतः । श्रियाम्, श्रीणाम् । भ्रुवाम्, भ्रूणाम् । नदीसंज्ञापक्षे 'ह्रस्वनद्यापो नुट्' (७-१-५४) इति नुडागमः, 'अट्कुप्वाङ्०' (८-४-२) इति णत्वं च । अन्यत्र 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' (६-४-७७) इतीवर्णस्येयङूवर्णस्य चोवङादेशः ।

## ङिति ह्रस्वश्च (१-४-६) -७

ङिति । ह्रस्वः । च । ङिति परतो ह्रस्वो य्वोः सम्बन्धी यः स्त्र्याख्यः, इयङुवङ्स्थानौ च स्त्र्याख्यौ यौ यू. ते विकल्पेन नदीसंज्ञा भवन्ति । कृत्यै, कृतये । धेन्वै, धेनवे । श्रियै, श्रिये । भ्रुवै, भ्रुवे । नदीसंज्ञापक्षे 'आण्नद्याः' (७-३-११२) इति ङिद्विभक्तीनामाडागमः, 'आटश्च' (६-१-९०) इति वृद्धि-रेकादेशः । पक्षान्तरे 'शेषो घ्यसखि' (१-४-७) इति घिसंज्ञायां जातायां 'घेर्ङिति' (७-३-१११) इति घ्यन्तांगस्य गुणो भवति । श्रियै, भ्रुवै इत्यत्र नदीसंज्ञापक्षे कृते आडागमेऽङ्गस्येयङुवङौ भवतः ।

## शेषो घ्यसखि (१-४-७) -९

शेषः । घि । असखि । न सखि असखि (न० त०) । ह्रस्वमिवर्णो-

---

स्त्रीलिंग शब्दों की 'आम्' विभक्ति परे विकल्प से नदी संज्ञा होती है । श्रियाम्, श्रीणाम् । भ्रुवाम्, भ्रूणाम् । नदी संज्ञा पक्ष में नुडागम और णत्व हुआ; तथा अन्यत्र श्री को इयङ् तथा भ्रू को उवङ् आदेश हुए हैं ।। ५ ।।

### ङिति ह्रस्वश्च (१-४-६)

ङिति ७।१ । ह्रस्वः १।१ । च (अ०) । ङिद्विभक्तियों (ङे, ङसि, ङस्, ङि) में दीर्घ ईकारान्त ऊकारान्त तथा ह्रस्व इकारान्त उकारान्त स्त्रीलिंग शब्दों की विकल्प से नदी संज्ञा होती है । कृत्यै, कृतये । धेन्वै, धेनवे । श्रियै, श्रिये । भ्रूवै, भ्रुवे । इनमें नदी संज्ञापक्ष में ङिद्विभक्ति को आडागम और वृद्धि आदेश से कृत्यै, धेन्वै इत्यादि रूप तथा घिसंज्ञा पक्ष में अंग को गुण, अयादि आदेश होकर कृतये, धेनवे, इत्यादि रूप बने ।। ६ ।।

### शेषो घ्यसखि (१-४-७)

शेषः १।१ । घि १।१ । असखि १।१ । असखि में नञ्तत्पुरुष समास

वर्णान्तं यन्न स्त्र्याख्यं, स्त्राख्यं च यन्न नदीसंज्ञकं सोऽत्र शेषः स घिसंज्ञो भवति, सखिशब्दं वर्जयित्वा। अग्नये, वायवे। कृतये, धेनवे। घेर्ङिति' (७-३-१११) इति गुणेऽयाद्यादेशे च रूपम्।

### पतिः समास एव (१-४-८) -९

पतिः। समासे। एव। पूर्वेण घिसंज्ञायां सिद्धायां नियमः क्रियते- पतिशब्दः समासे एव घिसंज्ञो भवतीति। प्रजापतिना। प्रजापतये। 'आङो नाऽस्त्रियाम् (७-३-१२०) इति घेः परतो टास्थाने नाऽऽदेशः।

### षष्ठीयुक्तश्छन्दसि वा (१-४-९)

षष्ठीयुक्तः। छन्दसि। वा। षष्ठ्या युक्तः षष्ठीयुक्तः (तृ० त०)। षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि विषये वा घिसंज्ञो भवति। कुलुञ्चानां पतये नमः, कुलुञ्चानां पत्ये नमः। घिसंज्ञापक्षेऽङ्गस्य गुणोऽन्यत्र यणादेशः।

---

है। ह्रस्व इवर्णान्त-उवर्णान्त शब्द जो स्त्रीलिंग नहीं हैं, तथा जो ऐसे स्त्री-लिंग होते हुए भी नदी संज्ञक नहीं हैं, वे शेष यहाँ अभिप्रेत हैं, उनकी 'घि' संज्ञा होती है, सखि शब्द को छोड़कर। अग्नये, वायवे। कृतये, धेनवे। यहाँ अग्नि और वायु शब्द पुंल्लिग तथा कृति और धेनु शब्द स्त्रीलिंग हैं। इन सबकी घिसंज्ञा होने से 'घेर्ङिति' से अंग को गुण तथा अयाद्यादेश हुआ है॥ ७॥

### पतिः समास एव (१-४-८)

पतिः १।१। समासे ७।१। एव (अ०)। पति शब्द समासान्त होने पर ही घिसंज्ञक होता है, (अकेला नहीं) यह नियम किया जाता है। प्रजा-पतिना। प्रजापतये। इस तत्पुरुष समास में प्रथम उदाहरण में 'टा' के स्थान में 'ना' आदेश और 'ङे' के परे अंग को गुण घिसंज्ञा के कारण ही हुआ है। समास से अन्यत्र पत्या, पत्ये, इत्यादि रूप होते हैं॥ ८॥

### षष्ठीयुक्तश्छन्दसि वा (१-४-९)

षष्ठीयुक्तः १।१। छन्दसि ७।१। वा (अ०)। षष्ठीयुक्तः में तृतीया तत्पुरुष है। षष्ठी विभक्ति वाले शब्द से जुड़ा हुआ पति शब्द वेदविषय में विकल्प से घिसंज्ञक होता है। कुलुञ्चानां पतये नमः। कुलुञ्चानां पत्ये नमः (यजुर्वेद १६।२२)। घिसंज्ञापक्ष में गुण, अन्यत्र यण् हुआ॥ ९॥

## ह्रस्वं लघु (१-४-१०) -११

ह्रस्वम् । लघु । ह्रस्वमक्षरं लघुसंज्ञं भवति । भेत्ता, छेत्ता । अचीकरत्, अजीहरत् । मात्रिकस्य ह्रस्वाचो लघुसंज्ञकस्योपधायां विद्यमानत्वात् 'पुगन्तलघूपधस्य च' (७-३-८६) इति गुणो भवति । चङ्परतो लघुवर्णे विद्यमाने सति 'सन्वल्लघुनि चङ्परेऽनग्लोपे' (७-४-९३) इति सन्वद्भावः (इत्वं) भवति ।

## संयोगे गुरु (१-४-११) -१२

संयोगे परतो ह्रस्वमक्षरं गुरुसंज्ञं भवति । कुण्डा, शिक्षा, भिक्षा । गुरुसंज्ञायां सत्यां 'गुरोश्च हलः' (३-३-१०३) इत्यः प्रत्ययो भवति स्त्री लिंगे । ततः 'अजाद्यतष्टाप्' (४-१-४) इति टाप्प्रत्ययः ।

## दीर्घं च (१-४-१२)

दीर्घम् । च । दीर्घं चाक्षरं गुरुसंज्ञं भवति । ईहांचक्रे, ईक्षांचक्रे । ऊहांचक्रे तेन 'इजादेश्च गुरुमतोऽनृच्छः' (३-१-३६) इत्याम्प्रत्ययो भवति लिटि । ततोऽनुप्रयोगो भवति कृञः 'कृञ्चानुप्रयुज्यते लिटि' (३-१-४०) इति ।

---

## ह्रस्वं लघु (१-४-१०)

ह्रस्वम् १।१ । लघु १।१ ह्रस्व अक्षर की लघु संज्ञा होती है । भेत्ता, अचीकरत्, अजीहरत् यहाँ भेत्ता, छेत्ता में ह्रस्व इकार की लघु संज्ञा होने पर उसको गुण हुआ है । और अचीकरत् आदि में णिजन्त कृ, हृ धातुओं को लुङ् प्रथमपुरुषैकवचन में, चङ् परे लघुवर्ण के परे रहते, सनवद्भाव (इत्व) आदि हुआ है ।। १० ।।

## संयोगे गुरु (१-४-११)

संयोगे ७।१ । गुरु १।१ । संयोग परे रहने पर ह्रस्व वर्ण गुरुसंज्ञक होता है । कुण्डा । शिक्षा । भिक्षा । यहाँ णकार तथा डकार और ककार एवं षकार के संयोग परे रहने पर पूर्व अक्षर कु, शि, भि गुरुसंज्ञक हो गये । फलतः 'गुरोश्च हलः' से स्त्रीलिंग में अप्रत्यय हुआ । तब टाप् हुआ ।। ११ ।।

## दीर्घं च (१-४-१२)

दीर्घम् १।१ । च (अ०) । दीर्घ अक्षर की भी गुरुसंज्ञा होती है । ईहांचक्रे, ईक्षांचक्रे । ऊहांचक्रे । यहां पर 'इजादेश्च गुरुमतोऽनृच्छः' से ईह, ईक्ष और ऊह धातुओं से लिट् परे ई, ऊ के गुरु होने के कारण ही आम् प्रत्यय हुआ है ।। १२ ।।

### यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् (१-४-१३)

यस्मात् । प्रत्ययविधिः । तदादि । प्रत्यये । अङ्गम् । प्रत्ययस्य विधिः प्रत्ययविधिः । तद् आदिर्यस्य तत् तदादि (बहु०) । यस्माद् धातोर्वा प्रातिपदिकाद् वा प्रत्ययो विधीयते तदादिशब्दरूपं प्रत्ययेपरतोऽङ्गसंज्ञं भवति । कर्त्ता, हर्त्ता । करिष्यति, हरिष्यति । औपगवः कापटवः । प्रकृतेरंगसंज्ञायां सत्यामङ्गाधिकारकार्याणि 'सार्वधातुकार्धधातुकयोः' (७-३-८४) इत्यंगस्य गुणः' 'ऋद्धनोः स्ये' (७-२-७०) इतीडागमः, 'तद्धितेष्वचामादेः' (७-२-११७) इत्याद्यच्वृद्धिः, 'ओर्गुणः' (६-४-१४६) इत्युवर्णान्तस्य भस्यांगस्य च गुणो भवति ।

(वा०) तदादिवचनं स्यादिनुमर्थम् । करिष्यावः, करिष्यामः, कुण्डानि ।

### सुप्तिङन्तं पदम् (१-४-१४) -१७

सुप् च तिङ् च सुप्तिङौ (इ० द्व०) । तौ अन्ते यस्य तत् सुप्तिङन्तम् (बहु०) । सुबन्तं तिङन्तं च शब्दरूपं पदसंज्ञं भवति । ब्राह्मणाः पठन्ति । पदसंज्ञायां सत्यां पदान्तसकारस्य 'ससजुषोरुः' (८-२-६६) इति रुत्वम् । उत्सृष्टानुबन्धकस्य रेफस्य 'खरवसानयोर्विसर्जनीयः' (८-३-१५) इति विसर्ज-

---

#### यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् (१-४-१३)

यस्मात् ५।१ । प्रत्ययविधिः १।१ । तदादिप्रत्यये ७।१ अङ्गम् १।१ । प्रत्ययविधि में षष्ठीतत्पुरुष है, और तदादि में बहुव्रीहि । जिस धातु या प्रातिपदिक से प्रत्यय विहित होता है, उसकी उस प्रत्यय के परे अंगसंज्ञा होती हैं । तदादि से तात्पर्य है, उस प्रत्यय के परे रहते सम्बद्ध धातु या प्रातिपदिक का आदिवर्णसहित समुदाय । कर्त्ता, हर्त्ता । करिष्यति, हरिष्यति । औपगवः, कापटवः । यहाँ कृ हृ धातुओं और उपगु, कपटु—इन प्रातिपदिकों की तृन्-तृच्, स्य, अण् प्रत्ययों के परे अग संज्ञा के कारण गुण वृद्धि आदि कार्य हुए हैं ।। १३ ।।

#### सुप्तिङन्तं पदम् (१-४-१४)

सुप्तिङन्तम् १।१ । पदम् १।१ । सुप्तिङन्तं में द्वन्द्वगर्भ बहुव्रीहि समास हैं । सुप्प्रत्ययान्त और तिङ् प्रत्ययान्त शब्दरूप की पदसंज्ञा होती है । ब्राह्मणाः पठन्ति । यहाँ ब्राह्मणशब्द से जस् प्रत्यय में तदन्त शब्द रूप की पद संज्ञा होने पर रुत्व और विसर्ग हुआ है और पठन्ति की पठ+झि

नीयश्चः' भवति । पठन्ति' इत्यस्य च पदत्वात् 'पदस्य' 'पदात्', 'तिङ्ङतिङः' (८-१-१६।१७।२८) इति निघातो भवति ।

### नः क्ये (१-४-१५)

नान्तं शब्दरूपं क्येपरतः पदसंज्ञं भवति । क्य इति क्यच्क्यङ्क्यषां सामान्येन ग्रहणम् । क्यच्-आत्मनो राजानमिच्छति-राजीयति । क्यङ्-राजेव आचरति-राजायते । क्यष्-अचर्म चर्म भवति-चर्म्मायति, चर्म्मायते । 'सुबात्म-मनः क्यच्' (३-१-८), 'कर्त्तुः क्यङ् सलोपश्च' (३-१-११) 'लोहितादिडाज्भ्यः क्यष्' (३-१-१३) इति विहितेषु क्यजादिप्रत्ययेषु नान्तशब्दरूपस्य पदसंज्ञायां सत्यां 'न लोपः प्रातिपदिकान्तस्य' (८-२-७) इति नकारलोपो भवति । 'क्यचि च' (७-४-३४) इत्यकारस्येत्वम्, 'अकृत्सार्वधातुकयोर्दीर्घः' (७-४-२५) इति दीर्घत्वं च भवति ।

### सिति च (१-२-१६)

स् इत् यस्य स सित् तस्मिन् (बहु०) । सिति प्रत्यये परतः पूर्वं पदसंज्ञं भवति । भवदीयः । ऊर्णायुः । ऋत्वियः । 'भवतष्ठक्छसौ' (४-२-११५) इति

---

(अग्नि) के साथ पदसंज्ञा होने पर पूर्व पद से परे उत्तर पद को 'तिङ्ङतिङः' से अनुदात्त और तब स्वरित आदेश हुआ है ।। १४ ।।

### नः क्ये (१-४-१५)

नः ६।१ । क्ये ७।१ । नकारान्त शब्दरूप की क्यप्रत्यय परे रहने पर पदसंज्ञा होती है । क्य कहने से क्यच् क्यङ् और क्यष् तीनों का ग्रहण होता है, क्यच्-राजीयति । राजन्+क्यच् (अपने राजा को चाहता है ।) यहाँ पर पदसंज्ञा का फल नकार का लोप है, जिससे अंग के अकार को इत्व और दीर्घ हो सका । राजन्+क्यङ् (स्वयं जो राजा के समान आचरण करता है)—राजायते । चर्मन्+क्यष् (जो चमड़ा न होने पर भी चमड़े के समान हो जावे)—चर्मायति, चर्मायते । यहाँ पूर्ववत् पद संज्ञा से नकार लोप और अंग को दीर्घ हो गया ।। १५ ।।

### सिति च (१-४-१६)

सिति ७।१ । च (अ०) । सिति में बहुव्रीहि समास है । सित् प्रत्यय परे रहने पर पूर्व की पदसंज्ञा होती है । भवदीयः (भवत्+छस्+सुँ) ।

भवत्शब्दात् शैषिके छस्प्रत्यये कृते पूर्वस्य पदसंज्ञायां सत्यां 'झलां जशोऽन्ते' (८-२-३९) इति तकारस्य दकारः। 'आयनेयी०' (७-१-२) इति छकारस्य ईयादेशः। 'ऊर्णाया युस्' (५-२-१२३) इति ऊर्णाशब्दान्मत्वर्थे युस्प्रत्यये परतः पदसंज्ञायां सत्यां भसंज्ञाऽभावात् 'यस्येति च' (६-४-१४८) इत्याकार लोपो न भवति। 'छन्दसि घस्' (ऋतोः) (५-१-१०६) इति ऋतुशब्दात् तदस्य प्राप्तमित्यर्थे घस्प्रत्यये कृते पूर्वस्य पदसंज्ञायां सत्यां भसंज्ञानिबन्धनः 'ओर्गुणः' (६-४-१४६) इति गुणो न भवति। 'आयने०' इत्यादिना घकारस्य इयादेशः।

## स्वादिष्वसर्वनामस्थाने (१-४-१७) -१८

स्वादिषु। असर्वनामस्थाने। सु आदिर्येषां ते स्वादयस्तेषु (बहु०)। न सर्वनामस्थानम् असर्वनामस्थानं तस्मिन् (न० त०)। स्वादय इति 'स्वौजसमौट्' (४-१-२) इति सुप्रत्ययादारभ्य 'उरः प्रभृतिभ्यः कप्' (५-४-१५१) इति कप् पर्यन्ताः प्रत्यया गृह्यन्ते। स्वादिषु सर्वनामस्थानवर्जितेषु पूर्वं पदसंज्ञं भवति। राजभ्याम्, राजभिः राजत्वम् राजता, राजतरः, राजतमः। पदसंज्ञाप्रयोजनं न लोपः प्रातिपदिकान्तस्य' (८-२-७) इति नलोपः।

---

ऊर्णायुः (ऊर्णा+युस्+सुँ)। ऋत्वियः (ऋतु+घस्+सुँ)। इनमें प्रत्ययादि वर्ण छकार को ईयादेश और घकार को इयादेश हुआ है। पदसंज्ञा होने पर भवत् के तकार को दकार होना, उर्णा के आ का लोप न होना, और ऋतु के उकार को गुणादेश का होना—ये कार्य हुये हैं। यदि इस सूत्र का विधान न किया जाता तो सर्वत्र अंग की भसंज्ञा होने से ये कथित कार्य और शब्द रूप न हो पाते॥ १६॥

### स्वादिष्वसर्वनामस्थाने (१-४-१७)

स्वादिषु ७।३। असर्वनामस्थाने ७।१। स्वादिषु में बहुव्रीहि और असर्वनामस्थाने में नञ्तत्पुरुष समास है। सुँ, इत्यादि प्रत्ययों के परे रहते अंग की पदसंज्ञा होती है, सर्वनामस्थान प्रत्ययों (सुँ, औ, जस्, अम्, औट्,) को छोड़कर। राजभ्याम्, राजभिः। राजत्वम्, राजतरः, राजतमः। इन सब उदाहरणों में क्रमशः भ्याम्, भिस्, त्व, तल्, तरप् और तमप् प्रत्यय परे रहते राजन् प्रातिपदिक के नकार का पदसंज्ञा होने पर 'न लोपः प्रातिपदिकान्तस्य' से लोप हुआ है॥ १७॥

## यचि भम् (१-४-१८) -२०

यचि । भम् । य च अच् च यच् तस्मिन् (स० द्व०) । यकारादावजादौ[1] च स्वादौ सर्वनामस्थानवर्जिते प्रत्यये परतः पूर्वं भसंज्ञं भवति । पूर्वेण पदसंज्ञायां प्राप्तायां भसंज्ञाऽऽरभ्यते । यादौ-गार्ग्यः, वात्स्यः । 'गर्गादिभ्यो यञ्' (४-१-१०५) इति गर्गादिशब्दाद् गोत्रापत्ये यञ्प्रत्यये कृते तस्मिन् परतः पूर्वस्थानेन भसंज्ञायां 'यस्येति च' (६-४-१४८) इत्यलोपो भवति । अजादौ-दाक्षिः, प्लाक्षिः । दक्षस्यापत्यं पुमान् प्लक्षस्यापत्यं पुमानिति विग्रहे दक्षप्लक्षशब्दाभ्याम् 'अत इञ्' (४-१-९५) इतीञ्प्रत्यये, प्रकृतसूत्रेण पूर्वस्य भसंज्ञायां पूर्ववदलोपो भवति । ञित्वादुभयत्रादिवृद्धिः ।

(वा०)—नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् । नभ इव नभस्वत्, अंगिरा इव अंगिरस्वत्, मनुरिव मनुष्वत् ।

(वा० २)—वृषण्वस्वश्वयोः । वृषण्वसुः, वृषणश्वस्य मेने । भसंज्ञावशाद् न भवति नकारलोपः ।

## तसौ मत्वर्थे (१-४-१९)

त् च स् च तसौ (इ० द्व०) । मतुपोऽर्थः मत्वर्थस्तस्मिन् (ष० त०) ।

---

### यचि भम् (१-४-१८)

यचि ७।१ । भम् १।१ । यचि में समाहारद्वन्द्व समास है । यकारादि और अजादि स्वादि सर्वनामस्थानसंज्ञकरहित प्रत्यय के परे रहते पूर्व की भसंज्ञा होती है । यह सूत्र पदसंज्ञा का अपवाद है । पूर्व सूत्रों से सामान्यतः पदसंज्ञा प्राप्त थी, उसमें भसंज्ञा का विधान किया गया है । यकारादि में—गार्ग्यः, वात्स्यः । अजादि में—दाक्षिः, प्लाक्षिः । गर्ग, वत्स से गोत्रापत्य में यञ् तथा दक्षप्लक्ष से अनन्तरापत्य में इञ् प्रत्यय होने पर जब अंग की भसंज्ञा हुई तो 'यस्येति च' से अकारान्तांग का लोप हो गया । प्रत्यय के ञित् होने से 'तद्धितेष्वचामादेः' से अंग के आदि वर्ण को वृद्धि हो गई ।। १८ ।।

### तसौ मत्वर्थे (१-४-१९)

तसौ १।२ । मत्वर्थे ७।१ । तसौ में इतरेतरद्वन्द्व और मत्वर्थे में

---

1. 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिग्रहणं भवति ।

तकारान्तं सकारान्तं च शब्दरूपं मत्वर्थे प्रत्यये परतो भसंज्ञं भवति। तान्तम्-उदश्वित्वान् घोषः। विद्युत्वान् बलाहकः। तदस्यास्त्यस्मिन्निति 'मतुप्' (५-२-९४) इति मतुप्। मकारस्य 'झयः' (८-२-१०) इति वकारादेशस्तत्र पूर्वस्य भसंज्ञायां सत्यां 'झलां जशोऽन्ते' (८-२-३९) इत्येष पदविधिर्न भवति। सान्तम्-यशस्वी, पयस्वी। 'अस्मायामेधास्रजोविनिः' (५-२-१२१) इति मत्वर्थीये विनिप्रत्यये परतः पूर्वस्यानेन भसंज्ञायां सत्यां 'ससजुषोरुः' (८-२-६६) इत्येष पदविधिर्न भवति।

## अयस्मयादीनि छन्दसि (१-४-२०)

'अयस्मयम्' आदिर्येषां तान्ययस्मयादीनि (बहु०)। अयस्मयादीनि शब्दरूपाणि छन्दसि विषये भपदोभयसंज्ञात्वेन साधूनि भवन्ति। अयस्मयं वर्म, अयस्मयानि पत्राणि। स सुष्टुभा स ऋक्वता गणेन। अयस् शब्दाद् 'द्वयचश्छन्दसि' (४-३-१५०) इति विकारेऽर्थे विहिते मयटि पूर्वस्य 'स्वादिषु०' इति प्राप्ता पदसंज्ञा भसंज्ञया वार्य्यते तेन सस्य पदाश्रयं रुत्वं न भवति। ऋगस्यास्तीति ऋच् शब्दाद् विहिते मतुपि झयःपरत्वान् मस्य वत्वे पदसंज्ञा-

---

षष्ठीतत्पुरुष समास है। तकारान्त और सकारान्त शब्द की मत्वर्थ प्रत्यय के परे भसंज्ञा होती है। उदश्विद्वान् घोषः। विद्युत्वान् बलाहकः। यहाँ तान्त शब्दों को मतुप् (वान्) प्रत्यय के परे भसंज्ञा के कारण पदनिमित्तक जश्त्वादेश नहीं होने पाया। यशस्वी, पयस्वी। यहाँ पर भी सान्त यशस् पयस् शब्दों को मत्वर्थक विनि प्रत्यय परे रहने पर भसंज्ञावशान् पदसंज्ञा-निमित्तकरुत्व नहीं होने पाया॥ १९॥

## अस्मयादीनि छन्दसि (१-४-२०)

अयस्मयादीनि १।३। छन्दसि ७।१। अयस्मयादीनि में बहु० समास है। अयस्मय, इत्यादि शब्द वेद विषय में भ-पद—दोनों संज्ञा वाले साधु माने जाते हैं। अयस्मयं वर्म, अयस्मयानि पात्राणि। स सुष्टुभा स ऋक्वता गणेन। अयस्मयम् इत्यादि में मयट् प्रत्यय परे प्राप्त सकारान्त अयस् शब्द की पदसंज्ञा न होकर भसंज्ञा ही साधु है। फलतः सकार को रुत्वादि नहीं हुआ। ऋक्वता में भ और पद संज्ञा के कार्य साथ-साथ हुए हैं। जैसे कि मत्वर्थप्रत्यय के परे प्राप्त भसंज्ञा को, ऋच् के चकार की पदसंज्ञा मानकर बाधित कर दिया गया, जिससे 'चोः कुः' इस पदसंज्ञाविषयक सूत्र से कुत्व

ऽयं 'चोः कुः' (८-२-३०) इति कुत्वं भवति, तस्यैव पुनर्भसंज्ञावशात् 'झलां जशोऽन्ते' (८-२-३९) इति पदनिबन्धनं जश्त्वं च न भवति ।

## बहुषु बहुवचनम् (१-४-२१)

बहुष्वर्थेषु (=बहुत्वे गम्यमाने) बहुवचनं (बहुवचनसंज्ञः प्रत्ययः) भवति । ब्राह्मणाः पठन्ति । 'ङ्याप्प्रातिपदिकात्' 'स्वौजसमौट्०' (४-१-१।२) इति स्वादयः, 'लस्य' 'तिप्तस्झि०' (३-४-७७।७८) इति तिबादयः समान्येन विहिता, 'तिङस्त्रीणि०', 'तान्येकवचनद्विवचनबहुवचनान्येकशः' सुपः' (१-४-१०१।१०२।१०३) इति सुप्तिङां त्रिकाणामेकवचनादिसंज्ञा वक्ष्यन्ते । तत्रायं नियमः क्रियते बहुष्वर्थेषु प्रातिपदिकाद्धातोर्वा बहुवचनसंज्ञकः प्रत्ययो जसादि-र्झ्यादिर्वा भवतीति । 'सरूपाणामेकशेष०' (१-२-६४) इत्येकशेषश्चात्रोप-युज्यते ।

## द्व्येकयोर्द्विवचनैकवचने (१-४-२२)

द्व्येकयोः । द्विवचनैकवचने । द्विश्चैकश्च द्व्येकौ तयोः (इ० द्व०) । द्विवचनं चैकवचनं च द्विवचनैकवचने (इ० द्व०) । द्वित्वे द्विवचनं भवत्येकत्वे एकवचनं । ब्राह्मणौ पचतः । ब्राह्मणः पचति । पूर्ववद् द्वित्वे औ-तसौ, एकत्वे सुतिपौ । एवमन्यत्रापि द्वितीयादिविभक्तौ योज्यम् ।

---

हो गया । परन्तु वहीं पर पुनः ककार को जश्त्व भसंज्ञा मानने पर नहीं होने पाया ।। २० ।।

### बहुषु बहुवचनम्

बहुषु ७।३ । बहुवचनम् १।१ । बाहुल्य अर्थ प्रतीत होने पर बहुवचन होता है । बाह्मणाः पठन्ति । यहाँ प्रातिपदिक ब्राह्मण से प्रथमा विभक्ति का जस् प्रत्यय और पठधातु से झि प्रत्यय लट् प्रथम पुरुष बहुवचन में हुए हैं ।। २१ ।।

### द्व्येकयोर्द्विवचनैकवचनने (१-४-२२)

द्व्येकयोः ७।२ । द्विवचनैकवचने १।२ । यहाँ दोनों समस्त पद इतरेतरद्वन्द्व हैं । द्वित्व अर्थ में द्विवचन का प्रत्यय और एकत्व अर्थ में एकवचन का प्रत्यय होता है । ब्राह्मणौ पचतः । ब्राह्मणः पचति । यहाँ दो के अर्थ में प्रातिपदिक और धातु से क्रमशः औ तथा तस् प्रत्यय, एवम् एकत्व अर्थ में सु और तिप् प्रत्यय हुए हैं ।। २२ ।।

## कारके (१-४-२३) -५५

यदित ऊर्ध्वमनुक्रमिष्यामस्तत् कारके इत्येवं वेदितव्यम्। विशेषण-मेतदपादानादिसंज्ञाविषयमधिकारश्च।

## ध्रुवमपायेऽपादानम् (१-४-२४) -३१

ध्रुवम्। अपाये। अपादानम्। अपायो विश्लेषो विभागो वा। ध्रुवं यदपाययुक्तमपाये साध्ये यदवधिभूतं तत्कारकमपादनसंज्ञं भवति। ग्रामादागच्छति। पर्वतादवरोहति। सार्थाद्धीनः सार्थात्पतितः। अपायेसाध्ये पर्वतादयो ध्रुवा अवधिभूताश्च, तेषां प्रकृतसूत्रेणापादानसंज्ञायां जातायाम् 'अपादाने पञ्चमी' (२-३-२८) इति पञ्चमी विभक्तिर्भवति।

## भीत्रार्थानां भयहेतुः (१-४-२५)

भीत्रार्थानाम्। भयहेतुः। भीतिर्भीः, त्राणं त्राः 'क्विप् च' (३-२-७६) इति क्विप्प्रत्ययः। भीश्च त्राश्च भीत्रौ तावर्थौ येषां ते भीत्रार्थास्तेषां (द्वन्द्व-

---

### कारके (१-४-२३)

कारके ७।१। इस सूत्र से आगे ५५ वें सूत्र तक जो कुछ भी विधान किया गया है, वह 'कारके' (कारक में) होगा—ऐसा जानना चाहिए। यह अधिकार सूत्र है ।। २३ ।।

### ध्रुवमपायेऽपादानम् (१-४-२४)

ध्रुवम् १।१। अपाये ७।१। अपादानम् १।१। हटने, पृथग् होने (इस प्रकार की क्रिया) में जो वस्तु ध्रुव=स्थिर, निश्चल रहता हो, वह कारक (क्रिया सिद्धि का हेतु) अपादान कारक कहलाता है। ग्रामाद् आगच्छति। पर्वताद् अवरोहति। सार्थाद् हीनः। सार्थाद् पतितः। यहाँ ग्राम, पर्वत और साथी से क्रमशः आना, उतरना, पृथग् होना छूटना क्रियायें हो रही हैं, और ग्रामादि ध्रुव हैं। अतः उनकी अपादान संज्ञा हुई और 'अपादाने पञ्चमी' से पञ्चमी विभक्ति हो गई है ।। २४ ।।

### भीत्रार्थानां भयहेतुः (१-४-२५)

भीत्रार्थानाम् ६।३ भयहेतुः १।१। भीत्रा० में द्वन्द्व गर्भ बहुव्रीहि और भयहेतुः में षष्ठी तत्पुरुष समास है। डरने और रक्षा करने (बचाने)

गर्भो बहुव्रीहिः)। भयस्यहेतुः भयहेतुः (ष० त०)। बिभेत्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतुर्यस्तत्कारकमपादानसंज्ञं भवति। चौरेभ्यो बिभेति, चौरेभ्य उद्विजते। चौरेभ्यस्त्रायते, चौरेभ्यो रक्षति।

### पराजेरसोढः (१-४-२६)

पराजेः। असोढः। सोढुं शक्यः सोढो, न सोढोऽसोढः (न० त०)। परापूर्वस्य जिधातोः प्रयोगेऽसोढो योऽर्थस्तत्कारकमपादानसंज्ञं भवति। अध्ययनात् पराजयते।

### वारणार्थानामीप्सितः (१-४-२७)

वारणार्थानाम्। ईप्सितः। वारणमर्थो येषां ते वारणार्थास्तेषाम् (बहु०)। वारणार्थानां धातूनां प्रयोगे य ईप्सित आप्तुमिष्टोऽर्थस्तत्कारकमपादानसंज्ञं भवति। यवेभ्यो गां वारयति, यवेभ्यो गां निवर्त्तयति।

### अन्तर्द्धौ येनादर्शनमिच्छति (१-४-२८)

अन्तर्द्धौ। येन। अदर्शनम्। इच्छति। व्यवधानमन्तर्द्धिः। अन्तर्द्धि-

---

अर्थ वाली धातुओं के प्रयोग में भय का हेतु जो कारक हो, वह अपादान संज्ञक होता हैं। चौरेभ्यो बिभेति; चौरेभ्य उद्विजते। चौरेभ्यस्त्रायते; चौरेभ्यो रक्षति। अपादान कारक होने से चौरेभ्य: में पञ्चमी विभक्ति का प्रयोग हुआ॥ २५॥

### पराजेरसोढः (१-४-२६)

पराजे: ६।१। असोढ: १।१। असोढ: में नञ्तत्पुरुष समास है। परापूर्वक जि (=जये) धातु के प्रयोग में जो सहन नहीं किया जा सके, वह अपादान कारक होता है। अध्ययनात् पराजयते (=अध्ययन से घबराता है)॥ २६॥

### वारणार्थानामीप्सितः (१-४-२७)

वारणार्थानाम् ६।३। ईप्सित: १।१। वारणा० में बहुव्रीहि समास है। रोकने अर्थ वाली धातुओं के प्रयोग में प्राप्ति के लिये अभीष्ट जो वस्तु हो, वह अपादान कारक होता है। यवेभ्यो गां वारयति। यवेभ्यो गां निवर्त्तयति (जौ के खेतों से गाय को रोकता है)। यव के अपादान होने से, उसमें पंचमी विभक्ति हुई॥ २७॥

### अन्तर्द्धौ येनादर्शनमिच्छति १-४-२८)

अन्तर्द्धौ ७।१। येन ३।१। अदर्शनम् १।१। इच्छति (क्रियापदम्)।

निमित्तं येनादर्शनमात्मन इच्छति तत्कारकमपादानसंज्ञं भवति। उपाध्यायादन्तर्धत्ते। उपाध्यायान्निलीयते।

### आख्यातोपयोगे (१-४-२९)

आख्याता। उपयोगे। आख्याता प्रतिपादयिता। उपयोगो नियमपूर्वकं विद्याग्रहणम्। उपयोगे साध्ये य आख्याता तत्कारकमपादानसंज्ञं भवति। उपाध्यायादधीते। उपाध्यायागमयति।

### जनिकर्त्तुः प्रकृतिः (१-४-३०) -३१

जनेः कर्त्ता जनिकर्त्ता तस्य (ष० त०)। जन्यर्थस्य जन्मनः कर्त्तुर्जायमानस्य या प्रकृतिस्तत्कारकमपादानसंज्ञं भवति। शृङ्गाच्छरो जायते। गोमयाद् वृश्चिको जायते।

### भुवः प्रभवः (१-४-३१)

भवनं भूस्तस्य। प्रभवत्यस्मादिति प्रभवः। भूकर्त्तुर्यः प्रभवस्तत्कारकमपादानसंज्ञं भवति। हिमवतो गंगा प्रभवति। काश्मीरेभ्यो वितस्ता प्रभवति। तत्र प्रथमत उपलभ्यते इत्यर्थः।

---

छिपने के लिये जिससे अपना अदर्शन चाहे, वह कारक अपादान होता है। उपाध्यायादन्तर्धत्ते। उपाध्यायान्निलीयते (=अध्यापक से छिपता है।)॥ २८॥

### आख्यातोपयोगे (१-४-२९)

आख्याता १।१। उपयोगे ७।१। उपयोग अर्थात् नियमपूर्वक विद्याग्रहण में जो आख्याता (व्याख्याता) हो, उसकी अपादान संज्ञा होती है। उपाध्यायादधीते। उपाध्यायादागमयति॥ २९॥

### जनिकर्त्तुः प्रकृतिः (१-४-३०)

जनिकर्त्तुः ६।१। प्रकृतिः १।१। जनिकर्त्तुः में ष० तत्पुरुष है। किसी की उत्पत्ति जिससे की जाती हो, वह अपादान कारक होता है। शृंगात् शरो जायते। गोमयाद् वृश्चिको जायते॥ ३०॥

### भुवः प्रभवः (१-४-३१)

भुवः ६।१। प्रभवः १।१। उत्पन्न होने वाली वस्तु के प्रति जो उत्पत्ति का कारण हो, वह अपादान कारक होता है। हिमवतो गंगा प्रभवति। काश्मीरेभ्यो वितस्ता प्रभवति॥ ३१॥

### कर्मणा यमभिप्रैति स सम्प्रदानम् (१-४-३२) -४१

कर्मणा । यम् । अभिप्रैति । स । सम्प्रदानम् । 'कर्त्तुरीप्सिततमं कर्म' (१-४-४९) इति यस्य कर्मसंज्ञां वक्ष्यति तेन करणभूतेन कर्त्ता यमभिप्रैति (अभिसम्बध्नाति) तत्कारकं सम्प्रदानसंज्ञं भवति । अन्वर्थसंज्ञासामर्थ्याद् ददातिक्रियायाः कर्मणेति विज्ञायते, सोऽपि देयोऽर्थश्चेत् स्वस्वत्वनिवृत्तिपूर्वके परस्वत्वोत्पादने वर्तते । उपाध्यायाय गां ददाति । माणवकाय भिक्षां ददाति । सम्प्रदानसंज्ञायां सत्यां 'चतुर्थी सम्प्रदाने' (२-३-१३) इति चतुर्थीविभक्ति-र्भवति ।

(वा० १)—क्रिययापि यमभिप्रैति स सम्प्रदानम् । श्राद्धाय निगर्हते, युद्धाय संनह्यते, पत्ये शेते ।

(वा० २)—कर्मणः करणसंज्ञा वक्तव्या सम्प्रदानस्य च कर्मसंज्ञा । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ।

### रुच्यर्थानां प्रीयमाणः (१-४-३३)

रुच्यर्थानाम् । प्रीयमाणः । रुचिना समानार्था रुच्यर्थाः । 'मयूरव्यं-सकादयश्च' (२-१-७२) इति समासः-मध्यपदलोपी तत्पुरुषः । रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणो योऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति । देवदत्ताय रोचते मोदकः । यज्ञदत्ताय स्वदतेऽपूपः । यद्यपि रुच्धातुर्दीप्तौ तथापीहाभिलाषे

---

### कर्मणा यमभिप्रैति स सम्प्रदानम् (१-४-३२)

कर्मणा ३।१ । यम् २।१ । अभिप्रैति (तिङन्तमाख्यातपदम्) । सः १।१ । सम्प्रदानम् १।१ । करण भूत कर्म (कारक) के द्वारा जिसको अभिप्रेत-सम्बद्ध या लक्षित करें, वह सम्प्रदान कारक होता है । उपाध्यायाय गां ददाति । माणवकाय भिक्षां ददाति । यहां गोदान और भिक्षादान द्वारा क्रमशः उपाध्याय और माणवक सम्बद्ध हो रहे हैं, अतः उनकी सम्प्रदान संज्ञा हुई । पुनः 'चतुर्थी सम्प्रदाने' से उनमें चतुर्थी विभक्ति हुई ।। ३२ ।।

### रुच्यर्थानां प्रीयमाणः (१-४-३३)

रुच्यर्थानाम् ६।३ । प्रीयमाणः १।१ । रुच्यर्थानाम् में तत्पुरुष अथवा बहुव्रीहि समास से सङ्गति लगाई जा सकती है । रुच्यर्थक धातुओं के प्रयोग में प्रसन्न होने वाले कारक की सम्प्रदान संज्ञा होती है । देवदत्ताय रोचते

वर्त्ततेऽनेकार्थत्वाद्धातूनाम् । तत्रैव प्रीयमाणार्थस्य सम्भवात् । यस्य ह्यभिलाषः स प्रीयमाणस्तृप्यमाण इत्यर्थः ।

### श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः (१-४-३४)

श्लाघह्नुङ्स्थाशपाम् । ज्ञीप्स्यमानः । श्लाघश्च ह्नुङ् च स्था च शप् च श्लाघह्नुङ्स्थाशपः तेषाम् (इ० द्व०)। श्लाघृ (=प्रकत्थने) ह्नुङ् (=अपनयने) ष्ठा (=गतिनिवृत्तौ)-शप (=आक्रोशे) धातूनां ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाणो योऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति । देवदत्ताय श्लाघते । देवदत्ताय ह्नुते । देवदत्ताय तिष्ठते । देवदत्ताय शपते । देवदत्तं श्लाघमानस्तां श्लाघां तमेव ज्ञपयितुमिच्छतीत्यर्थः ।

### धारेरुत्तमर्णः (१-४-३५)

धारेः । उत्तमर्णः । उत्तममृणं यस्य स उत्तमर्णः (बहु०) धनस्वामी । धृञ् (=धारणे) धातोर्णिजन्तस्य प्रयोगे उत्तमर्णो योऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति । देवदत्ताय शतं धारयति । यज्ञदत्ताय शतं धारयति । देवदत्तस्य (षष्ठी शेषे २-३-२०) इति प्राप्ते तस्यायं पुरस्तापवादः ।

---

मोदकः । यज्ञदत्ताय स्वदतेऽपूपः । रुच्यर्थ से अभिप्राय अभिलाषा के अर्थ से है ॥ ३३ ॥

### श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः (१-४-३४)

श्लाघह्नुङ्स्थाशपाम् ६।३ । ज्ञीप्स्यमानः १।१ । श्लाघ० इत्यादि में इ० द्वन्द्व समास है । श्लाघ, ह्नुङ् स्था और शप् धातुओं का जो जनाये (बतलाए) जाने वाला अर्थ हो, उसकी सम्प्रदान संज्ञा होती है । देवदत्ताय श्लाघते । देवदत्ताय ह्नुते । देवदत्ताय तिष्ठते । देवदत्ताय शपते । देवदत्त को जानने के लिए जो उसकी प्रशंसा । निन्दा करे । ठहरे । गाली देवे, उसके लिए ये प्रयोग हैं । यहाँ देवदत्त सम्प्रदान कारक हुआ, और उसमें चतुर्थी विभक्ति आई ॥ ३४ ॥

### धारेरुत्तमर्णः (१-४-३५)

धारेः ६।१ । उत्तमर्णः १।१ । उत्तमर्णः में बहु० समास है; और यह ऋणदाता धन के स्वामी (साहूकार) के अर्थ में प्रयुक्त होता है । धारि धातु के प्रयोग में उत्तमर्ण की सम्प्रदान संज्ञा होती है । देवदत्ताय शतं धारयति । यज्ञदत्ताय शतं धारयति । देवदत्त के यज्ञदत्त के सौ (रुपये, आदि) देने हैं— यह अर्थ है ॥ ३५ ॥

## स्पृहेरीप्सितः (१-२-३६)

स्पृहेः । ईप्सितः । स्पृह (=ईप्सायां चुरादिरदन्तः) धातोरीप्सितो योऽर्थस्तत्कारकं सम्प्रदानसंज्ञं भवति । पुष्पेभ्यः स्पृहयति । फलेभ्यः स्पृहयति । णिचि अतोलोपस्य स्थानिवद्भावाल्लघूपधगुणाऽभावः ।

## क्रुधद्रुहेर्ष्यासूयार्थानां यंप्रति कोपः (१-४-३७) -३८

क्रुधद्रुहेर्ष्यासूयार्थानाम् । यम् । प्रति । कोपः । क्रुधश्च द्रुहश्च ईर्ष्या च असूया च क्रुधद्रुहेर्ष्यासूयास्तेषामर्थाः क्रुधद्रुहेर्ष्यासूयार्थास्तेषाम् । (द्वन्द्वगर्भस्तत्पुरुषः) । अमर्षः=क्रोधः । अपकारो=द्रोहः । अक्षमा=ईर्ष्या । गुणेषु दोषाविष्करणमसूया । क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपस्तत्कारकं सम्प्रदानसंज्ञं भवति । देवदत्ताय क्रुध्यति । देवदत्ताय द्रुह्यति । देवदत्तायेर्ष्यति । देवदत्तायासूयति ।

## क्रुधद्रुहोरुपसृष्टयोः कर्म (१-४-३८)

क्रुधद्रुहोः उपसृष्टयोः । कर्मः । क्रुधश्च द्रुह् च क्रुधद्रुहौ तयोः (इ० द्व०) । क्रुधद्रुहोरुपसर्गसम्बद्धयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं भवति । पूर्वेण

---

### स्पृहेरीप्सितः (१-४-३६)

स्पृहेः ६।१ । ईप्सितः १।१ । स्पृह धातु के प्रयोग में ईप्सित (वांछित) की सम्प्रदान संज्ञा होती है । पुष्पेभ्यः स्पृहयति । फलेभ्यः स्पृहयति । यहाँ ईप्सित वस्तु पुष्प और फल हैं, उनकी संप्रदान संज्ञा हुई ।। ३६ ।।

### क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः (१-४-३७)

क्रुधद्रुहेर्ष्यासूयार्थानाम् ६।३ । यम् २।१ । प्रति (अ०) । कोपः १।१ । क्रुधद्रुहेर्ष्या० में द्वन्द्व गर्भ तत्पुरुष समास है । क्रोध, द्रोह, ईर्ष्या (अक्षम) और असूया (निन्दा) अर्थ वाली धातुओं के प्रयोग में जिसके प्रति कोप हो रहा हो, उस कारक की सम्प्रदान संज्ञा होती है । देवदत्ताय क्रुध्यति । देवदत्ताय द्रुह्यति । देवदत्ताय ईर्ष्यति । देवदत्ताय असूयति ।। ३७ ।।

### क्रुधद्रुहोरुपसृष्टयोः कर्म (१-४-३८)

क्रुधद्रुहोः ६।२ । उपसृष्टयोः ६।२ । कर्म १।१ । क्रुधद्रुहोः में इ० द्वन्द्व समास है । क्रुध और द्रुह धातु उपसर्गयुक्त हों, तो जिसके प्रति कोप

सम्प्रदानसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते। देवदत्तमभिक्रुध्यति। देवदत्तमभिद्रुह्यति। कर्मकारकविधानात् 'कर्मणि द्वितीया' (२-३-२) इति द्वितीया विभक्तिर्भवति।

### राधीक्ष्योर्यस्य विप्रश्नः (१-४-३९)

राधीक्ष्योः। यस्य। विप्रश्नः। राधिश्च ईक्षिश्च राधीक्षी तयोः (इ० द्व०)। राधीक्ष्योः कारकं, यस्य विप्रश्नो विविधः प्रश्नो भवति, तत् सम्प्रदानसंज्ञं भवति। देवदत्ताय राध्यति। देवदत्तायेक्षते। नैमित्तिको दैवज्ञो वा पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः।

### प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता (१-४-४०) -४१

प्रत्याङ्भ्याम्। श्रुवः। पूर्वस्य। कर्त्ता। प्रतिश्च आङ् च प्रत्याङौ ताभ्याम् (इ० द्व०)। प्रति आङ् पूर्वस्य श्रु (=श्रवणे) धातोः कारकं सम्प्रदानसंज्ञं भवति तच्चेत् पूर्वस्याः क्रियायाः कर्त्ता भवति। देवदत्ताय गां प्रतिश्रृणोति। देवदत्ताय गामाश्रृणोति। प्रतिजानीत इत्यर्थः। देवदत्तः पूर्वं गां याचते स एव सम्प्रदानकारकं भवति यदाऽन्यस्तस्मै गां दातुं प्रतिजानीते।

---

दिखाया जा रहा है, वह कर्मकारक होता है। यहाँ सम्प्रदान संज्ञा के अपवादभूत कर्म संज्ञा का विधान है। देवदत्तमभिक्रुध्यति। देवदत्तम् अभिद्रुह्यति। यहाँ 'कर्मणि द्वितीया' से कर्मकारक में द्वितीया विभक्ति हुई॥ ३८॥

### राधीक्ष्योर्यस्य विप्रश्नः (१-४-३९)

राधीक्ष्योः ६।२। यस्य ६।१। विप्रश्नः १।१। राधीक्ष्योः में इ० द्वन्द्व समास है। राध और ईक्ष धातुओं के प्रयोग में, जिसके विषय में विविध प्रश्न होते हों, वह सम्प्रदान कारक होता है। देवदत्ताय राध्यति। देवदत्ताय ईक्षते। नैमित्तिक या दैवज्ञ, पूछे जाने पर देवदत्त का भाग्य पर्यालोचन करता है। अतः देवदत्त की सम्प्रदान संज्ञा हुई॥ ३९॥

### प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता (१-४-४०)

प्रत्याङ्भ्याम् ५।२। श्रुवः ६।१। पूर्वस्य ६।१। कर्त्ता १।१। प्रत्याङ्भ्याम् में इ० द्वन्द्व है। प्रतिपूर्वक और आङ्पूर्वक श्रु धातु के प्रयोग में पूर्व (क्रिया) के कर्त्ता की सम्प्रदान संज्ञा होती है। देवदत्ताय गां प्रतिश्रृणोति देवदत्ताय गामाश्रृणोति। देवदत्त पहले गौ को माँगता है, वही सम्प्रदान होता है, जब दूसरा उसको गौ देने की प्रतिज्ञा करता है॥ ४०॥

### अनुप्रतिगृणश्च (१-४-४१)

अनुप्रतिगृणः । च । अनुपूर्वस्य च 'गृ' (=शब्दे, क्र्यादिः) धातोः कारकं पूर्वस्याः क्रियायाः कर्त्तृभूतं सम्प्रदानसंज्ञं भवति । होत्रेऽनुगृणाति । प्रतिगृणाति । होतारं शंसन्तं प्रोत्साहयतीत्यर्थः ।

### साधकतमं करणम् (१-४-४२) -४४

साधकतमम् । करणम् । क्रियासिद्धौ यत्प्रकृष्टोपकारकं विवक्षितं तत्साधकतमं कारकं करणसंज्ञं भवति । दात्रेण लुनाति । परशुना छिनत्ति । करणसंज्ञायां 'कर्त्तृकरणयोस्तृतीया' (२-३-१८) इति तृतीया विभक्तिर्भवति ।

### दिवः कर्म च (१-४-४३)

दिवु (=क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु) धातोः साधकतमं यत्कारकं तत्कर्मसंज्ञं भवति चकारात्करणसंज्ञं च । अक्षान् दीव्यति । अक्षैर्दीव्यति ।

### परिक्रयणे सम्प्रदानमन्यतरस्याम् (१-४-४४)

परिक्रयणे । सम्प्रदानम् । अन्यतरस्याम् । परिक्रयणे साधकतमं

---

#### अनुप्रतिगृणश्च (१-४-४१)

अनुप्रतिगृण: ६।१ । च (अ०) । अनुप्रतिगृण: में द्वन्द्व-गर्भ पञ्चमी तत्पुरुष समास है। अनुपूर्वक और प्रतिपूर्वक गृणाति धातु के प्रयोग में पूर्व का कर्त्ता सम्प्रदानकारक होता है। होत्रेऽनुगृणाति । होत्रे प्रतिगृणाति । अर्थात् होता को प्रोत्साहित करने के लिए उसके मंत्र बोलने पर अध्वर्यु मंत्र बोलता है ।। ४१ ।।

#### साधकतमं करणम् (१-४-४२)

साधकतमम् १।१ । करणम् १।१ । क्रिया की सिद्धि में जो सर्वाधिक उपकारक अथवा सहायक हो, उसकी करण संज्ञा होती है । दात्रेण लुनाति । परशुना छिनत्ति । करण कारक होने पर उसमें तृतीया विभक्ति हुई ।। ४२ ।।

#### दिवः कर्म च (१-४-४३)

दिव: ६।१ । कर्म १।१ । च (अ०) । दिव् धातु के प्रयोग में जो साधकतम कारक होता है, वह कर्मकारक और करण कारक दोनों होता है । अक्षान् दीव्यति । अक्षैर्दीव्यति । कर्म में द्वितीया और करण में तृतीया विभक्ति हो गई ।। ४३ ।।

#### परिक्रयणे सम्प्रदानमन्यतरस्याम् (१-४-४४)

परिक्रयणे ७।१ । सम्प्रदानम् १।१ । अन्यतरस्याम् ७।१ । परिक्रयण

कारकमन्यतरस्याम् सम्प्रदानसंज्ञं भवति । पक्षे करणं च । परिक्रयणं नियतकालं वेतनादिना स्वीकरणम् । शतेन परिक्रीतोऽनुब्रूहि । शताय परिक्रीतोऽनुब्रूहि । सहस्रेण परिक्रीतोऽनुब्रूहि । सहस्राय परिक्रीतोऽनुब्रूहि ।

आधारोऽधिकरणम् (१-४-४५) -४८

आधारः । अधिकरणम् । कर्तृकर्मणोर्धारणक्रियां प्रति य आधारस्तत्कारकमधिकरणसंज्ञं भवति । कटे आस्ते । कटे शेते । स्थाल्यां पचति । अधिकरणसंज्ञायां 'सप्तम्यधिकरणे च' (२-३-३६) इति सप्तमीविभक्तिः ।

अधिशीङ्स्थासां कर्म (१-४-४६) -४८

अधिशीङ्स्थासाम् । कर्म । शीङ् च स्थाश्च आस् च, शीङ्स्थासः (इ० द्व०) अधेः शीङ्स्थासः=अधिशीङ्स्थासस्तेषाम् (प० त०) । अधिपूर्वकाणां शीङ्स्थासामाधारो यस्तत्कारकं कर्मसंज्ञं भवति । पूर्वस्यापवादः । ग्राममधिशेते । ग्राममधितिष्ठति । पर्वतमध्यास्ते ।

---

(=ऋण न चुकाने पर जब किसी को नौकरी के लिये खरीद लिया जाता हो उस अवस्था) में साधकतम कारक की विकल्प से सम्प्रदान संज्ञा होती है । पक्ष में करण संज्ञा भी । शतेन परिक्रीतोऽनुब्रूहि । शताय परिक्रीतोऽनुब्रूहि । सहस्रेणपरिक्रीतोऽनुब्रूहि । सहस्राय परिक्रीतोऽनुब्रूहि ।। ४४ ।।

आधारोऽधिकरणम् (१-४-४५)

आधारः १।१ । अधिकरणम् १।१ । कर्त्ता और कर्म की धारण क्रिया के प्रति जो आधार हो उस कारक की अधिकरण संज्ञा होती है । कटे आस्ते । कटे शेते । स्थाल्यां पचति । यहाँ पर बैठने की क्रिया के कर्त्ता का आधार कट (चटाई) है और पकाने की क्रिया के कर्म तण्डुलादि का आधार स्थाली (पतीली) हैं, उसकी अधिकरण संज्ञा होने से उसमें 'सप्तम्यधिकरणे' से सप्तमी विभक्ति हो गई ।। ४५ ।।

अधिशीङ्स्थासां कर्म (१-४-४६)

अधिशीङ्स्थासाम् ६।३ । कर्म १।१ । अधिशीङ्स्थासाम् में द्वन्द्वगर्भ पञ्चमीतत्पुरुष है । अधिपूर्वक शीङ्स्था और आस् धातुओं के आधार की कर्मसंज्ञा होती है । यह पूर्वसूत्र का अपवाद है । ग्रामम् अधिशेते । ग्रामम् अधितिष्ठति । पर्वतम् अध्यास्ते । आधार की कर्मसंज्ञा होने से उसमें द्वितीया विभक्ति हो गई ।। ४६ ।।

### अभिनिविशश्च (१-४-४७)

अभिनिविशः । च । अभिश्च निश्च अभिनी (इ० द्व०), ताभ्यां विश्-अभिनिविट् तस्य (प० त०) । अभिनिपूर्वस्य विश् (=प्रवेशने) धातोराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममभिनिविशते ।

### उपान्वध्याङ्वसः (१-४-४८)

उपश्च अनुश्च अधिश्च आङ् च उपान्वध्याङस्तेभ्यो वस् उपान्वध्याङ्-वस्, तस्य (द्वन्द्वगर्भस्तत्पुरुषः) । उप-अनु-अधि-आङ्पूर्वस्य वस् (=निवासे) धातोराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममुपवसति सेना । पर्वतमुपवसति । ग्राममनुवसति । ग्राममधिवसति । ग्राममावसति ।

(वा०)—वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः । ग्रामे उपवसति । भोजननिवृत्तिं करोतीत्यर्थः ।

### कर्त्तुरीप्सिततमं कर्म (१-४-४९) -५३

कर्त्तुः । ईप्सिततमम् । कर्म । कर्त्तुः क्रियया यदाप्तुमिष्टतमं तत्कारकं कर्मसंज्ञं भवति । कटं करोति । ग्रामं गच्छति ।

---

**अभिनिविशश्च (१-४-४७)**

अभिनिविशः ६।१ । च (अ०) । अभिनिविशः में द्वन्द्वगर्भ पञ्चमी-तत्पुरुष है । अभि और नि उपसर्ग के साथ विश् धातु हो तो उसका आधार भी कर्मसंज्ञक होता है । ग्रामम् अभिनिविशते । यहाँ नेर्विशः से आत्मने पद हुआ है ॥ ४७ ॥

**उपान्वध्याङ्वसः (१-४-४८)**

उपान्वध्याङ्वसः ६।१ । इसमें भी द्वन्द्वगर्भतत्पुरुष समास है । उप, अनु, अधि, आङ् उपसर्गों के पूर्व रहते वस् धातु का आधार कर्मसंज्ञक होता है । ग्रामम् उपवसति सेना । ग्रामम् अनुवसति । ग्रामम् अधिवसति । ग्रामम् आवसति ॥ ४८ ॥

**कर्त्तुरीप्सिततमं कर्म (१-४-४९)**

कर्त्तुः ६।१ । ईप्सिततमम् १।१ । कर्म १।१ । कर्त्ता का जो अपनी क्रिया द्वारा अत्यन्त ईप्सित (प्राप्ति के लिये चाहा गया) हो, उस कारक की कर्म संज्ञा होती है । कटं करोति । ग्रामं गच्छति । 'कर्मणो द्वितीया' से कर्म में द्वितीया विभक्ति हो गई ॥ ४९ ॥

## तथायुक्तं चानीप्सितम् (१-४-५०)

तथायुक्तम् । च । अनीप्सितम् । तेनप्रकारेण युक्तं तथायुक्तम् । 'मयूरव्यंसकादयश्च' (२-१-७१) इति तत्पुरुषसमासः । न ईप्सितम् अनीप्सितम् (न० त०) येन प्रकारेण कर्त्तुरीप्सिततमं क्रियया युज्यते तेनैव चेत् प्रकारेण यदनीप्सितं क्रिययायुक्तं भवति तत् कर्मसंज्ञं भवति । ईप्सितादन्यत्सर्वमनीप्सितं-द्वेष्यमितरच्च । विषं भक्षयति । चौरान् पश्यति । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति ।

## अकथितं च (१-४-५१)

अकथितम् । च । न कथितम् अकथितम् (न० त०) अपादानादिविशेषकथाभिर्न कथितमित्यर्थः । अकथितं च यत्कारकं तत्कर्मसंज्ञं भवति । गां दोग्धि पयः । पौरवं गां याचते । गामवरुणद्धि व्रजम् । माणवकं पन्थानं पृच्छति । पौरवं गां भिक्षते । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते । माणवकं धर्ममनुशास्ति । एतेषु क्रमेण गाम्, पौरवम्, व्रजम्, माणवकम्, पौरवम्, वृक्षम् इत्येषां पदानां प्रकृतसूत्रेण कर्मसंज्ञाऽस्ति सा चाप्रधाना, प्रधानं कर्मं तु पयः प्रभृतिद्वितीयपदमेव । यस्य धातोः प्रयोगे द्विकर्मता तत्रैवेयं प्रधानाऽप्रधानता । परिगणनं खलु कृतं पूर्वाचार्य्यैस्तादृशधातूनां वक्ष्यमाणकारिकायाम्—

---

### तथायुक्तं चानीप्सितम् (१-४-५०)

तथायुक्तम् १।१ । च (अ०) । अनीप्सितम् १।१ । तथायुक्तं में तत्पुरुष है । अनीप्सितं में न० तत्पुरुष । कर्त्ता के ईप्सिततम की भाँति यदि अनीप्सित भी क्रिया से युक्त हो तो उसकी भी कर्मसंज्ञा होती है । विषं भक्षयति । चौरान् पश्यति । ग्रामं गच्छन् वृक्षमूलानि उपसर्पति । यहां विष, चौर और वृक्षमूल अनीप्सित हैं और उनकी भी कर्मसंज्ञा होने से उनमें द्वितीया विभक्ति हुई है ।। ५० ।।

### अकथितं च (१-४-५१)

अकथितम् १।१ । च (अ०) । अकथितम् में नञ्तत्पुरुष है । अपादानादि कारकों से जो नहीं कहा गया है, वह कारक भी कर्मसंज्ञक होता है । अकथित कारक की भी कर्मसंज्ञा होती है । गां दोग्धि पयः । पौरवं गां याचते । गामवरुणद्धि व्रजम् । माणवकं पन्थानं पृच्छति । पौरवं गां भिक्षते । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते । माणवकं धर्ममनुशास्ति । इन

दुहियाचिरुधिपृच्छिभिक्षिचित्रामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥

उपयुज्यते इत्युपयोगः । दुह (=प्रपूरणे) इत्यादिधातोर्थं उपयोगः पयः प्रभृति तस्य यन्निमित्तं गवादि पूर्वसूत्रेष्वनिर्दिष्टकारकं तदेवेह कर्मसंज्ञं विधीयते । ब्रूञ् (=व्यक्तायां वाचि)-शासु (=अनुशिष्टौ) धात्वोर्योगुणः=साधनं प्रधानं कर्म तेन यत्सम्बध्यते माणवकादिकं तदध्यकथितमुक्तं सूत्रेकारेणेत्यर्थः ।

## गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ (१-४ ५२) -५३

गतिः······अकर्मकाणाम् । अणि । कर्त्ता । स । णौ । 'गतिबुद्धि०' इत्यत्रेतरद्वन्द्वसमासः[1] । न णिः, अणिस्तस्मिन् । गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानाम् (=अभ्यवहारार्थानाम्) धातूनां तथा शब्दकर्मकाणामकर्मकाणाञ्च धातूनाम् अण्यन्तानां यः कर्त्ता स ण्यन्तानां कर्मसंज्ञो भवति । गत्यर्थानाम्—गच्छति माणवको ग्रामम् । गमयति माणवकं ग्रामम् । बुद्ध्यर्थानाम्—

---

उदाहरणों में क्रमशः गाम्, पौरवम्, व्रजम्, माणवकम्, पौरवम्, वृक्षम्, माणवकम् ये अप्रधान (अकथित) कर्म हैं । अतः इनमें भी प्रधान कर्म—पयः, गाम्, पन्थानम्, फलानि, धर्मम् के समान द्वितीया विभक्ति हुई है । यह प्रधानाऽप्रधानकर्मता द्विकर्मक धातुओं के योग में ही होती है, जिनका परिगणन दुहियाचिरुधि० इत्यादि कारिका में पूर्वाचार्यों द्वारा किया गया है । ये आठ धातुयें हैं—दुह्, याच्, रुध्, पृच्छ्, भिक्ष्, चि, ब्रू तथा शास् ॥ ५१ ॥

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ (१-४-५२)**

गति···शब्दकर्माकर्मकाणाम् ६।३ । अणि ७।१ । कर्त्ता १।१। सः १।१। णौ ७।१ । गति बुद्धि० इत्यादि में भीतर द्वन्द्वगर्भ बहुव्रीहि, बहुव्रीहि और अन्त में द्वन्द्व समास है । अणि में नञ्तत्पुष है । गत्यर्थक, ज्ञानार्थक और प्रत्यवसानार्थक (=भोजनार्थक) धातुओं तथा शब्दकर्मक और अकर्मक

---

१. गतिश्च बुद्धिश्च प्रत्यवसानं च गतिबुद्धिप्रत्यवसानानि तान्यर्था येषां ते गति बुद्धिप्रत्यवसानार्था (द्वन्द्वगर्भो बहुव्रीहिः) । शब्दश्चादः कर्म च शब्दकर्म तद्येषां ते शब्दकर्मणः (तत्पुरुषगर्भबहु०) । न कर्म येषां तेऽकर्मकाः (बहु०) ।

बुध्यते माणवको धर्मम् । बोधयति माणवकं धर्मम् । वेत्ति माणवको धर्मम । वेदयति माणवकं धर्मम् । प्रत्यवसानार्थानाम् —भुङ्क्ते माणवक ओदनम् । भोजयति माणवकमोदनम् । अश्नाति माणवक ओदनम्, आशयति माणवक मोदनम् । शब्दकर्मणाम्—अधीते माणवको वेदम् । अध्यापयति माणवकं वेदम् । पठति माणवको वेदम् पाठयति माणवकं वेदम् । अकर्मकाणाम्- आस्ते देवदत्तः । आसयति देवदत्तम् । शेते देवदत्तः । शाययति देवदत्तम् ।

## हृक्रोरन्यतरस्याम् (१-४ ५३)

हृक्रोः । अन्यतरस्याम् । हृ च कृ च हृकरौ तयोः (इ०द्व०) । हृक्रोरण्यन्तयोर्यः कर्त्ता स ण्यन्तयोरन्यतरस्यां कर्मसंज्ञो भवति । हरति भारं माणवकः । हारयति भारं माणवकं माणवकेनेति वा । करोति कटं देवदत्तः । कारयति कटं देवदत्तं देवदत्तेनेति वा । कर्मसंज्ञाऽभावपक्षे 'स्वतन्त्रः कर्त्ता' (१-४-५४) इति कर्त्तृसंज्ञा कर्त्तृकरणयोस्तृतीया' (२-३-१८) इति च तृतीया विभक्तिर्भवति ।

---

धातुओं का अणिजन्तावस्था में जो कर्त्ता हो, वह णिच् प्रत्यय के योग में कर्म संज्ञक होता है । गत्यर्थक—गच्छति माणवको ग्रामम् । गमयति माणवकं ग्रामम् । बुद्धयर्थक—बुध्यते माणवको धर्मम् । बोधयति माणवकं धर्मम् । वेत्ति माणवको धर्मम् । वेदयति माणवकं धर्मम् । प्रत्यवसानार्थक—भुङ्क्ते-माणवक ओदनम् । भोजयति माणवकमोदनम् । अश्नाति माणवक ओदनम् । आशयति माणवकम् ओदनम् । शब्दकर्मक—अधीतेमाणवको वेदम् । अध्यापयति माणवकं वेदम् । पठति माणवको वेदम् । पाठयति माणवकं वेदम् । अकर्मक-आस्ते देवदत्तः । आसयति देवदत्तम् । शेते देवदत्तः । शाययति देवदत्तम् । इन सब उदाहरणों में माणवक और देवदत्त जो क्रिया के प्रति स्वतन्त्रकर्त्ता थे, वे प्रयोज्य होने पर णिजन्तावस्था में कर्म हो गये और तब उनमें द्वितीया विभक्ति लगी है ।। ५२ ।।

## हृक्रोरन्यतरस्याम् (१-४-५३)

हृक्रोः ६।२ । अन्यतरस्याम् ७।१ । हृक्रोः में इ० द्वन्द्व समास है । हृ और कृ धातु का अण्यन्तावस्था में जो कर्त्ता, वह ण्यन्तावस्था में विकल्प से कर्म संज्ञक होता है । हरति भारं माणवकः । हारयति भारं माणवकं माणवकेन इति वा । करोति कटं देवदत्तः । कारयति कटं देवदत्तम् देवदत्तेन, इति वा । ण्यन्त में कर्म संज्ञा होने पर उसमें द्वितीया विभक्ति और कर्माभाव पक्ष

(वा०)—अभिवादिदृशोरात्मनेपद उपसंख्यानम् । अभिवदति गुरुं देवदत्तः। अभिवादयते गुरुं देवदत्तं देवदत्तेन वा, पश्यन्ति भृत्या राजानम् । दर्शयते भृत्यान् राजानम्, भृत्यैरिति वा ।

स्वतन्त्रः कर्त्ता (१-४-५४) -५५

क्रियाप्रसिद्धौ यः स्वतन्त्रः प्रधानभूतस्तत्कारकं कर्त्तृसंज्ञं भवति । देवदत्तः पचति । स्थाली पचति । 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (२-३-४६) इति प्रथमाविभक्तिः ।

तत्प्रयोजको हेतुश्च (१-४-५५)

तत्प्रयोजकः । हेतुः । च । तस्य प्रयोजकः तत्प्रयोजकः (ष० त०) । स्वतन्त्रस्य कर्त्तुः प्रयोजको योऽर्थस्तत्कारकं हेतुसंज्ञं भवति चात् कर्त्तृसंज्ञं च । कुर्वाणं प्रयुङ्क्ते-कारयति । हेतुसंज्ञायां सत्यां 'हेतुमति च' (३-१-२६) इति हेतुमत्यभिधेये धातोर्णिच् प्रत्ययो भवति ।

प्राग्रीश्वरान्निपाताः (१-४-५६) -९७

प्राक् । रीश्वरात् । निपाताः । 'अधिरीश्वरे' (१-४-९७) इत्येतस्माद-

---

में कर्त्तृसंज्ञा ही रहती है, जिसमें 'कर्त्तृकरणयोस्तृतीया' से (माणवकादि में) तृतीया विभक्ति हो गई ।। ५३ ।।

स्वतन्त्रः कर्त्ता (१-४-५४)

स्वतन्त्रः १।१ । कर्त्ता १।१ । क्रिया की सिद्धि में जो स्वतन्त्र-प्रधान कारक हो उसकी कर्त्तृसंज्ञा होती है। देवदत्तः पचति । स्थाली पचति । पकाने की क्रिया के प्रति देवदत्त और स्थाली स्वतन्त्र और प्रधान कारक हैं; अतः उनमें 'प्रातिपदिकार्थ०' इत्यादि से प्रथमा विभक्ति हुई ।। ५४ ।।

तत्प्रयोजको हेतुश्च (१-४-५५)

तत्प्रयोजकः १।१ । हेतुः १।१ । च (अ०) । तत्प्रयोजकः में षष्ठी-तत्पुरुष समास है । स्वतन्त्र कर्त्ता का प्रयोजक (प्रयोग करने वाला) कारक हेतु संज्ञक होता है, और कर्त्तृसंज्ञक भी । कुर्वाणं प्रयुङ्क्ते कारयति । प्रयोजक कर्त्ता (हेतु) के उपपद होने पर 'हेतुमति च' से णिच् प्रत्यय कृ धातु से परे हुआ तो अंग को वृद्धि, रपरत्वादि होकर लट्, तिप्, शप् में कारयति रूप निष्पन्न हुआ ।। ५५ ।।

प्राग्रीश्वरान्निपाताः (१-४-५६)

प्राक् (अ०)। रीश्वरात ५।१ । निपाताः १।३ । 'अधिरीश्वरे'

वधेः प्राग् येऽनुक्रमिष्यन्ते ते निपातसंज्ञा वेदितव्या। अधिकारसूत्रमिदम्। च, वा, ह। निपात संज्ञायां सत्याम् 'स्वरादिनिपातमव्ययम्' (१-१-३७) इत्यव्ययसंज्ञा भवति 'तत्तोऽव्ययादाप्सुपः' (२-४-८२) इति आप्सुपो लुग्। प्रागिति वचनं गत्युपसर्गकर्मप्रवचनीयसंज्ञाभिः सह संज्ञासमावेशार्थम्। अवचने हि 'आकडारादेका संज्ञा' (१-४-१) इति नियमादकस्यां गत्यादिसंज्ञायां जातायां द्वितीया न स्यात्।

चादयोऽसत्त्वे (१-४-५७) -५८

चादयः। असत्त्वे। च आदिर्येषां ते चादयः (बहु०)। न सत्त्वम् असत्त्वं तस्मिन् (न० त०)। चादयो निपातसंज्ञा भवन्ति न चेत्सत्त्वे (=द्रव्ये) वर्त्तन्ते। च, वा, ह, अह, एव, एवम्, नूनम् शश्वत् युगपत् इत्यादयः। इदं तदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमुच्यते। उक्तञ्च—"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते। द्रव्यमित्युच्यते सोऽर्थो भेद्यत्येन विवक्षितः" इति। उपसर्गविभक्तिस्वरप्रतिरूपकाश्चनिपाताः। उपसर्गप्रतिरूपकाः। अवदत्तं विदत्तं प्रदत्तम् इत्यादौ उपसर्गनिमित्तकः 'अच उपसर्गात्तः' (७-४-४७) इति तत्त्वं न भवति। दुर्नीतम्, दुर्नयः इत्यादौ च 'उपसर्गादसमासेऽपि णोपदेशस्य' (८-४-१४) इति णत्वं न भवति।

प्रादयः (१-४-५८) -५९

प्र आदिर्येषां ते प्रादयः (बहु०)। प्रादयोऽसत्त्वे वर्त्तमाना निपातसंज्ञा

---

(१-४-६९) सूत्र से पहले जो कुछ अनुक्रान्त होंगे, वे निपात संज्ञक कहलायेंगे। यह अधिकार सूत्र है। च, वा, ह—इनकी निपातसंज्ञा होने से 'स्वरादिनिपातमव्ययम्' से अव्ययसंज्ञा हुई, जिससे स्वादिविभक्तियों का लुक् हो जाता है। निपातसंज्ञा की अवधि निश्चित करने का प्रयोजन गति, उपसर्ग और कर्म प्रवचनीय संज्ञाओं के समावेश के लिये है॥ ५६॥

चादयोऽसत्त्वे (१-४-५७)

चादयः १।३। असत्त्वे ७।१। चादयः में बहुव्रीहि और असत्त्वे में नञ्तत्पुरुष है। च, इत्यादि गणपाठ में पठित शब्दों की निपातसंज्ञा होती है, यदि वे सत्त्ववाची (द्रव्यवाची) न हों तो। च। वा। ह। अह। एव। एवम्, इत्यादि। ये चादि सत्त्व (द्रव्य) न होकर वाक्यार्थपूरक शब्द मात्र हैं॥ ५७॥

प्रादय (१-४-५८)

प्रादयः १।३। प्रादयः में बहुव्रीहि समास है। प्र, परा, इत्यादि

भवन्ति। प्र, परा, अप, सम्, अनु, अव, निस्, निर, दुस्, दुर, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप। पृथग्योगकरणम् 'उपसर्गाः क्रियायोगे' (१-४-५९) इति वक्ष्यमाणसूत्रेण चादीनामुपसर्गसंज्ञाबाधनार्थम्।

### उपसर्गाः क्रियायोगे (१-४-५९)　　-७९

क्रियया योगः क्रियायोगस्तस्मिन् (तृ० त०)। प्रादयः क्रियायोगे उपसर्गसंज्ञा भवन्ति। प्रणायकः, प्रणयति परिणायकः। प्रादेरुपसर्गसंज्ञायां सत्याम् 'उपसर्गादसमासेऽपि णोपदेशस्य' (८-४-१४) इति धातुनकारस्य णकारः।

(वा० १)—मरुच्छब्दस्य चोपसंख्यानं कर्त्तव्यम्। मरुद्भिर्दत्तो मरुत्तः। संज्ञाविधानसामर्थ्यादनजन्तत्वेऽपि 'अच उपसर्गात्तः' इति तत्वं भवति।

(वा० २)—श्रच्छब्दस्योपसंख्यानम्। 'आतश्चोपसर्गे' (३-३-१०६) इत्यङ् प्रत्ययो भवति। श्रद्धा। 'श्रदन्तरोरुपसर्गवद्वृत्ति'रिति च वार्त्तिकम्।

### गतिश्च (१-४-६०)　　-८२

गतिः। च। गतिसंज्ञाश्च प्रादयो भवन्ति क्रियायोगे। प्रकृत्य। प्रकृतम्। यत् प्रकरोति। प्रकृत्येति प्रस्य गतिसंज्ञायां सत्यां 'कुगतिप्रादयः' (२-२-

---

असत्त्व में रहने पर निपातसंज्ञक होते हैं। ये २२ हैं। यथा—प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप। चादियों से प्रादियों को पृथक् करने का प्रयोजन चादियों की उपसर्ग संज्ञा न हो, यह है॥ ५८॥

**उपसर्गाः क्रियायोगे (१-४-५९)**

उपसर्गाः १।३। क्रियायोगे। ७।१। क्रियायोगः में तृतीया तत्पुरुष है। प्रादियों की क्रिया के साथ सम्बन्ध होने पर उपसर्ग संज्ञा होती है। प्रणयति, प्रणायकः, परिणायकः। 'ते प्राग्धातोः' से उपसर्गादि धातु से पूर्व प्रयुक्त होते हैं। उपसर्ग संज्ञा होने पर ही 'उपसर्गादसमासेऽपि०' से 'नी' धातु के नकार को णकारादेश यहाँ हुआ है॥ ५९॥

**गतिश्च (१-४-६०)**

गतिः १।१। च (अ०)। प्रादियों की गति संज्ञा भी होती है, क्रियायोग में। प्रकृत्य। प्रकृतम्। यत् प्रकरोति। प्रकृत्य में प्र की गति संज्ञा

18) इति तत्पुरुषसमासः, 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (7-1-37) इति ल्यप्प्रत्ययः। प्रकृतमिति 'गतिरनन्तरः' (6-2-49) इतिपूर्वपदप्रकृतिस्वरः। यत् प्रकरोतीति तिङः प्रसक्तस्य निघातस्य 'निपातैर्यद्यदि०' (8-1-30) इति निषेधे तिपः पित्वादनुदात्तत्वम्, विकरणस्योदात्तत्वम्। प्रशब्दस्य 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तत्वे प्राप्ते 'तिङि चोदात्तवति' (8-1-71) इति तिङन्ते उदात्तवति परतोऽनुदात्तत्वं भवति। शिष्टमनुदात्तमुदात्तादुत्तरं स्वरितं च। एतच्च प्रयोजनत्रयमुत्तरत्रापि गतिसंज्ञायां वेदितव्यम्।

(वा० 1)—कारिकाशब्दस्योपसंख्यानम्। कारिकाकृत्य। कारिकाकृतम्। यत्कारिका करोति।

(वा० 2)—पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम्। पुनरुत्स्यूतं वासो देयम्। गतिर्गतौ (8-1-70) इति निघातो भवति। चनोहितः। 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरो भवति।

## ऊर्यादिच्विडाचश्च (1-4-61)

ऊर्यादिच्विडाचः। च। ऊरी आदिर्येषां त ऊर्यादयः (बहु०)। ऊर्यादयश्च, च्विश्च, डाच्च=ऊर्यादिच्विडाचः (इ० द्व०)। ऊर्यादयः शब्दाः च्व्यन्ता डाजन्ताश्च क्रियायोगे, गतिसंज्ञा भवन्ति। ऊरीकृत्य, ऊरीकृतम्, यदूरीकरोति। उररीकृत्य, उररीकृतम्, यदुररीकरोति। च्व्यन्ताः—शुक्लीकृत्य, शुक्लीकृतम्,

---

होने पर, प्र+कृ+क्त्वा (ल्यप्), उसका सुबन्त के साथ 'कुगतिप्रादयः' से तत्पुरुष समास हुआ। तब 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' से क्त्वाप्रत्यय को ल्पबादेश हो गया। प्रकृतम् में 'गतिरन्तरः' से गति संज्ञक प्र प्रकृतिस्वर उदात्त रहा, तो शेष अनुदात्त और मध्यस्वरित हो गया। यत् प्रकरोति में 'तिङि चोदात्तवति' से 'प्र' अनुदात्त हुआ है। इस गति संज्ञा के अधिकार में जिस जिस की गतिसंज्ञा विहित है, उस उसकी निपात संज्ञा भी जाननी चाहिये ॥ 60 ॥

### ऊर्यादिच्विडाचश्च (1-4-61)

ऊर्यादिच्विडाचः 1।3। च (अ०)। ऊर्यादि० में बहुव्रीहिगर्भद्वन्द्व समास है। ऊरी, इत्यादि शब्द च्विप्रत्ययान्त और डाच् प्रत्ययान्त शब्दों की क्रियायोग में गतिसंज्ञा होती है। ऊरीकृत्य, ऊरीकृतम्, यदूरीकरोति, उररीकृत्य, उररीकृतम्, यदुररीकरोति। चव्यन्त—शुक्लीकृत्य, शुक्लीकृतम्, यच्छुक्लीकरोति, डाजन्त—पटपटाकृत्य, पटपटाकृतम्, यत्पटपटाकरोति।

यच्छुक्लीकरोति । 'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः' (५-४-५०) इति च्विः प्रत्ययः 'अस्य च्वौ' (७-४-३२) इतीत्वम् । डाजन्ताः—पटपटाकृत्य, पटापटाकृतम्, यत्पटपटाकरोति । 'अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच्' (५-४-५७) इति डाच्प्रत्ययः । 'डाचि द्वे भवत इति वक्तव्यम्' (८-१-१२ वा०) इति द्वित्वम् । 'नित्यमाम्रेडिते डाचि' इति पररूपत्वम् ।

## अनुकरणं चानितिपरम् (१-४-६२)

अनुकरणम् । च । अनितिपरम् । इतिः परो यस्मात् तदितिपरम् (बहु०) । नेतिपरम् अनितिपरम् (न० त०) । अनुकरणमनितिपरं क्रियायोगे गतिसंज्ञं भवति । खाट्कृत्य, खाट्कृतम् यत् खाट्करोति ।

## आदरानादरयोः सदसती (१-४-६३)

आदरश्चानादरश्च आदराऽनादरौ तयोः (इ० द्व०) । सच्च असच्च सदसती (इ० द्व०) आदरानादरयोर्यथाक्रमं सदसच्छब्दौ गतिसंज्ञौ भवतः क्रियायोगे । सत्कृत्य, सत्कृतम्, यत्सत्करोति । असत्कृत्य, असत्कृतम् यद-सत्करोति ।

---

गतिसंज्ञा होने से सर्वत्र समासादि कार्य हुए । शुक्लीकृत्य इत्यादि में 'अभूत-तद्भावे सम्पद्यकर्त्तरि च्विः' शुक्ल शब्द से प्रत्यय हुआ । और 'अस्य च्वौ' से अंग के अकार को ईकारादेश हुआ । पटपटाकृत्य, इत्यादि में 'अव्यक्तानुकर-णाद्०' से डाच् प्रत्यय, और 'डाचि द्वे भवतः' इस वार्त्तिक से द्वित्व हो गया ॥ ६१ ॥

### अनुकरणं चानितिपरम् (१-४-६२)

अनुकरणम् १।१ । च (अ०) । अनितिपरम् १।१ । अनितिपरम् में बहुव्रीहिगर्भ नञ्तत्पुरुष है । अनुकरण के द्योतक शब्द की क्रियायोग में गतिसंज्ञा होती है, यदि उसके परे 'इति' न हो, खाट्कृत्य । खाट्कृतम् । यत् खाट्करोति ॥

### आदरानादरयोः सदसती (१-४-६३)

आदरानादरयोः ७।२ । सदसती १।२ । दोनों पदों में इ० द्वन्द्व समास है । आदर और अनादर अर्थ में क्रमशः सत् और असत् शब्दों की क्रियायोग में गति संज्ञा होती है । आदर में—सत्कृत्य, सत्कृतम्, यत्सत्करोति । अनादर में असत्कृत्य, असत्कृतम्, यदसत्करोति ॥ ६३ ॥

### भूषणेऽलम् (१-४-६४)

भूषणे । अलम् । भूषणेऽर्थे योऽलं शब्दः स गतिसंज्ञो भवति क्रियायोगे । अलंकृत्य, अलंकृतम्, यदलंकरोति ।

### अन्तरपरिग्रहे (१-४-६५)

अन्तर् । अपरिग्रहे । न परिग्रहोऽपरिग्रहस्तस्मिन् (न० त०) । परिग्रहः स्वीकरणं तदभावोऽपरिग्रहः । तस्मिन्नर्थे अन्तःशब्दो गतिसंज्ञो भवति क्रियायोगे । अन्तर्हत्य, मध्ये हत्वेत्यर्थः । अन्तर्हतम्, यदन्तर्हन्ति ।

(वा०)—अन्तःशब्दस्याकङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्या । अन्तर्द्धा, अन्तर्द्धिः । अन्तर्णयति ।

### कणेमनसी श्रद्धाप्रतीघाते (१-४-६६)

कणे च मनस् च कणेमनसी (इ० द्व०) । श्रद्धायाः प्रतिघातः श्रद्धाप्रतीघातस्तस्मिन् (ष० त०) । कणेशब्दो मनश्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञौ भवतः क्रियायोगे । कणेहत्य पयः पिबति । मनोहत्य पयः पिबति । तावत् पिबति यावदस्याभिलाषो निवृत्तः । श्रद्धा प्रतिहतेत्यर्थः ।

---

### भूषणेऽलम् (१-४-६४)

भूषणे ७।१ । अलम् (अ०) । भूषण (सजाने) के अर्थ में अलं शब्द की क्रियायोग में गति संज्ञा होती है । अलंकृत्य, अलंकृतम्, यदलंकरोति ॥ ६४ ॥

### अन्तरपरिग्रहे (१-४-६५)

अन्तर् (अ०) । अपरिग्रहे ७।१ । अपरिग्रहे में नञ्तत्पुरुष समास है । अन्तर् (अन्तः) शब्द 'न स्वीकार करने' अर्थ में क्रियायोग में गति संज्ञक होता है । अन्तर्हत्य, (मध्य में आघात करके) अन्तर्हतम्, यदन्तर्हन्ति ॥ ६५ ॥

### कणेमनसी श्रद्धाप्रतीघाते (१-४-६६)

कणेमनसी १।२ । श्रद्धाप्रतीघाते ७।१ । कणेमनसी में इ० द्वन्द्व और श्रद्धाप्रतीघात में षष्ठीतत्पुरुष है । कणे और मनस् शब्द की श्रद्धाप्रतीघात अर्थ में गति संज्ञा होती है, क्रियायोग में । कणेहत्य पयः पिबति । मनोहत्य पयः पिबति । (छककर, अभिलाषा की निवृत्ति होने पर्यन्त, दूध या जल पीता है ।) गति संज्ञा होने पर तत्पुरुष समास हो गया ॥ ६६ ॥

## पुरोऽव्ययम् (१-४-६७) -६९

पुरः । अव्ययम् । पूर्वाधरावराणामसि पुरधवश्चैषाम् (५-३-३९) इत्यसिप्रत्ययान्तः पुरःशब्दोऽव्ययं स गतिसंज्ञो भवति क्रियायोगे। पुरस्कृत्य, पुरस्कृतम्, यत्पुरस्करोति।

## अस्तं च (१-४-६८)

अस्तम् । च । अस्तं शब्दोऽव्ययम् (अनुपलब्धौ वर्त्तमानः) गतिसंज्ञो भवति क्रियायोगे। अस्तंगत्य सविता पुनरुदेति। अस्तंगतानि धनानि। यदस्तंगच्छति।

## अच्छ गत्यर्थवदेषु (१-४-६९)

अच्छ । गत्यर्थवदेषु । गतिरर्थो येषां ते गत्यर्थाः (बहु०)। गत्यर्थाश्च वदश्च गत्यर्थवदास्तेषु (इ० द्व०)। अच्छशब्दोऽव्ययं गत्यर्थेषु धातुषु वदतौ च वर्त्तमानो गतिसंज्ञो भवति क्रियायोगे। अच्छगत्य, अच्छगतम्, यदच्छगच्छति। अच्छोद्य, अच्छोदितम्, यदच्छवदति।

---

### पुरोऽव्ययम् (१-४-६७)

पुरः (अ०)। अव्ययम् १।१। पुरस् शब्द के अव्यय होने पर गति संज्ञा होती है, क्रिया योग में। पुरस्कृत्य, पुरस्कृतम्, यत्पुरस्करोति ॥ ६७॥

### अस्तं च (१-४-६८)

अस्तम् (अ०)। च (अ०)। अस्तं शब्द यदि अव्यय (अनुपलब्धि में वर्त्तमान) हो तो उसकी गति संज्ञा होती है, क्रियायोग में। अस्तंगत्य सविता पुनरुदेति। अस्तंगतानि धनानि। यदस्तंगच्छति॥ ६८॥

### अच्छ गत्यर्थवदेषु (१-४-६९)

अच्छ (अ०)। गत्यर्थवदेषु ७।३। गत्यर्थवदेषु में बहुव्रीहि गर्भ द्वन्द्व समास है। अच्छशब्द अव्यय हो और वह गत्यर्थक एवं वद धातुओं से युक्त हो तो उसकी गति संज्ञा होती है। अच्छगत्य, अच्छगतम्, यदच्छगच्छति। अच्छोद्य, अच्छोदितम्, यदच्छवदति॥ ६९॥

### अदोऽनुपदेशे (१-४-७०)

अदः । अनुपदेशे । न उपदेशोऽनुपदेशस्तस्मिन् (न० त०) । उपदेशः परार्थप्रयोगः, तदभावः स्वबुद्धचा परामर्शमात्रमनुपदेशः । अदः शब्दः (त्यदादिषु पठ्यमानः) अनुपदेशे गतिसंज्ञो भवति क्रियायोगे । अदःकृत्य, अदःकृतम्, यददः करोति । अदःकृत्येति-एतत्कर्त्तव्यमिति स्वयमालोच्येत्यर्थः ।

### तिरोऽन्तर्द्धौ (१-४-७१) -७२

तिरः । अन्तर्द्धौ । अन्तर्द्धौ व्यवधानेऽर्थे वर्त्तमानस्तिरश्शब्दो गतिसंज्ञो भवति क्रियायोगे । तिरोभूय, तिरोभूतम्, यत्तिरोभवति ।

### विभाषा कृञि (१-४-७२) -७६, -७९

पूर्वसूत्रेण नित्यं प्राप्ते सति विभाषाऽऽरभ्यत इति प्राप्तविभाषेयम् । तिरःशब्दः करोतौ परतोऽन्तर्द्धावर्थे विभाषा गतिसंज्ञा भवति । तिरः कृत्य, तिरस्कृत्य । तिरःकृतम्, तिरस्कृतम् । यत्तिरःकरोति, यत्तिरस्करोति । अगतिपक्षे तिरःकृत्वेत्यादि । 'तिरसोऽन्यतरस्याम्' (८-३-४२) इति तिरसो गतिसंज्ञकस्य

---

**अदोऽनुपदेशे (१-४-७०)**

अदः १।१ । अनुपदेशे ७।१ । अनुपदेशे में नञ्तत्पुरुष है । अतः शब्द अनुपदेश (स्वयं विचार करने अर्थ) में गति संज्ञक होता है, क्रियायोग में । अदःकृत्य (स्वयं विचार करके), अदःकृतम्, यददःकरोति ॥ ७० ॥

**तिरोऽन्तर्द्धौ (१-४-७१)**

तिरः (अ०) । अन्तर्द्धौ ७।१ । तिरः शब्द अन्तर्द्धि (व्यवधान-अदृश्य होने) अर्थ में गति संज्ञक होता है, क्रियायोग में । तिरोभूय, तिरोभूतम्, यत्तिरोभवति ॥ ७१ ॥

**विभाषा कृञि (१-४-७२)**

विभाषा १।१ । कृञि ७।१ । तिरः शब्द कृञ् धातु के योग में विकल्प से गति संज्ञक होता है, अन्तर्द्धि अर्थ में । पूर्वसूत्र से नित्य ही गति संज्ञा प्राप्त थी, उसको विकल्पित किया गया अतः । यह प्राप्त विभाषा है । तिरःकृत्य, तिरस्कृत्य । तिरःकृतम्, तिरस्कृतम् । यत्तिरः करोति, यत्तिरस्करोति ।

विसर्जनीयस्य विकल्पेन सकारो भवति कुप्वोः परतः, तेन रूपद्वयनिष्पत्तिः। गतिसंज्ञाऽभावे समासो न भवतीति तिरःकृत्वेत्यत्र समासाश्रयल्यबादेशो न।

## उपाजेऽन्वाजे (१-४-७३)

उपाजे। अन्वाजे। इमौ शब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्त्तते, तौ कृञि विभाषा गतिसंज्ञौ भवतः। उपाजेकृत्य, उपाजे कृत्वा। अन्वाजेकृत्य अन्वाजे कृत्वा। सामर्थ्यं कृत्वेत्यर्थः।

## साक्षात्प्रभृतीनि च (१-४-७४)

साक्षात्प्रभृतीनि शब्दरूपाणि कृञि विभाषा गतिसंज्ञानि भवन्ति। साक्षात्कृत्य, साक्षात् कृत्वा। मिथ्याकृत्य, मिथ्या कृत्वा। चिन्ताकृत्य, चिन्ता-कृत्वा।

(वा०)—साक्षात्प्रभृतिषु च्व्यर्थवचनम्। कर्त्तव्यमिति शेषः। तेन च्व्यर्थेऽर्थाद्भूत तद्भावार्थे गम्यमाने साक्षात्प्रभृतयो गतिसंज्ञका भवन्ति नान्ये-त्रेति वोध्यम्। असाक्षात् साक्षात् कृत्वा-इति साक्षात्कृत्य, साक्षात् कृत्वा।

---

यहाँ गतिसंज्ञा पक्ष में 'तिरसोऽन्यतरस्याम्' से तिरस् के विसर्ग को विकल्प से सकारादेश हुआ है। गति संज्ञाऽभाव पक्ष में तिरःकृत्वा इसमें समास नहीं हुआ तो क्त्वा को ल्यबादेश भी नहीं हुआ॥ ७२॥

## उपाजेऽन्वाजे (१-४-७३)

उपाजे। अन्वाजे। ये दो विभक्ति प्रतिरूपक निपात हैं और दुर्बल की सहायता करने के अर्थ में प्रयुक्त होते हैं। उपाजे और अन्वाजे शब्द कृञ् धातु के योग में विकल्प से गति संज्ञक होते हैं। उपाजेकृत्य, उपाजे कृत्वा। अन्वाजेकृत्य, अन्वाजे कृत्वा॥ ७३॥

## साक्षात्प्रभृतीनि च (१-४-७४)

साक्षात्प्रभृतीनि १।३। च (अ०)। साक्षात् प्रभृति येषां तानि साक्षात्प्रभृतीनि। (बहुव्रीहिः)। साक्षात् इत्यादि शब्द भी कृञ् धातु के योग में विकल्प से गति संज्ञक होते हैं। साक्षात्कृत्य साक्षात् कृत्वा। मिथ्या-कृत्य, मिथ्या कृत्वा। चिन्ताकृत्य, चिन्ता कृत्वा। जो साक्षात् नहीं था, उसको साक्षात् करके इत्यादि च्व्यर्थ यहाँ समझना चाहिए॥ ७४॥

## अनत्याध्यान उरसिमनसो (१-४-७५) -७६

अनत्याध्याने । उरसिमनसी । अतितरामाधानमत्याधानमुपश्लेषणमिति यावत् । तदभावोऽनत्याधानम् (न० त०) । उरसि च मनसि च उरसिमनसी (इ०द्व०) । अनत्याध्यानेऽर्थे उरसिमनसिशब्दौ विभाषा कृञि गतिसंज्ञौ भवतः । उरसिकृत्य, उरसिकृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य मनसिकृत्वा । निश्चित्येत्यर्थः ।

## मध्येपदेनिवचने च (१-४-७६)

मध्ये । पदे । निवचने । च । मध्ये, पदे, निवचने, इत्येते शब्दा अनत्याध्याने विभाषा कृञि गतिसंज्ञा भवन्ति । मध्येकृत्ये, मध्ये कृत्वा । पदेकृत्य पदे कृत्वा । निवचनं वचनाभावः, अर्थाऽभावेऽव्ययीभावः । निवचनेकृत्य, निवचने कृत्वा । (वाचं नियम्येत्यर्थः) । उच्चारणसामर्थ्यात् सप्तम्याः समासेऽप्यलुक् । मध्येपदे शब्दौ सप्तम्यन्तप्रतिरूपकौ निपातौ ।

## नित्यं हस्ते पाणावुपयमने (१-४-७७)

नित्यम् । हस्ते । पाणौ । उपयमने । हस्ते पाणौ इत्येतौ शब्दौ कृञि

---

### अनत्याधान उरसिमनसी (१-४-७५)

अनत्याधाने ७।१ उरसिमनसी १।२ । अनत्याधान में नञ्तत्पुरुष तथा उरसिमनसी में इ० द्वन्द्व है । अनत्याधान (उपश्लेषण—चिपकाने-से रहित) अर्थ में उरसि और मनसि शब्दों की कृ के योग में विकल्प से गति संज्ञा होती है । उरसिकृत्य, उरसि कृत्वा । (स्वीकार करके) । मनसिकृत्य, मनसि कृत्वा (निश्चय करके) ।। ७५ ।।

### मध्येपदेनिवचने च (१-४-७६)

मध्ये, पदे, निवचने—ये सप्तम्यन्त प्रतिरूपक निपात हैं । च (अ०) । मध्ये, पदे और निवचने शब्द कृ धातु के योग में विकल्प से, अनत्याधान में गति संज्ञक होते हैं । मध्येकृत्य, मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनेकृत्य, निवचने कृत्वा (वाणी को नियमित करके) ।। ७६ ।।

### नित्यं हस्ते पाणावुपयमने (१-४-७७)

नित्यम् १।१ । हस्ते ७।१ । पाणौ ७।१ । उपयमने ७।१ । हस्ते और

नित्यं गतिसंज्ञौ भवत उपयमने । हस्तेकृत्य । पाणौकृत्य । दारकर्म कृत्वेत्यर्थः । सप्तम्याः पूर्ववदलुक् ।

### प्राध्वं बन्धने (१-४-७८)

प्राध्वम् । बन्धने । बन्धने वर्त्तमानः प्राध्वं शब्दोऽव्ययं कृञि गतिसंज्ञो भवति । प्राध्वंकृत्य । बन्धनेन निमित्तेनानुकूल्यं कृत्वेत्यर्थः ।

### जीविकोपनिषदावौपम्ये (१-४-७९)

जीविकोपनिषदौ । औपम्ये । जीविका चोपनिषच्च जीविकोपनिषदौ (इ० द्व०) । उपमाया भाव औपम्यम् । औपम्ये वर्त्तमानौ जीविकोपनिषच्छब्दौ कृञि गतिसंज्ञौ भवतः । जीविकाकृत्य, उपनिषत्कृत्य । जीवनोपायमिव कृत्वा, रहस्यमिव कृत्वेत्यर्थः ।

### ते प्राग्धातोः (१-४-८०) -८१

ते । प्राक् । धातोः । ते गत्युपसर्गसंज्ञका धातोः प्राक् (पूर्वे) प्रयुज्यन्ते । तथा चैवोदाहृतम् ।

---

पाणौ शब्द, नित्य ही, कृञ्धातु के योग में उपयमन (विवाह) अर्थ में गति संज्ञक होते हैं । हस्तेकृत्य । पाणौकृत्य (विवाह करके) । निपात होने से सप्तमी का अलुक् है ॥ ७७ ॥

#### प्राध्वं बन्धने (१-४-७८)

प्राध्वम् (अ०) । बन्धने ७।१ । प्राध्वं शब्द बन्धन अर्थ में कृधातु के योग में गतिसंज्ञक होता है । प्राध्वंकृत्य (बांधने के निमित्त से अनुकूल बनाकर) ॥ ७८ ॥

#### जीविकोपनिषदावौपम्ये (१-४-७९)

जीविकोपनिषदौ १।२ । औपम्ये ७।१ । जीविको० में इ० द्वन्द्व समास है । जीविका और उपनिषत् शब्द उपमा अर्थ में रहें तो उनकी कृञ्धातु के योग में गतिसंज्ञा होती है । जीविकाकृत्य (जीविका के समान करके) । उपनिषत्कृत्य (रहस्य के समान करके) ॥ ७९ ॥

#### ते प्राग्धातोः (१-४-८०)

ते १।३ । प्राक् (अ०) । धातोः ५।१ । वे गतिसंज्ञक और उपसर्ग संज्ञक शब्द धातु से पूर्व प्रयुक्त होते हैं । तदनुसार उनको इससे पूर्व (१-४-५९ से १-४-७९ सूत्रों में) उदाहृत किया गया है ॥ ८० ॥

छन्दसि परेऽपि (१-४-८१) -८२

छन्दसि। परे। अपि। छन्दसि वेदविषये गत्युपसर्गसंज्ञका धातोः परेऽपि पूर्वेऽपि प्रयुज्यन्ते। याति नि हस्तिना। नियाति हस्तिना। हन्ति नि मुष्टिना। निहन्ति मुष्टिना। निशब्दोऽत्रोपसर्गः।

व्यवहिताश्च (१-४-८२)

व्यवहिताः। च। व्यवहिता अपि गत्युपसर्गसंज्ञकाश्छन्दसि प्रयुज्यन्ते। आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। (ऋग्वेदः ३-४५-१)। धातूपसर्ग-योर्मध्ये पदत्रयस्य व्यवधानम्। आयाहि। (ऋ० ३-४३-२)।

कर्मप्रवचनीयाः (१-४-८३) -९८

यानित ऊर्ध्वमनुक्रमिष्यामस्ते कर्मप्रवचनीयसंज्ञा वेदितव्याः। कर्म-प्रवचनीयत्वे प्रयोजनं 'कर्मप्रवचनीययुक्ते द्वितीया' (२-३-८) इति द्वितीया विभक्तिः। अन्वर्था संज्ञा, कर्म प्रोक्तवन्तः कर्मप्रवचनीया इति।

---

छन्दसि परेऽपि (१-४-८१)

छन्दसि ७।१। परे ७।१। अपि (अ०)। वेदविषय में वे गत्युपसर्ग-संज्ञक शब्द धातु के परे (पश्चात्) भी प्रयुक्त होते हैं, पहले भी। याति नि हस्तिना। नियाति हस्तिना। हन्ति नि मुष्टिना। निहन्ति मुष्टिना। इन उदाहरणों में निशब्द उपसर्ग होते हुए धातु के पूर्व भी प्रयुक्त है पश्चात् भी ॥ ८१ ॥

व्यवहिताश्च (१-४-८२)

व्यवहिताः १।३। च (अ०)। वेद विषय में वे गत्युपसर्गसंज्ञक शब्द व्यवहित (उपसर्ग और धातु के बीच में व्यवधानयुक्त) भी प्रयुक्त होते हैं। आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। आयाहि। प्रथम उदाहरण में आ और याहि के मध्य तीन पदों का व्यवधान है। दूसरे उदाहरण में कोई व्यवधान नहीं है ॥ ८२ ॥

कर्मप्रवचनीयाः (१-४-८३)

कर्मप्रवचनीयाः १।३। यहां से आगे १।४।९८ सूत्र तक कर्मप्रवचनीय-संज्ञा का अधिकार है। इस अवधि में विहित शब्दों की प्रकृत सूत्र से कर्म-प्रवचनीय संज्ञा और प्राग्रीश्वरान्निपाताः से निपात संज्ञा भी होती है ॥ ८३ ॥

## अनुर्लक्षणे (१-४-८४) -८६

अनुः । लक्षणे । अनुशब्दो लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति । शाकल्यस्य संहितामनुप्रावर्षत् । अनडुद्यज्ञमन्वसिञ्चत् । अगस्त्यमन्वसिञ्चन् प्रजाः । शाकल्यस्येतिशाकल्येन सुकृतां संहितामनुनिशम्य (श्रुत्वा) देवः प्रावर्षत् इत्यर्थः ।

## तृतीयार्थे (१-४-८५)

तृतीयाया अर्थस्तृतीयार्थस्तस्मिन् (ष० त०) । अनुशब्दस्तृतीयार्थे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति । नदीमन्ववसिता सेना । पर्वतमन्ववसिता सेना । नद्या पर्वतेन वा सम्बद्धेत्यर्थः ।

## हीने (१-४-८६) -८७

हीने न्यूने द्योत्येऽनुः कर्मप्रवचनीयसंज्ञो भवति । अनुशाकटायनं वैया-

---

### अनुर्लक्षणे (१-४-८४)

अनुः १।१ । लक्षणे ७।१ । अनु शब्द लक्षण द्योतित होने पर कर्म-प्रवचनीयसंज्ञक होता है । शाकल्यस्य संहितामनुप्रावर्षत् । अनडुद्यज्ञमन्व-सिञ्चत् । अगस्त्यमन्वसिञ्चन् प्रजाः । इन उदाहरणों में शाकल्य की संहिता के पूर्ण होते ही वर्षा का होना, यज्ञ सम्पन्न होते ही मेघ का बरसना और अगस्त्य तारे के उदय होते ही वर्षा होना—यह सब निमित्त-नैमित्तिक भाव लक्षणार्थ बोधक 'अनु' इस कर्मप्रवचनीय द्वारा दर्शाया गया है । कर्मप्रवचनीय-संज्ञा होने से अनुसम्बद्ध शब्द में द्वितीया विभक्ति हो गई ॥ ८४ ॥

### तृतीयार्थे (१-४-८५)

तृतीयार्थे ७।१ । तृतीयार्थे में षष्ठीतत्पुरुष समास है । अनु शब्द तृतीया विभक्ति के अर्थ को द्योतित करे, तो भी उसकी कर्मप्रवचनीसंज्ञा होती है । नदीमन्वसिता सेना । पर्वतमन्ववसिता सेना । नदी के साथ-साथ सेना बस रही है, पर्वत के साथ-साथ सेना बस रही है—यह अर्थ है ॥ ८५ ॥

### हीने (१-४-८६)

हीने ७।१ । हीन (=न्यून) अर्थ को द्योतित करने पर भी अनु कर्म-प्रवचनीयसंज्ञक होता है । अनुशाकटायनं वैयाकरणाः । अन्वर्जुनं योद्धारः ।

करणाः । अन्वर्जुनं योद्धारः । शाकटायनमर्जुनं चापेक्ष्यान्ये हीना इत्यर्थः ।

उपोऽधिके च (१-४-८७)

उपः । अधिके । च । उपशब्दोऽधिके हीने च द्योत्ये कर्मप्रवचनीयसंज्ञो भवति । अधिके-उपखार्यां द्रोणः । उपनिष्के कार्षापणम् । खार्यां द्रोणोऽधिकः, निष्के कार्षापणमधिकमित्यर्थः । 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (२-३-९) इति कर्मप्रवचनीययुक्ते सप्तमीविभक्तिः । हीने-उपशाकटायनं वैयाकरणाः ।

अपपरी वर्जने (१-४-८८)

अपश्च परिश्च अपपरी (इ० द्व०) । अपपरिशब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसंज्ञौ भवतः । अप-अपत्रिगर्त्तेभ्यो वृष्टो देवः । परि-परित्रिगर्त्तेभ्यो वृष्टो देवः । 'पञ्चम्यपाङ्परिभिः' (२-३-१०) इति कर्मप्रवचनीययुक्ते पञ्चमीविभक्तिः । परेर्वर्जने (८-१-५) इति वा द्विर्वचनम् । त्रिगर्त्तान् वर्जयित्वा वृष्ट इत्यर्थः ।

आङ् मर्यादावचने (१-४-८९)

मर्यादाया वचनं मर्यादावचनं तस्मिन् (ष० त०) । आङित्येष शब्दो

---

शाकटायन की अपेक्षा अन्य वैयाकरण न्यून या हीन हैं; अर्जुन की अपेक्षा अन्य योद्धा न्यून हैं :—यह तात्पर्य है ।। ८६ ।।

उपोऽधिके च (१-४-८७)

उपः १।१ । अधिके ७।१ । च (अ०) । उपशब्द अधिक और हीन अर्थ का द्योतक होने पर कर्मप्रवचनीयसंज्ञक होता है । अधिक—उपखार्यां द्रोणः । उपनिष्के कार्षापणम् । (खारी में द्रोण अधिक, निष्क में कार्षापण अधिक) । हीन—उपशाकटायनं वैयाकरणाः । उपखार्याम्, उपनिष्के में सप्तमी विभक्ति 'यस्मादधिकं०' इत्यादि सूत्र से हुई ।। ८७ ।।

अपपरी वर्जने (१-४-८८)

अपपरी १।२ । वर्जने ७।१ । अपपरी में इ० द्वन्द्व समास है । अप और परि शब्द वर्जनार्थक हों तो उनकी कर्मप्रवचनीयसंज्ञा होती है । अप-त्रिगर्त्तेभ्यो वृष्टो देवः । परि-परित्रिगर्त्तेभ्यो वृष्टो देवः (त्रिगर्त्त को छोड़कर वर्षा हुई ।) 'पञ्चम्यपाङ्परिभिः' से अप के और परि के योग में पञ्चमी विभक्ति हुई ।। ८८ ।।

आङ् मर्यादावचने (१-४-८९)

आङ् १।१ । मर्यादावचने ७।१ । मर्यादावचने में ष० तत्पुरुष है ।

मर्यादावचने कर्मप्रवचनीयसंज्ञो भवति । मर्यैमनुष्यैरादीयत इति मर्यादा अवधिरित्यर्थः। आपाटलिपुत्राद् वृष्टो देवः । आकुमारं यशः पाणिनेः । आसांकाश्यात् । आमथुरायाः । "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्यात् वाक्यस्मरणयोरङित्"। विना तेन मर्यादा, सह तेनाभिविधिरिति विवेकः । पूर्ववदेवात्र पञ्चमीविभक्तिः ।

**लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः (१-४-९०) -९१**

लक्षणं चेत्थंभूताख्यानं च भागश्च वीप्सा च=लक्षणेत्थंभूताख्यानभागवीप्सास्तासु (इ० द्व०) । इत्थंभूतस्याख्यानमित्थंभूताख्यानं (ष० त०) । प्रतिश्च परिश्च अनुश्च=प्रतिपर्यनवः (इ०द्व०)। लक्षणे; इत्थंभूताख्याने, भागे, वीप्सायां च विषयभूतायां प्रति, परि, अनु-इत्येते कर्मप्रवचनीयसंज्ञा भवन्ति । लक्षणे-वृक्षं प्रति विद्योतते विद्युत् । वृक्षंपरि, वृक्षमनु । इत्थंभूताख्याने साधुर्देवदत्तो मातरं प्रति, मातरं प्रति, मातरं परि, मातरमनु । भागे-यदत्र मां प्रति स्यात्, मां परि स्यात्, मामनुस्यात् । वीप्सायाम्-वृक्षं वृक्षं प्रति सिञ्चति, परि सिञ्चति, अनु सिञ्चति ।

---

आङ् शब्द मर्यादावचन में कर्मप्रवचनीयसंज्ञक होता है । मर्यादा यहाँ अवधि है। आपाटलिपुत्राद् वृष्टो देवः। आकुमारं यशः पाणिनेः। [पाटलिपुत्र (पटना) नगर तक पानी वर्षा है; कुमारपर्यन्त पाणिनि का यश विख्यात है।] पूर्ववत् पञ्चमी हुई ॥ ८९ ॥

**लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः (१-४-९०)**

लक्षणेत्थं···वीप्सासु ७।३ । प्रतिपर्यनवः १।३ । लक्षणेत्थं···वीप्सासु में तत्पुरुषगर्भ द्वन्द्व समास है तथा प्रति० में द्वन्द्व है। लक्षण में, इत्थंभूताख्यान में (यह इस प्रकार का है—ऐसा बतलाने में), भाग में और वीप्सा (पुनरावृत्ति से कार्य करने) में प्रति, परि और अनु की कर्मप्रवचनीयसंज्ञा होती है। लक्षण—वृक्षं प्रति विद्योतते विद्युत् । वृक्षं परि०, वृक्ष मनु० । (वृक्ष की ओर या उसके ऊपर बिजली चमकते हुए दिखाई दी, अतः तल्लक्षण में वृक्ष शब्द में कर्मप्रवचनीय प्रति, परि, अनु के योग में द्वितीया विभक्ति हो गई।) इत्थंम्भूताख्यान-साधुर्देवदत्तो मातरं प्रति, मातरं परि, मातरमनु। भाग—यदत्र मां प्रति स्यात्, मां परिस्यात्, मामनु स्यात्। (यहाँ जो मेरा भाग हो।) वीप्सा—वृक्षं वृक्षं प्रति सिञ्चति, परि सिञ्चति, अनुसिञ्चति। (प्रत्येक वृक्ष को सींचता है।) सर्वत्र कर्मप्रवचनीय के योग में द्वितीया हो गई ॥ ९० ॥

## अभिरभागे (१-४-९१)

अभिः । अभागे । नभागोऽभागस्तस्मिन् (न० त०) । लक्षणादिष्वेव भागवर्जितेषु अभिः कर्मप्रवचनीयसंज्ञो भवति । वृक्षमभि विद्योतते । साधुर्देवदत्तो मातरमभि । वृक्षमभि सिञ्चति ।

## प्रतिः प्रतिनिधिप्रतिदानयोः (१-४-९२)

प्रतिनिधिश्च प्रतिदानञ्च प्रतिनिधिप्रतिदाने तयोः (इ० द्व०) । मुख्यसदृशः प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनं प्रतिदानम् । प्रतिनिधिप्रतिदानविषये च प्रतिः कर्मप्रवचनीयसंज्ञो भवति । अभिमन्युरर्जुनतः प्रति । माषानस्मै तिलेभ्यः प्रतियच्छति । 'प्रतिनिधिप्रतिदाने च यस्मात्' (२-३-११) इति पञ्चमीविभक्तिः ।

## अधिपरी अनर्थकौ (१-४-९३)

अधिश्च परिश्च अधिपरी (इ० द्व०) । न विद्यतेऽर्थान्तरं ययोस्तौ-अनर्थकौ (ब० स०) । 'ईदूदेद्०' (१-१-१४) इति प्रगृह्यसंज्ञा । अधिपरिशब्दा-

---

## अभिरभागे (१-४-९१)

अभिः १।१ । अभागे ७।१ । अभागे में नञ्तत्पुरुष है । लक्षणादि अर्थों के द्योतित होने में अभिशब्द की कर्मप्रवचनीय संज्ञा होती है, भाग अर्थ को छोड़कर । वृक्षमभि विद्योतते । साधुर्देवदत्तो मातरमभि । वृक्षमभि सिञ्चति ।। ९१ ।।

## प्रतिः प्रतिनिधिप्रतिदानयोः (१-४-९२)

प्रतिः १।१ । प्रतिनिधिप्रतिदानयोः ७।२ । प्रतिनिधि० में इ० द्वन्द्व समास है । मुख्य के जो समान हो वह प्रतिनिधि कहलाता है और दिए हुए का लौटाना प्रतिदान । प्रतिनिधि और प्रतिदान के विषय में प्रति शब्द कर्मप्रवचनीय होता है । अभिमन्युरर्जुनतः प्रति (अभिमन्यु अर्जुन का प्रतिनिधि है ।) माषानस्मै तिलेभ्यः प्रतियच्छति । (इसको तिलों के बदले में माष देता है ।) यहाँ 'प्रतिनिधि प्रतिदाने च यस्मात्' से प्रतिसम्बद्ध अर्जुन और तिल में पञ्चमी विभक्ति हुई है ।। ९२ ।।

## अधिपरी अनर्थकौ (१-४-९३)

अधिपरी १।२ । अनर्थकौ १।२ । अधिपरी में इ० द्वन्द्व और अनर्थकौ में बहुव्रीहि समास है । अधि और परि शब्द अनर्थान्तरवाची होने पर कर्म-

वनर्थकौ अनर्थान्तरवाचिनौ कर्मप्रवचनीयसंज्ञौ भवतः । कुतोऽध्यागच्छति, कुतः पर्यागच्छति । किंशब्दात 'पञ्चम्यास्तसिल्' (५-३-७) इति तसिल्प्रत्यये, 'कुतिहोः' (७-२-१०४) इति कुत्वे च कुत इति । कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञयोर्बाधितत्वाद् 'गतिर्गतौ' (८-१-७०) इति अधिपर्योः निघातो न भवति ।

## सुः पूजायाम् (१-४-९४) -९५

सुशब्दः पूजायामर्थे कर्मप्रवचनीयसंज्ञो भवति । सुसिक्तं भवता, सुस्तुतं भवता । उपसर्गसंज्ञाश्रयं षत्वं न भवति 'उपसर्गात् सुनोति०' (८-३-६५) इत्यादिना ।

## अतिरतिक्रमणे च (१-४-९५)

अतिः । अतिक्रमणे च । अतिशब्दोऽतिक्रमणे पूजायां चार्थे कर्मप्रवचनीयसंज्ञो भवति । निष्पन्नेऽपि वस्तुनि क्रियाप्रवृत्तिरतिक्रमणम् । अतिसिक्तमेव भवता । अतिस्तुतमेव भवता । पूजायाम्-अतिसिक्तं, अतिस्तुतं भवता । शोभनं कृतमित्यर्थः ।

---

प्रवचनीयसंज्ञक होते हैं । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । यहाँ अधि-परि गति या उपसर्ग न होकर कर्मप्रवचनीय हैं और आङुपसृष्ट गच्छति धातु से जुड़ने पर कोई नवीन अर्थ नहीं देते, अतः अनर्थक हैं । उनकी गतिसंज्ञा न होने पर गतिर्गतौ सूत्र से अनुदात्त भी नहीं होता ॥ ९३ ॥

### सुः पूजायाम् (१-४-९४)

सुः १।१ । पूजायाम् ७।१ । पूजार्थक सुशब्द की कर्मप्रवचनीयसंज्ञा होती है । सुसिक्तं भवता । सुस्तुतं भवता । यहाँ पर सु की उपसर्गसंज्ञा न होने पर 'उपसर्गात् सुनोति०' इत्यादि सूत्र से स्तुत, सिक्त के सकार को षत्वादेश नहीं होता ॥ ९४ ॥

### अतिरतिक्रमणे च (१-४-९५)

अतिः १।१ । अतिक्रमणे ७।१ । च (अ०) । अतिशब्द अतिक्रमण और पूजा के अर्थ में कर्मप्रवचनीयसंज्ञक होता है । अतिसिक्तमेव भवता । अतिक्रमण—अतिस्तुतमेव भवता । (आपने अधिक ही सींच डाला, आपने अधिक ही स्तुतिकर दी ।) पूजा—अतिसिक्तं भवता, अतिस्तुतं भवता । (आपने अच्छा सींचा, आपने अच्छी स्तुति की ।) ॥ ९५ ॥

### अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु (१-४-९६)

पदार्थश्च, संभावना च, अन्ववसर्गश्च, गर्हा च—समुच्चयश्च पदार्थसंभावनान्ववसर्गगर्हासमुच्चयास्तेषु (इ० द्व०)। अपिशब्दः पदार्थादिषु वर्त्तमानः कर्मप्रवचनीयसंज्ञो भवति। पदार्थे—सर्पिषोऽपि स्यात, मधुनोऽपि स्यात्। सम्भावने—अपि सिञ्चेन्मूलकसहस्रम्, अपि स्तुयाद्राजानम्। अन्ववसर्गे (कामचाराभ्यनुज्ञायां)—अपि सिञ्च, अपि स्तुहि। गर्हायाम्—धिग् जाल्मं देवदत्तम् अपि सिञ्चेत् पलाण्डुम्। अपि स्तुयाद्वृषलम्। समुच्चये – अपि सिञ्च, अपि स्तुहि। उपसर्गसंज्ञाबाधनात् षत्वबाधः।

### अधिरीश्वरे (१-४-९७) -९८

अधिः। ईश्वरे। अधिशब्द ईश्वरे स्वामिनि द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। अधिब्रह्मदत्ते पञ्चालाः, अधिपञ्चालेषु ब्रह्मदत्तः। स्वस्वामिसम्बन्धे कदाचित् स्वामिनः कर्मप्रवचनीयविभक्तिः (सप्तमी) भवति कदाचित् स्वात्।

---

### अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु (१-४-९६)

अपिः १।१। पदार्थ···समुच्चयेषु ७।३। पदार्थ० इत्यादि में इ० द्वन्द्व समास है। अपि शब्द पदार्थ (अप्रयुक्त पद के अर्थ) में, सम्भावन, अन्ववसर्ग (कामचार), गर्हा (निन्दा) और समुच्चय अर्थों में कर्मप्रवचनीयसंज्ञक होता है। पदार्थ—सर्पिषोऽपि स्यात, मधुनोऽपि स्यात् (थोड़ा घृत होना चाहिये, थोड़ा मधु होना चाहिए)। सम्भावन—अपि सिञ्चेन्मूलकसहस्रम्, अपि स्तुयाद् राजानम् (सम्भव है हजार मूलियों को सींच दे; सम्भव है राजा की स्तुति करे)। अन्ववसर्ग—अपि सिञ्च, अपि स्तुहि। (चाहो तो सींचो, चाहे नहीं; स्तुति करो चाहे नहीं)। गर्हा—धिग् जाल्मं देवदत्तम् अपि सिञ्चेत् पलाण्डुम्। अपि स्तुयाद राजानम्। समुच्चय—अपि सिञ्च, अपि स्तुहि। (सींचो भी और स्तुति भी करो)। कर्मप्रवचनीयसंज्ञा होने से, अपि के अनन्तर धातु के सकार को मूर्धन्यादेश नहीं हुआ॥ ९६॥

### अधिरीश्वरे (१-४-९७)

अधिः १। ईश्वरे ७।१। अधि शब्द ईश्वर (स्वामी) अर्थ का द्योतक होने पर कर्मप्रवचनीय होता है। अधि ब्रह्मदत्ते पञ्चालाः। अधिपञ्चालेषु ब्रह्मदत्तः। (ब्रह्मदत्त के अधीन पञ्चालदेश है; पञ्चालदेश का स्वामी ब्रह्मदत्त है)। ईश्वर अर्थ स्व-स्वामि-सम्बन्ध का वाचक है, अतः कभी स्व और कभी

'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (२-३-६) इति सप्तमीविभक्तिः ।

## विभाषा कृञि (१-४-९८)

कृञो योगेऽधिर्विभाषा कर्मप्रवचनीयसंज्ञो भवति । यदत्र मामधिकरिष्यति । कर्मप्रवचनीयसंज्ञापक्षे गतिसंज्ञाबाधनात् 'तिङि चोदात्तवति' (८-१-७१) इति निघातो न भवति । गतिसंज्ञापक्षे भवत्येव निघातः-यदत्र मामधिकरिष्यति इति ।

## लः परस्मैपदम् (१-४-९९) -१००

'लः' इति षष्ठी आदेशापेक्षा । लस्य आदेशा परस्मैपदसंज्ञा भवन्ति । तिप्तस्झि, सिप्थस्थ, मिब्वस्मस्, शतृक्वसू च ।

## तङानावात्मनेपदम् (१-४-१००)

तङानौ । आत्मनेपदम् । तङ् च आनश्च तङानौ (इ० द्व०) । तङिति प्रत्याहारो गृह्यते तातांझ, थासाथांध्वम्, इड्वहिमहिङ्-इति नवानां वचना-

---

स्वामी की कर्मप्रवचनीय संज्ञा होती है । 'यस्मादधिकं यस्य चेश्वर वचनं तत्र सप्तमी' से सप्तमी विभक्ति हुई ।। ९७ ।।

### विभाषा कृञि (१-४-९८)

विभाषा १।१ । कृञि ७।१ । कृञ् धातु के योग में अधिशब्द विकल्प से कर्मप्रवचनीयसंज्ञक होता है । यदत्र मामधिकरिष्यति । यहाँ 'तिङि-चोदात्तवति' से अधि को अनुदात्त नहीं हुआ, जबकि गति संज्ञापक्ष में उसे सर्वानुदात्त हो गया—यदत्र मामधिकरिष्यति ।। ९८ ।।

### लः परस्मैपदम् (१-४-९९)

लः ६।१ । परस्मैपदम् १।१ । लकार के आदेश परस्मैपद संज्ञक होते हैं । तिप्-तस्-झि, सिप्-थस्-थ, मिप्-वस्-मस्, शतृ और क्वसु । लट् आदि को होने वाले ये ११ आदेश परस्मैपदसंज्ञक होते हैं ।। ९९ ।।

### तङानावात्मनेपदम् (१-४-१००)

तङानौ १।२ । आत्मनेपदम् १।१ । तङानौ में इ० द्वन्द्व है । तङ् और आन आत्मनेपद संज्ञक होते हैं । तङ् यह प्रत्याहार है जो लकारादेशों का—

नाम् । आन इति शानच्कानचावुत्सृष्टानुबन्धकौ गृह्येते । तङानावात्मनेपद-संज्ञौ भवतः ।

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः (१-४-१०१) -१०४

तिङः । त्रीणि । त्रीणि । प्रथममध्यमोत्तमाः । प्रथमश्च मध्यमश्चोत्तमश्च प्रथममध्यमोत्तमाः (इ० द्व०) । तिङ इति प्रथमाबहुवचनम् । तिङोऽष्टादशप्रत्ययाः, नव परस्मैपदसंज्ञकाः नवात्मनेपदसंज्ञकाः । तत्र परस्मैपदेषु आत्मनेपदेषु च त्रयस्त्रिकाः यथाक्रमं प्रथममध्यमोत्तमसंज्ञका भवन्ति । परस्मैपदेषु तावत्-तिप् तस् झि इति प्रथमः । सिप्थस्थ इति मध्यमः । मिब्वस्मस्-इत्युत्तमः । आत्मनेपदेषु खल्वपि त आताम् झ-इति प्रथमः । थास् आथाम् ध्वम्-इति मध्यमः । इट् वहि महिङ्-इत्युत्तमः ।

तान्येकवचनद्विवचनबहुवचनान्येकशः (१-४-१०२) -१०३

तानि । एकवचनद्विवचनबहुवचनानि । एकशः । एकवचनं च द्विवचनं च बहुवचनं च एकवचनद्विवचनबहुवचनानि (इ० द्व०) । उक्तानि तिङस्त्रीणि

---

त, आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ् । आन यह शानच्-कानच् लादेशों का अनुबन्धरहित रूपान्तर है ॥ १०० ॥

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः (१-४-१०१)

तिङः ६।३ । त्रीणि १।३ । त्रीणि १।३ । प्रथममध्यमोत्तमाः १।३ । प्रथममध्यमोत्तमाः में इ० द्वन्द्व समास है । तिप् से आरम्भ कर महिङ् तक १८ प्रत्यय तिङ् कहलाते हैं, उनके तीन-तीन प्रत्ययों के त्रिक क्रमशः प्रथम (पुरुष), मध्यम (पुरुष) और उत्तम (पुरुष) संज्ञक होते हैं । प्रथम पुरुष— तिप्, तस्, झि । मध्यम पुरुष—सिप्, थस्, थ । उत्तम पु०—मिप्, वस्, मस् । इन नौ लादेशों की परस्मैपदसंज्ञा है । इसी प्रकार आत्मनेपद में—प्रथम पु०—त, आताम्, झ । मध्यम पु०—थास्, आथाम्, ध्वम् । उत्तम पु०—इट, वहि, महिङ् ॥ १०१ ॥

तान्येकवचनद्विवचनबहुवचनान्येकशः (१-४-१०२)

तानि १।३ । एकवचनद्विवचनबहुवचनानि १।३ । एकशः (अ०) । एकवचन० इत्यादि में इ० द्वन्द्व समास है । तिङ् के ये तीन-तीन त्रिकों में प्रत्येक त्रिक की क्रमशः एकवचन, द्विवचन और बहुवचन संज्ञा होती है ।

त्रीणि पदानि एकशः एकवचन-द्विवचन-बहुवचन-संज्ञानि भवन्ति। तिप्-इत्येक-वचनम्। तस्-इति द्विवचनम्। झि-इति बहुवचनम्। एवं सिबादेरपि एक-वचनादिसंज्ञा विज्ञेया।

**सुपः (१-४-१०३)** -१०३

सुपः। इदमपि प्रथमा बहुवचनम्। सुबिति प्रत्याहारोऽयं सुशब्दादारभ्य सप्तमीबहुवचनस्य-सुप्प्रत्ययस्य पकारपर्यन्तम्। सुपश्च त्रीणि त्रीणि पदानि एकश एकवचनद्विवचनबहुबचनसंज्ञानि भवन्ति। सु-इत्येकवचनम्। औ इति द्विवचनम्। जस्-इति बहुवचनम्। एवं सर्वत्र विभक्तिषु योज्यम्।

**विभक्तिश्च (१-४-१०४)**

विभक्तिः। च। त्रीणि त्रीणि विभक्तिसंज्ञाश्च भवन्ति सुपस्तिङश्च। तथोदाहृतम्।

**युस्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः (१-४-१०५) -१०६**

युष्मदि। उपपदे। समानाधिकरणे। स्थानिनि। अपि। मध्यमः। तिङां पुरुषनियमार्थोऽयमारम्भः। युष्मद्युपपदे सति व्यवहिते चाव्यवहिते च

---

तिप्-एकवचन, तस्-द्विवचन, झि-बहुवचन। सिप्-एकवचन, थस्-द्विवचन, थ-बहुवचन, इत्यादि क्रम से मिबादि की भी एकवचनादि संज्ञा जाननी चाहिये ॥ १०२ ॥

**सुपः (१-४-१०३)**

सुपः। 'सुप्' यह प्रत्याहार है, ङ्याप्प्रातिपदिक से आने वाले सुँ से सुप् पर्यन्त २१ प्रत्ययों का। उनके भी तीन-तीन प्रत्ययों के एक-एक की क्रमशः एकवचन, द्विवचन, बहुवचन संज्ञा होती है। सुँ—एकवचन और द्विवचन। जस्—बहुवचन। अम्—एकवचन, ओट्-द्विवचन, शस्-बहुवचन, इत्यादि आगे भी समझ लें ॥ १०३ ॥

**विभक्तिश्च (१-४-१०४)**

विभक्तिः १।१। च (अ०)। इन तिङ् और सुप् प्रत्ययों की विभक्ति संज्ञा भी होती है। जैसा कि ऊपर उदाहरणों से दर्शाया गया है ॥ १०४ ॥

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः (१-४-१०५)**

युष्मदि ७।१। उपपदे ७।१। समानाधिकरणे ७।१। स्थानिनि ७।१। अपि (अ०)। मध्यमः १।१। समानाधिकरणे में कर्मधारयतत्पुरुष है।

सति समानाधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्य-मानेऽपि मध्यमपुरुषो भवति । त्वं पचसि । युवां पचथः, यूयं पचथ । अप्रयुज्य-मानेऽपि-पचसि । पचथः । पचथ ।

### प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च (१-३-१०६)

प्रहासे । च । मन्योपपदे । मन्यतेः । उत्तमः । एकवत् । च । मन्यति शब्दस्यैकदेशानुकरणं मन्येति । मन्य उपपदं यस्य स मन्योपपदस्तस्मिन् (बहु०) । प्रहासे (परिहासे) गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेर्धातोश्चोत्तमः स चैकवद् भवति । एहि मन्ये ओदनं भोक्ष्यसे इति, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यसि, नहि यास्यसि, यातस्तेन ते पिता । मध्यमोत्तमयोः प्राप्तयोरुत्तममध्यमौ विधीयेते ।

### अस्मद्युत्तमः (१-४-१०७)

अस्मदि । उत्तमः । अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेऽप्यप्रयुज्य-

---

युष्मद् शब्द के उपपद रहने पर, समानाधिकरण (समान अभिधेय) रहे तो स्थानी युष्मद् शब्द का प्रयोग हो अथवा न भी हो तो मध्यम पुरुष होता है । त्वं पचसि । युवां पचथः । यूयं पचथ । युष्मत् के प्रयोग न होने पर भी —पचसि । पचथः । पचथ ।। १०५ ।।

### प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च (१-४-१०६)

प्रहासे ७।१ । च (अ०) । मन्योपपदे ७।१ । मन्यतेः ६।१ । उत्तमः १।१ । एकवत् (अ०) । च (अ०) । मन्योपपदे में बहुव्रीहि समास है । प्रहास (परिहास) प्रतीत हो रहा हो मन्यति धातु से युक्त युष्मद उपपद हो तो धातु से मध्यम पुरुष होता है और मन धातु को उत्तम पुरुष तथा एकवत् (एकवचन) प्रयोग होता है । एहि मन्ये ओदनं भोक्ष्यसे इति, नहि भोक्ष्यसे भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यमि, नहि यास्यसि, यातस्वेन ते पिता । यहाँ मन्ये में मध्यम पुरुष तथा भोक्ष्यसे एवं यास्यसि में उत्तम पुरुष प्राप्त था, उनके स्थान में क्रमशः उत्तम पुरुष और मध्यस पुरुष का विधान किया गया है ।। १०६ ।।

### अस्मद्युत्तमः (१-४-१०७)

अस्मदि ७।१ । उत्तमः १।१ । अस्मद् शब्द उपपद और समानाभिधेय

मानेऽपि उत्तमपुरुषो भवति। अहं पचामि। आवां पचावः। वयं पचामः। अप्रयुज्यमानेऽपि-पचामि। पचावः। पचामः।

## शेषे प्रथमः (१-४-१०८)

यत्र युष्मदस्मदी समानाधिकरणे उपपदे न स्तः स शेषः, तस्मिन् शेषे उपपदे समानाधिकरणे प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि प्रथमपुरुषो भवति। स पचति। तौ पचतः। ते पचन्ति। अप्रयुज्यमानेऽपि-पचति। पचतः। पचन्ति।

## परः सन्निकर्षः संहिता (१-४-१०९)

अतिशयार्थ इह परशब्दः। सन्निकर्षः प्रत्यासत्तिः। परो यः सन्निकर्षो वर्णानामर्धमात्राकालव्यवधानं स संहितासंज्ञो भवति। दध्यत्र। मध्वत्र। संहितासंज्ञायां सत्यां तद्विषये 'इको यणचि' (६-१-७७) इत्येवमादयो विधयो भवन्ति।

## विरामोऽवसानम् (१-४-११०)

विरामः। अवसानम्। विरतिर्विरामः वर्णोच्चारणाभाव इति यावत्।

---

हो, तो उसके प्रयुक्त न होने पर अथवा प्रयुक्त न होने पर भी उत्तम पुरुष होता है। अहं पचामि। आवां पचावः। वयं पचामः। अस्मद् के न प्रयुक्त होने पर—पचामि। पचावः। पचामः॥ १०७॥

### शेषे प्रथमः (१-१-१०८)

शेषे ७।१। प्रथमः १।१। मध्यम और उत्तम पुरुषों के विषय से भिन्न विषय में समानाभिधेय उपपद के प्रयुक्त रहते या न रहते प्रथम पुरुष होता है। सः पचति। तौ पचतः। ते पचन्ति। उपपद के प्रयुक्त न होने पर भी—पचति। पचतः। पचन्ति॥ १०८॥

### परः सन्निकर्षः संहिता (१-४-१०९)

परः १।१। सन्निकर्षः १।१। संहिता १।१। वर्णों का एक दूसरे से अत्यधिक सन्निकर्ष=समीपता हो (अर्थात् अर्द्धमात्रा काल के व्यवधान से अधिक काल पारस्परिक उच्चारण के मध्य में न लगे) तो वह सन्निकर्ष संहिता संज्ञक होता है। संहिता विषय में ही 'इको यणचि' (६-१-७७) इत्यादि सूत्र प्रवृत्त होते हैं॥ १०९॥

### विरामोऽवसानम् (१-४-११०)

विरामः १।१। अवसानम् १।१। विराम से अभिप्राय वर्णोच्चारण

सोऽवसानसंज्ञो भवति । दधिँ । मधुँ । वृक्षः । प्लक्षः । अवसानसंज्ञायां सत्यां तदाश्रयः 'वाऽवसाने' 'अणोऽप्रगृह्यस्यानुनासिकः' (८-४-५७।५८) इत्यणो विकल्पितानुनासिकादेशः, 'खरवसानयोर्विसर्जनीयः' (८-३-१५) इति च रेफस्य विसर्जनीयो भवति ।

इति प्रथमाध्यायस्य चतुर्थः पादः ।

इत्युप्रेत्युपाख्य जयदत्तशास्त्रिविरचितायां लघुकाशिकायां पाणिनीयाष्टक-वृत्तौ प्रथमोऽध्यायः ।

—:०:—

---

के अभाव से है । विराम की अवसान संज्ञा होती है । अवसान संज्ञावशात् दधिँ, मधुँ में 'अणोऽप्रगृह्यस्यानुनासिकः' से इकार उकार को विकल्प से अनुनासिकादेश होता है और वृक्षः प्लक्षः में प्रथमाविभक्ति एकवचन के सुँ प्रत्यय के सकार को रुत्व होने पर बचे रेफ को विसर्जनीय आदेश होता है ॥ ११० ॥

यह उप्रेत्युपनाम जयदत्तशास्त्रिविरचित लघुकाशिका के प्रथम अध्याय के चतुर्थ पाद का हिन्दी-भाषाऽनुवाद पूर्ण हुआ ॥

—:०:—

# लघुकाशिकास्थ (प्रथमाध्यायान्तर्गत) सूत्रानुक्रमणी

| पृष्ठाङ्काः | सूत्रम् | अष्टाध्यायी क्रमेण सूत्र संख्या |
|---|---|---|
| ११६ | आङो यमहनः | १-३-२८ |
| १८१ | आङ् मर्यादावचने | १-४-८९ |
| १७२ | आदरानादरयोः सदसती | १-४-६३ |
| ५५ | आदिरन्त्येन सहेता | १-१-७१ |
| १०२ | आदिर्ञिटुडवः | १-३-५ |
| ३७ | आदेः परस्य | १-१-५४ |
| २० | आद्यन्तवदेकस्मिन् | १-१-२१ |
| ४६ | आद्यन्तौ टकितौ | १-१-४६ |
| १६३ | आधारोऽधिकरणम् | १-४-४५ |
| १२९ | आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य | १-३-६३ |
| १० | इको गुणवृद्धी | १-१-३ |
| ६३ | इको झल् | १-२-९ |
| ३२ | इग्यणः सम्प्रसारणम् | १-१-४५ |
| ११० | इतरेतरान्योऽन्योपपदाच्च | १-३-१६ |
| ८६ | इद्गोण्याः | १-२-५० |
| ६१ | इन्धिभवतिभ्यां च | १-२-६ |
| १९ | ईदूतौ च सप्तम्यर्थे | १-१-१९ |
| १७ | ईदूदेद्द्विवचनं प्रगृह्यम् | १-१-११ |
| ७२ | उच्चैरुदात्तः | १-२-२९ |
| ७५ | उच्चैस्तरां वा वषट्कारः | १-२-३५ |
| १८ | उञः | १-१-१७ |
| १२५ | उदश्चरः सकर्मकात् | १-३-५३ |
| ७८ | उदात्तस्वरितपरस्य सन्नतरः | १-२-४० |
| ६८ | उदुपधाद्भावादिकर्मणोरन्यतरस्याम् | १-२-२१ |
| ११४ | उदोऽनूर्ध्वकर्मणि | १-३-२४ |
| ११५ | उद्विभ्यां तपः | १-३-२७ |
| १०० | उपदेशेऽजनुनासिक इत् | १-३-२ |
| १२१ | उपपराभ्याम् | १-३-३९ |
| १७० | उपसर्गाः क्रियायोगे | १-४-५९ |
| १३७ | उपाच्च | १-३-८४ |

| पृष्ठाङ्काः | सूत्रम् | अष्टाध्यायी क्रमेण सूत्र संख्या |
|---|---|---|
| १७७ | मध्ये पदे निवचने च | १-४-७६ |
| १३३ | मिथ्योपपदात् कृञो० | १-३-७१ |
| ४७ | मिदचोऽन्त्यात् परः | १-१-४७ |
| १४ | मुखनासिकावचनो० | १-१-८ |
| ६२ | मृडमृदगुध० | १-२-७ |
| ६८ | मृषस्तितिक्षायाम् | १-२-२० |
| १२८ | म्रियतेर्लुङ्लिङोश्च | १-३-६१ |
| १५२ | यचि भम् | १-४-१८ |
| ७५ | यज्ञकर्मण्यजपन्यूङ्ख० | १-२-३४ |
| १०६ | यथासंख्यमनुदेशः समा० | १-३-१० |
| ६६ | यमो गन्धने | १-२-१५ |
| १४९ | यस्मात् प्रत्ययविधि० | १-४-१३ |
| १८८ | युष्मद्युपपदे समाना० | १-४-१०५ |
| १४४ | यू स्याख्यौ नदी | १-४-३ |
| ५५ | येन विधिस्तदन्तस्य | १-१-७२ |
| ८९ | योगप्रमाणे च तदभावे० | १-२-५५ |
| ७० | रलो व्युपधाद्धलादेः संश्च | १-२-२६ |
| १६१ | राधीक्ष्योर्यस्य विप्रश्नः | १-४-३९ |
| १५८ | रुच्यर्थानां प्रीयमाणः | १-४-३३ |
| ६३ | रुदविदसुषग्रहि० | १-२-८ |
| १८६ | लः परस्मैपदम् | १-४-९९ |
| १८२ | लक्षणेत्थंभूताख्यान० | १-४-९० |
| १०५ | लशक्वतद्धिते | १-३-८ |
| ६४ | लिङ्सिचावात्मनेपदेषु | १-२-११ |
| १३२ | लियः संमानन० | १-३-७० |
| ८५ | लुक्तद्धितलुकि | १-२-४९ |
| १४१ | लुटि च क्लृपः | १-३-९३ |
| ८७ | लुपि युक्तवद्० | १-२-५१ |
| ८९ | लुब्योगाप्रख्यानात् | १-२-५४ |
| ६९ | वञ्चिलुञ्च्यृतश्च | १-२-२४ |

| पृष्ठाङ्काः | सूत्रम् | अष्टाध्यायी क्रमेण सूत्र संख्या |
|---|---|---|
| १४० | वा क्यषः | १-३-९० |
| ६५ | वा गमः | १-२-१३ |
| १४५ | वाऽऽमि | १-४-५ |
| १५६ | वारणार्थानामीप्सितः | १-४-२७ |
| ६० | विज इट् | १-२-२ |
| ११२ | विपराभ्यां जेः | १-३-१९ |
| १४४ | विप्रतिषेधे परं कार्यम् | १-४-२ |
| १८८ | विभवितश्च | १-४-१०४ |
| १३८ | विभाषाऽकर्मकात् | १-३-८५ |
| १८८ | विभाषा कृञि | १-४-९८ |
| १७५ | विभाषा कृञि | १-४-७२ |
| ७६ | विभाषा छन्दसि | १-२-३६ |
| २६ | विभाषा जसि | १-१-३२ |
| २४ | विभाषा दिक्समासे० | १-१-२८ |
| १२४ | विभाषा विप्रलापे | १-३-५० |
| १३५ | विभाषोपपदेन प्रति० | १-३-७७ |
| ६६ | विभाषोपयमने | १-२-१६ |
| ६० | विभाषोर्णोः | १-२-३ |
| १९० | विरामोऽवसानम् | १-४-११० |
| ९२ | विशाखयोश्च | १-२-६२ |
| ८८ | विशेषणानां चाजातेः | १-२-५२ |
| १२० | वृत्तिसर्गतायनेषु क्रमः | १-३-३८ |
| ८ | वृद्धिरादैच् | १-१-१ |
| ५६ | वृद्धिर्यस्याचामादि० | १-१-७३ |
| ९४ | वृद्धो यूना तल्लक्षण० | १-२-६५ |
| १४१ | वृद्भ्यः स्यसनोः | १-३-९२ |
| १२१ | वेः पादविहरणे | १-३-४१ |
| ११९ | वेः शब्दकर्मणः | १-३-३४ |
| १२४ | व्यक्तवाचां समुच्चारणे | १-३-४८ |
| १७९ | व्यवहिताश्च | १-४-८२ |

---

## NEW RELEASES FOR E.B.L.

1. ENCYCLOPAEDIA OF VEDĀNTA—
   Prof. Ram Murti Sharma (1993) — 450.00
2. BUDDHIST PHENOMENOLOGY : A THERAVĀDA PERSPECTIVE—Chandra B. Varma (1993) — 200.00
3. THERAVĀDA BUDDHISM (Based on Pāli Sources)
   —RONALD, S. Copleston, Ed. by Harcharn Singh
   Sobti (1993) — 250.00
4. ESSAYS ON BUDDHISM AND PĀLI LITERATURE
   —Angraj Chaudhary (1994) — 250.00
5. VIJÑAPTIMĀTRATĀSIDDHI (VIMŚATIKĀ)
   with Introduction, Translation and Commentry)—
   T. R. Sharma (1993) — 150.00
6. THE GANDHAVAMŚA (A History of Pāli Literature)
   —Bimalendra Kumar (1992) — 90.00
7. SATYA-SUDHĀ (A Critical Evoluation of Dr. Satya Vrat Shastri Creative Works)—Ed. Satya Vrat Varma
   (1993) — 700.00
8. WORD INDEX TO THE VĀKYAPADĪYA OF BHARTṚHARI—Prof. Saroja Bhate & Yashodhara Kar
   (1992) — 450.00
9. GLORY THAT WAS BUNDELKHAND
   (श्री महेन्द्रकुमार मानव अभिनन्दन ग्रन्थ)
   —Ed. Prof. K.D. Bajpai (1993) — 800.00
10. ŚAKTIVĀDA : Theory of Expressive Power of Words
    —Dr. V. P. Bhatt (1994) — 300.00
11. BHĀVNĀVIVEKA OF MAṆḌAN MIŚARA
    (English Translation with Notes)—
    Dr. V. P. Bhatt (1994) — 300.00

IIC I2.ACONSE ENCYCLOPAEDIA OF EARLY
DHBUDST PHILOSOPHY—Chandra B. Varma
(1992) — 300.00

13. DURGĀ : THEME IN VARANASI WALL PAINTINGS—Prem Shankar Dwivedi (1993) — 300.00
14. POETRY CREATIVITY AND AESTHETIC EXPERIENCE—Dr. Natwar Lal Joshi (1994) — 300.00

---

Please mail your order to : Ph. : 2520287

**Eastern Book Linkers**

(INDOLOGICAL PUBLISHERS & BOOKSELLERS)

5825, New Chandrawal, Jawahar Nagar, DELHI-110007